## ब्राह्मण-सर्वस्वीय-मूलविषयाणां

# सूचिका

हलायुध कृतं

# ब्राह्मण-सर्वस्वम्

## [ मङ्गलाचरणम् ]

दीपवद्द्योतयति यो भूर्भुवःस्वर्जगत्त्रयीम्[1] ।
सवितुस्तं वयं भर्गमपवर्गकरं स्तुमः[2] ॥ १

दधानं चतुराम्नायपूतां मुखचतुष्टयीम् ।
मुनिमाद्यं नमामस्तं [3]पङ्कजोटजवासिनम् ॥ २

त्रिदिवाभरणं [4]कालत्रयहेतुस्त्रयीमयः ।
[5]त्रिवर्गप्राप्तिसरणिस्तरणिः श्रेयसेऽस्तु वः[6] ॥ ३

त्रिलोकपूज्यां नमति त्रिसन्ध्यं यां[7] त्रिलोचनः ।
त्रिवर्गफलनिर्मात्रीं[8] गायत्रीं तामुपास्महे ॥ ४

## [ ग्रन्थकृत्-परिचयः ]

वंश्यो[9] वात्स्यमुनेर्मुनेरिव सदाचारस्य विश्रामभू-
धर्माध्यक्ष-धनञ्जयः समजनि ज्यायान्[10] परज्योतिषः[11] ।
यस्मिन् जुह्वति जातवेदसि हविर्व्योमाङ्गनव्यापिभि-
र्धूमैर्धूपितमम्बु[12] सिद्धसरितो[13] वृन्दारकैः पीयते ॥ ५

वाञ्छातिक्रमसम्भृतेऽपि[14] विभवे ज्योतिर्जटालान्[15] मणीन्
हित्वा यस्य [16]जगत्त्रयस्यमहसो जागर्ति कोषः क्रमः[17] ।
अप्येतस्य विलङ्घ्य शैलसदृशः प्राग्द्वारबद्धान् द्विपान्
[18]दूरोद्दण्डितयज्ञयूपवृषभोत्कर्षेण हर्षोऽभवत् ॥ ६

---

१ क—ख—ङ—°त्त्रयम् ।
२ ङ—नुमः ।
३ ङ—न—प—पङ्कजोदर° ।
४ ङ—ज्वालत्रय° ।
५ क—°शरणि° ।
६ त—न—नः ।
७ क—घ—त्रिसन्ध्याया ;
च—त्रिलोक्याया ।
८ क—त्रिवेदीफल° ।
९ क—वंश्ये ;
घ—ब—वंशी ;
ङ—न—प—वंशे ।
१० क—घ—ज्यायां ।
११ क—ज—परं ज्योतिषः ।
१२ क—घ—धूपितसम ।
१३ क—घ—त—सिन्धुसरिती ।
१४ त—°सम्भवेऽपि ;
न—सम्भृतोऽपि ।
१५ ङ—प—जटालीन् ।
१६ क—जगन्मयस्य ;
प—जगत्त्रयस्य ।
१७ क—क्रमः ।
१८ क—दूरोद्दण्डित° ।

अन्तःप्रमोदश्रवलीकृतपक्ष्मसूचि-[१]
सूताश्रुमौक्तिकभरालसलोचनाभिः ।
गीतां पुरः सुरवधूभिरमुष्य कीर्ति-
माख्यानसीमनि सुराधिपतिः शृणोति ॥ ७
गोच्छाषण्डो[२] दैवत-यम-नय-मति-धैर्यसम्पदां[३] वसतिः ।
प्रकृतिरिव परमपुंसस्तस्याभूदुद्यज्वनो[४] गृहिणी ॥ ८
बभूव तस्याः प्रकृतेर्महानिव
श्रेयोविलासायतनं हलायुधः ।
यत्कीर्तिरम्भोनिधिवीचिदण्ड-
दोलाधिरोहव्यसनं बिभर्ति ॥ ९ ॥
लब्ध्वा जन्म धनञ्जयाद्गुणवतः[५] श्रीलक्ष्मणक्ष्मापते-
राप्तत्वा सदृशी निजस्य वयसः प्राप्ता महापात्रता[६] ।
शब्दब्रह्म करोदरामलकवद्भोगोत्तरा[७] सत्क्रिये-
त्यस्ति प्रार्थयितव्यमस्य कृतिनः किञ्चिन्न सांसारिकम् ॥ १०
येनासीदर्जितं न सिन्धुलहरीधौताञ्चलायां[८] क्षितौ
यस्याज्ञातमभून्न सप्तभुवने नानाविधं वाङ्मयम् ।
देवः स [९]त्रिजगन्नमस्यमहिमा श्रीलक्ष्मणक्ष्मापति-
स्तेने यस्य मनीषिताधिकपुरस्कारोत्तरां सम्पदम्[१०]॥ ११
बाल्ये ख्यापितराजपण्डितपदः श्वेतांशुबिम्बोज्ज्वल-
च्छत्रोत्सिक्तमहामहत्तकपदं[११] दत्त्वा नवे यौवने ।

---

१ क—भरणीकृतपक्ष्मसृष्टे,
घ—°पक्ष्मसूत्रे ।
२ घ—गौकाषण्डो ;
ङ—गौष्टाषण्डी ;
ञ—त—न—व—गौष्ठीषु,
प—खण्डी ।
३ क—घ—दैवतमलयमति° ;
ङ—दैवतयमनयति° ;
त—न—व—दैवतममलमति° ।
४ क—°स्तस्याभूदुयज्ज्वनी ;
घ—°स्तस्याभूदुयजना,
ङ—°स्तस्यासीरामदुज्ज्वली,
ञ—°स्तस्यासीज्ज्वनी ;
त—व—°स्तस्याभूदुज्ज्वला,
न—तस्यासीज्ज्वनी ;
प—पुस्तके °स्तस्यासीदु इत्येतावत् पर्यन्तं लिखित्वा रिक्तं स्थानं रचितम् ।
५ क—न—प °र्भगवतः ।
६ त—न—व—महामात्यता ।
७ क—भोगोत्कथा ;
घ—भोगोत्करा ।
८ क—प धौतां जनायां ।
९ क—घ—त्रिजगन्नयस्य ।
१० क—ज—°त्तरां सम्पदाम् ;
ङ—प—°त्तराः सम्पदः ।
११ क१—°महोत्तरपदं ;
त—न—व—°महत्तनुपदं ;
प—°महत्तकपदं ।

यस्मै यौवनशेष-योग्यमखिलक्ष्मापाल-नारायणः
श्रीमाँल्लक्ष्मणसेनदेव-नृपतिर्धर्माधिकारं ददौ ॥ १२

आचारप्रयतान्तरा क्रतुविधावुत्साहमातन्वती
प्रायश्चित्तविकाशनाद्विदधती हर्षप्रकर्षं हृदि ।
गार्हस्थ्याङ्गपरिग्रहग्रहवती[1] निर्व्यूढवर्णस्थितिः[2]
प्राणेभ्योऽपि गरीयसी स्मृतिकथा यस्याभवत् प्रेयसी । १३

आसीत् कस्य न मन्दिरे नयनयोर्जाता न कस्यातिथिः
कण्ठे केन धृता क्षणं न कुतुकात् पण्याङ्गनेव श्रुतिः ।
धर्माध्यक्ष-हलायुधस्य सदृशो नास्याः प्रियः कोऽप्यभूद्
यः कृत्वा हृदयेऽनुरागतरलो[3] नक्तन्दिवं हृष्यति । १४

कर्णारोपितहैमकुण्डलमिलन्नीलाश्मरश्मिच्छटा-
संसर्गं प्रतिपद्य कृष्णमभवद्भूयोऽपि कृष्णाजिनम् ।
[4]किञ्चान्यन्मुखरध्वनिः कलयतो यस्येष्टिमग्न्यालये[5]
लीलाचीकररत्नकङ्कणझणत्कारैः कृतो मांसलः[6] ॥ १५

पात्रं दारुमयं क्वचिद् विजयते हैमं क्वचिद्भाजनं
कुत्राप्यस्ति दुकूलमिन्दुधवलं कृष्णाजिनं क्वापि च ।
धूमः[7] क्वापि वषट्कृताहुतिकृतो धूपः[8] परः क्वाप्यभू-
दग्नेः कर्म फलं च तस्य युगपज्जागर्ति यन्मन्दिरे ॥ १६

निःस्वाध्याये व्यपगतवषट्कारशब्दोदयेऽस्मिन्
वृत्तिच्छेदव्यसनिनि कलावस्थिचर्मावशेषः ।
हुत्वा हुत्वा विधिवदमुना दीयमानं त्रिसन्ध्यं
धूमोद्गारं विहरति हविः[9] प्राश्य मन्दाग्निरग्निः ॥ १७

---

१ त—व—परिग्रहव्रतवती ।

२ क—त—न—व—निर्गूढ°,
ङ—निर्जूष° ;
प—निर्वूह° ।

३ प—°रागधवले ।

४ क—किञ्चान्यन्मुखध्वनिः ;
ज—पश्चान्यन्मुखरध्वनिः ;
त—व—किञ्चान्यत्सुखलब्धमा°
न—किञ्चान्यन्मुखध्वनि ;
प—किञ्चान्यत्प्रखरध्वनिः ।

५ त—व—यसीऽष्टिरग्न्यालये ;
प—यस्याग्निमग्न्यालये ।

६ ज—°करवत्नं कङ्कणझणत्कारैर्गतो मासलः ;
त—व—°रणत्कारैः कृता मांसला ,
न—°रणत्कारैः कृतं सन्मनः ;
प—°करपद्मकङ्कणरणत्कारैः ।

७ प—धूपः ।

८ ज—त—न—व—धूमः ।
प—धुमः ।

९ ज—वह्निः ।

आपीय श्रुतिसम्पुटेन हृदये संस्थापिताः सूरिभि-
विन्यस्ताः सुरसद्मनिश्चलशिलापट्टान्तरे शिल्पिभिः ।
आबद्धाः[१] कविभिर्विशृङ्खलकथाबन्धैः[२] प्रबन्धैरपि
भ्राम्यन्ति प्रतिपत्तनं प्रतिगृहं प्रत्यङ्गनं यद्गुणाः ॥ २८

मीमांसासर्वस्वं वैष्णवसर्वस्वमकृत[३] शिवसर्वस्वम्[४] ।
पण्डितसर्वस्वमसौ सर्वस्वं सर्वधीराणाम्[५] ॥ १९

आसन् वा[६] कति सन्ति वा कति न किं क्ष्मामण्डले पण्डिता
व्याख्यातो मतिशालिनाऽयसुवटाचार्येण[७] वेदः परम् ।
[८]अस्पष्टं तदपीत्यनेन विदुषा विश्वप्रसिद्धैः पदैः
सन्ध्यादि-द्विजकर्म-मन्त्रवचसां व्याख्यानमेतत् कृतम् ॥ २०

आस्ते वाक्पतिसन्निभोऽपि न पुमांस्तस्मात् परः साहसी
यो वेदार्थविवेचनाय कुरुते सज्जं[९] रसज्ञान्तरम्[१०]।
किं त्वस्मिन्नुवटेन[११] वर्त्म रचितं प्रागेव चेद्विद्यते
व्याख्यानं[१२] कियदेव वेदवचसां तेनेदमारभ्यते[१३]॥ २१

अर्थं ये न विचारयन्त्यविदिते येषामृषिश्छन्दसी
ये जानन्ति न देवतां परिचयो[१४] यै र्नोपयोगे[१५] कृतः ।
विज्ञायाऽपि पदक्रमं फलवद्भिर्भावेन तैः प्रत्यहं
तादृग् दुर्वहवेदभारवहनक्लेशः[१६] परं प्राप्यते ॥ २२

---

१ प—निर्णीताः ।
२ प—गृहीतसुकथाबन्धैः ।
३ ज—यत्कृत ।
४ ङ—ञ—शैवसर्वस्वम्,
ज—शेषसर्वस्वम् ।
५ ज—यं सर्वस्वम् इत्यधिकम् ।
६ क—घ—ङ—आसन्नाः ।
७ क—मतिशालिना युगपदाचार्येण ;
ज—न—मतिशालिनोथ मुगुडाचार्येण,
त—व—नहि केनचिद्युगपदाचार्येण,
प—मतिशालिनायुगलाचार्येण ।
८ ज—न—स्पष्टं तत्तदपी° ।
९ क—सज्यं,
क१—सङ्गं ;
ख—घ—सक्तं,
त—व—संज्ञां ।
१० क१—रसज्ञं चलं ;
ञ—रसज्ञं जनम्,
त—व—रसज्ञां चलाम् ;
न—रसज्ञाननम् ।
११ क—त्वस्मिन्नृपतेन,
घ—च—तस्मिन्निगडेन,
ङ—त्वस्मिनुवडेन ;
ज—न—तस्मिन्मुगुडेन ;
त—व—तस्मिन्नुगडेन ;
प—त्वंसि धुगडेन ।
१२ क—व्याख्यातं ।
१३ क—°मावर्ण्यते ।
१४ त—व—परिचये ।
१५ त—व—°र्नोपयोगः ।
१६ प—वेदभारबहुलः क्लेशः ।

अर्थावबोधेन विना न शब्दे[१] श्रद्धा समुन्मीलति वैदिकेऽपि ।
अकारि कर्मोचित-वेदभाग-व्याख्या विमृश्येति हलायुधेन ॥२३

भ्राता पद्धतिमग्रजः पशुपतिः श्राद्धादिकृत्ये[२] व्यधा-
दीशानः कृतवान् द्विजाह्निकविधौ ज्येष्ठोऽपरः पद्धतिम् ।
तेनास्मिन्नमुना फलस्तुतिपराः प्रस्तुत्य नानास्मृतीः
सन्ध्यादि-द्विजकर्म-मन्त्रवचसां व्याख्या परं[३] ख्यापिता ॥ २४

मीमांसाव्यवसायिभिः स्मृतिपरामर्शप्रकर्षस्थितै-[४]
र्गायत्री द्विजपुङ्गवैः कति कियत्कृत्वो[५] न वा व्याकृता[६] ।
प्रामाण्यस्य कृते विलिख्य[७] वचनं नानामुनीनामृजु-[८]
व्याख्यानेऽर्पयत त्वयं दृशमिह[९] प्राज्ञाः प्रणीतोऽञ्जलिः ॥ २५

दत्त्वाऽर्थरूपं[१०] प्रथममदत्तमपरैर्भुवि ।
सर्वस्वं ब्राह्मणानां स[११] शब्दरूपमिदं ददौ ॥ २६

सूक्ष्मावबोधकमदृष्टविकाशकारि[१२]
निस्तारकं किमपि भूषितकण्ठदेशम् ।
[१३]एतन्निराविलमकारि हलायुधेन
नेत्रद्वयोविसदृशं नयनं द्विजानाम् ॥ २७ ॥

---

१ त—व—वेदे ।

२ प—स्मृत्यादिकृतेत्र ।

३ ख—घ—परा ।

४ क—ज—न—°प्रमर्षस्थितैं,
प—स्मृतिपरामर्षप्रकर्षैं. ।

५ त—न—व—कृत्वा ।

६ घ—व्याहृता ।

७ प—विलक्ष्य ।

८ ङ—ज—न—प—°मुनीना मृदु ।

९ न—व्याख्यानञ्च न तादृशं भ्रशमिह ।

१० क—दत्त्वान्नरूप,
त—दत्त्वानुरूप ।

११ ज—न—च,
प—वै ।

१२ ज—न—°विनाशकारि ।

१३ क—एतन्निवारिलमकारि,
ख—एतन्निवारणमकारि,
ज—न—एतन्निरायुधमकारि ।

## [ विषय-समुद्देशः ]

इह[1] प्रथममुद्दिष्टं ग्रन्थारम्भप्रयोजनम् ।
वेदस्याध्ययनश्लाघा ततः परमुदाहृता ॥ २८
वेदार्थस्य ज्ञानफलं[2] तदनन्तरमीरितम् ।
ऋष्यादीनां ज्ञानफलं[3] दन्तधावनकर्म च ॥ २९
प्रातःस्नानं तथा प्रातःसन्ध्या [4]च समुदाहृता[4] ।
माहात्म्यं सप्रपञ्चं च प्राणायामस्य दर्शितम् ॥ ३०
प्राणायामस्य गायत्र्या व्याख्यानं परिकीर्तितम् ।
अकारि जप्यगायत्र्या अपि व्याख्या ततः परम् ॥ ३१
दर्शितं स्नानमन्त्राणां व्याख्यानं तदनन्तरम् ।
अघमर्षणमाहात्म्यं व्याख्यादिकमुदाहृतम् ॥ ३२
ब्रह्मयज्ञक्रिया-मन्त्रा मन्त्रास्तर्पणकर्मणः ।
सूर्यार्घ्यदानमन्त्राश्च तदनन्तरमीरिताः ॥ ३३
आदित्यादिग्रहाणाञ्च पूजामन्त्राः प्रदर्शिताः ।
कृतं पुरुषसूक्तस्य व्याख्यानं तदनन्तरम् ॥ ३४
व्याख्या त्र्यम्बकमन्त्रस्य चण्डीमन्त्रस्य चेरिता ।
निरग्नेर्वैश्वदेवस्य[5] मन्त्राश्च प्रतिपादिताः ॥ ३५
श्राद्धस्य पार्वणादेश्च मन्त्रव्याख्या निवेदिता[6] ।
भोजनस्योदिता मन्त्राः सायंसन्ध्या च कीर्तिता ॥ ३६
उक्ता मन्त्राश्च शयन-गर्भाधानविधेरपि ।
मन्त्राः पुंसवनस्योक्ताः सीमन्तोन्नयनस्य च ॥ ३७
सोष्यन्तीकर्मणो मन्त्रा जातकर्मविधेरपि ।
व्याख्याता नामकरणमन्त्राश्च तदनन्तरम् ॥ ३८

---

१ त—व—इति ।
२ ज—न—वेदार्थविज्ञानफलं ।
३ ज—न—तथा ज्ञानं ।
४ क—वन्दनमीरितम् ,
प—चैवमुदीरिता ।
५ क—प—निरग्निवैश्वदेवस्य ।
६ प—तथोदिता ।

मन्त्रा निष्क्रमणस्योक्तास्तथान्नप्राशनस्य च ।
चूडाकरणमन्त्राश्च ततः परमुदाहृताः ॥ ३९
उक्तास्तथोपनयनमन्त्राश्च तदनन्तरम् ।
समावर्तनमन्त्राश्च मन्त्राः परिणयस्य च ॥ ४०
आधानस्यावसथ्याग्नेर्मन्त्राः[1] प्रोक्तास्ततः परम् ।
व्याख्याता मणिकाधानमन्त्राश्च तदनन्तरम् ॥ ४१
उक्ता मन्त्रास्तथा पिण्डपितृयज्ञविधेरपि ।
पश्वादिकर्मणो मन्त्रास्ततः परमुदाहृताः ॥ ४२
निबन्धेन समेतां यत् पाकयज्ञस्य पद्धतिम् ।
ज्येष्ठः पशुपतिश्चक्रे तेनास्माभिर्न सा कृता ॥ ४३
अन्त्येष्टिकर्मणो मन्त्रा व्याख्याताः ख्यातकीर्तिना[2] ।
दन्तधावनमारभ्य यावदन्त्येष्टिमीरिताः[3] ।
मन्त्राणां तावतामस्मिन्[4] व्याख्यानमुपदर्शितम् ॥ ४४

---

१ ज—न—प—°वसथ्यादेर्मन्त्राः ।
२ घ—च—कीर्तिवर्धनाः,
प—ख्यातिकीर्तिताः ।
३ क—°दन्त्येष्टिरीरिता' ।
४ क१—ञ—न—तावदेवास्मिन् ।

## [ ग्रन्थारम्भ-प्रयोजनम् ]

अधीत्य स्नायादित्यधिकृत्य स्मर्यते तावत् [ मनुः ३।२ ]

वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् ।
अविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसेत् ॥

इति । अनेन च मनुवचनेन वेदत्रयं वेदद्वयमेको वा वेदोऽध्येतव्यत्वेन प्रतिपाद्यते । तत्रापि पारस्करेण [ पा गृ २।६।५ ]

विधिर्विधेयस्तर्कश्च वेदः षडङ्गमेके

इति विशेष उक्तः । एतच्चाध्ययनं गुरुकुले स्थित्वा ब्रह्मचारिणा कर्तव्यमित्याह मनुः [ २।१६५ ]

तपोविशेषैर्विविधैर्व्रतैश्च विधिचोदितैः[१] ।
वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना ॥

इति । तदित्थं सरहस्य इत्यनेन कृत्स्न एव वेदो ब्राह्मणेनार्थतो ग्रन्थतश्चाध्येतव्य इति व्यवस्थिते[२] वेदाध्ययन-वेदार्थज्ञानमन्तरेण गार्हस्थ्याश्रमस्याधिकार एव न स्यात् । तदनधिकारे च सकलकर्मानधिकार एव । यतः [ मनुः २, १६८ ]

योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥

इति वदता मनुना वेदाध्ययन-वेदार्थज्ञान-पराङ्मुख-ब्राह्मणस्य शूद्रत्वमेव प्रतिपादितम् । तत्र च कलावायुःप्रज्ञोत्साहश्रद्धादीनामल्पत्वादुत्कल-पाश्चात्त्यादिभि-[३] र्वेदाध्ययनमात्रं क्रियते राढीयवारेन्द्रैस्त्वध्ययनं विना कियदेव[४] वेदार्थस्य कर्ममीमांसाद्वारेण यज्ञेतिकर्तव्यताविचारः क्रियते । न चैतेनापि मन्त्रात्मकवेदार्थ-ज्ञानम् । मन्त्रार्थज्ञानस्यैव[५] च प्रयोजनं यतस्तत्परिज्ञान एव शुभफलं तदज्ञाने च दोषः श्रूयते ।

तथा च योगियाज्ञवल्क्यः—[ १, ३१-३५ ]

यस्तु जानाति तत्त्वेन आर्षं छन्दश्च दैवतम् ।
विनियोगं ब्राह्मणञ्च [६]मन्त्रार्थज्ञानकर्म च ॥

---

१ ज—न—विधिनोदितैः ,
त—व—विधिदेशितैः ।
२ क—व्यवस्थितेः ;
ज—त—न—व—प—स्थिते ।
३ ङ—ज—°मल्पत्वादुत्कलपाश्चात्यादिभि°
प—°मल्पत्वाकुलपाश्चात्यादिभि° ।
४ क—कियदेकवेदार्थं ;
ङ—कियदेकदेश ;
त—व—कियदेक ।
५ प—मन्त्रानुज्ञानस्यैव ।
६ ज—वेदार्थं ज्ञान° ।

एकैकस्या ऋचः सोऽभिवन्द्यो[1] ह्यतिथिवद्भवेत्।
देवतायाश्च सायुज्यं गच्छत्यत्र न संशयः॥
पूर्वोक्तेन प्रकारेण ऋष्यादीन् वेत्ति यो द्विजः।
अधिकारी भवेत्तस्य रहस्यादिषु कर्मसु॥
मन्त्रे मन्त्रे प्रयत्नेन ज्ञातव्यं ब्राह्मणेन तु।
विज्ञाते[2] परिपूर्णन्तु स्वाध्यायफलमश्नुते॥
छन्दांस्ययातयामानि भवन्ति फलदान्यपि।

तद्व्यतिरेके[3] योगियाज्ञवल्क्यः [ १, २८ ]

अविदित्वा तु यः कुर्याद्याजनाध्यापनं जपम्।
होममन्तर्जलादीनि तेभ्योऽल्पाल्पफलं[4] भवेत्॥
आपद्यते स्थाणुगर्तं स्वयं वापि प्रमीयते।

तथा [ योगिया १, २९ ]

अन्तर्जलादिके जप्य इतरेषामजानताम्।
नाधिकारोऽस्ति मन्त्राणामेवं स्मृतिनिदर्शनम्॥ इति।

अतो वेदाध्ययनविधेर्वेदाध्ययनानन्तरं वेदमन्त्रार्थज्ञाने हि तात्पर्यम्। एतैस्तु राढ़ीयवारेन्द्रकैरर्थविचार एव केवलः क्रियते। एवं चोभयोरपि ग्रन्थार्थतो वेदज्ञानं नास्त्येव। तद्वरं वेदैकदेशस्यापि यथाविध्यध्ययनं कृत्वाऽर्थविचारः क्रियत इत्युचितं भवति। तथा च यमः

न शूद्रो वृषलो नाम[5] वेदो हि वृष उच्यते॥
यस्य विप्रस्य तेनालं स वै वृषल उच्यते॥
तस्माद् वृषलभीतेन ब्राह्मणेन प्रयत्नतः।
एकदेशोऽप्यध्येतव्यो यदि सर्वो न शक्यते॥

तथा व्यासः—अधीत्य यत्किञ्चिदपि वेदार्थाधिगमे[6] रतः।
स्वर्गलोकमवाप्नोति धर्मानुष्ठानविद्द्विजः॥

तथा—समुचितं स्तोकमपि श्रुताधीतं विशिष्यते।
चतुर्णामपि वेदानां केवलाध्ययनाद्द्विजात्॥

ततश्चैकदेशस्याध्ययनेन गार्हस्थ्याश्रमाधिकारो भवत्येव।

इत्थमेकदेशस्याध्ययने कर्तव्ये संशयः—किं स्वेच्छया यः कश्चिदेको भागोऽध्ये-

---

१ क१—प—सोऽपि वन्द्यो।
२ क१—विज्ञान, ङ—प—विज्ञाने।
३ प—तथा व्यतिरेके।
४ योगिया—तस्य चाल्पफलं।
५ प—श्रेयो।
६ ङ—वेदार्थभिगमे।

तव्यः [१]किं तृतीयो भागश्चतुर्थो वाऽध्येतव्य [१]उतानुष्ठानोचितभागो वा। तत्र च यदि वा पाठक्रमानुरोधेन प्रथमभाग एकोऽधीयते तदा तस्मिन् भागे सन्ध्यास्नानाद्याह्निक-गर्भाधानादिक्रियाकाण्डोपयुक्तमन्त्राणां सर्वेषामसम्भवात् तदनुष्ठानं न सम्भवति। तद्वरं सन्ध्यास्नानाद्याह्निक-गर्भाधानादिसंस्काराग्न्याधानादिक्रिया-काण्डोपयुक्तमन्त्रभाग एवाध्येतुं युज्यते। अस्यैवाध्ययनेन वेदस्यैकदेशाध्ययनं पर्यवस्यति। यत्तु केचित्

> गायत्रीमात्रसारोऽपि[२] वरं विप्रः सुयन्त्रितः।
> नायन्त्रितस्त्रिवेदोऽपि सर्वाशी सर्वविक्रयी॥ [ मनु २, ११८ ]

इति मन्वादिवचनदर्शनादेकदेशशब्देन गायत्रीमात्रमेवेच्छन्ति तदयुक्तम्। स्नानाद्य-नुष्ठान-मन्त्रानभिज्ञस्य स्नानादिष्वेवायोग्यत्वात्तेषां गायत्रीजपाधिकारितैव न भवतीति सुदूरनिरस्तं गायत्रीमात्रसारत्वम्। गायत्रीमात्रसार इति वचनस्य तु निन्दितप्रतिग्रहाद्यसत्क्रियानिवृत्तस्य स्नानसन्ध्याद्यनुष्ठानशालिनो विज्ञातार्थ-गायत्रीजपनिरतस्य निन्दितप्रतिग्रहाद्यसत्क्रियायुक्तत्रिवेदविद्ब्राह्मणात् श्रेष्ठत्व-प्रतिपादने तात्पर्यं न तु सकलवेदानुष्ठानरहितस्य गायत्रीमात्रपरत्वे तात्पर्य-मिति।

तदेवं व्यवस्थिते शास्त्रार्थे कृत्स्नवेदाध्ययनासमर्थानां राढीयवारेन्द्रकद्विजा-तीनां काण्वशाखिवाजसनेयिनां कर्मानुष्ठानार्थं प्रातर्दन्तधावनादिशयनान्ताह्निकगर्भा-धानादिविवाहान्तसंस्काराग्न्याधानाद्यन्त्येष्टिपर्यन्तगार्ह्यकर्मोपयुक्तमन्त्रव्याख्याप्रस्तो - तव्या। तत्र भारतवर्षे कर्मभूमावत्यन्तदुर्लभ-मानुष्यलाभ-प्रशंसायां सप्तद्वीपा-नभिधाय जम्बुद्वीपाधिकारे

विष्णुपुराणम्—[ २, ३, २२-२६ ]

> अत्रापि भारतं श्रेष्ठं जम्बुद्वीपे महामुने।
> यतो हि कर्मभूरेषा ततोऽन्या भोगभूमयः॥
> अत्र जन्मसहस्राणां सहस्रैरपि सत्तम।
> कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसञ्चयात्॥
> गायन्ति देवाः किल गीतकानि धन्यास्तु ये भारतभूमिभागे।
> स्वर्गापवर्गास्पदहेतुभूते भवन्ति भूयः पुरुषाः सुरत्वात्॥
> कर्माण्यसङ्कल्पिततत्फलानि संन्यस्य विष्णौ परमात्मरूपे[३]।
> अवाप्य तां कर्ममहीमनन्ते तस्मिल्लँयं ये त्वमलाः प्रयान्ति॥

---

१ किमित्यादिरुतेत्यन्तो ग्रन्थः न—प—व—पुस्तकेषु नास्ति।

२ मनुसंहितायां तु सावित्रीमात्रसारोऽपीति पाठो दृश्यते।

३ प—परमार्थरूपे।

जानीम नैतत् क्व वयं विलीने स्वर्गप्रदे कर्मणि देहबन्धम् ।
प्राप्स्याम धन्याः खलु ते मनुष्या ये भारते नेन्द्रियविप्रहीणाः[1] ॥

महाभारते—सुदुर्लभतरं प्राप्य मानुष्यमपि यो नरः ।
[2]धर्मावमन्ता कामात्मा[2] भवेत् स खलु वञ्चितः ॥
इहैव नरकव्याधिचिकित्सां न करोति यः ।
गत्वा निरौषधं स्थानं स रुजः[3] किं करिष्यति ॥

अतोऽपि ब्राह्मण्य-प्रशंसायां महाभारते शुकानुशासने
[ महा शान्ति ३२१, २२-२४ ]

सम्पतन्मोहजालानि[4] कदाचिदिह मानुषे ।
ब्राह्मण्यं लभते जन्तुस्तत् पुत्र परिपालय ॥
ब्राह्मणस्य तु देहोऽयं न कामार्थाय जायते ।
इह क्लेशाय तपसे प्रेत्य त्वनुपमं सुखम् ॥

ब्राह्मण्यं बहुभिरवाप्यते तपोभिस्तल्लब्ध्वा न रतिपरेण हेलितव्यम् ।
स्वाध्याये तपसि दमे[5] च नित्ययुक्तः क्षेमार्थी कुशलपरः सदा यतस्व ॥

कात्यायनः—वेदे तथात्मज्ञाने च ब्राह्मणो यत्नवान् भवेत् ।
एष धर्मस्य सर्वस्य चतुर्वर्गस्य साधकः ॥

## अथ वेदाध्ययन-प्रशंसा

मनुः [ २, १६६ ]—वेदमेव सदाभ्यस्येत् तपस्तप्स्यन्[6] द्विजोत्तमः ।
वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते ॥

शङ्खः [ १, ४० ]—यज्ञानां तपसाञ्चैव शुभानाञ्चैव कर्मणाम् ।
वेद एव द्विजातीनां निःश्रेयसकरः परः ॥

याज्ञवल्क्यः [ १२, ४१ ]
वेद एव सदाभ्यस्यो वेदश्चक्षुः सनातनः ।
भूतं भव्यभ्भविष्यञ्च सर्वं वेदात् प्रसिध्यति ॥

---

°न्द्रियधर्महीना' ।
°र्मावमन्तकी यो वै ।
। रोगी ।
—°देहजालानि ।

५ ङ—यमे च
त—दमेन ,
प—दाने च ।
६ ञ—°स्तप्यन् ।

बृहस्पतिः [ सं २२२ ]—एवं दण्डादिकैर्युक्तं संस्कृत्य तनयं पिता ।
वेदमध्यापयेद् यत्नाच्छास्त्रं मन्वादिकं तथा ॥

व्यासः—धर्मशुद्धिमभीप्सद्भिर्न वेदादन्यदिष्यते ।
धर्मस्य कारणं शुद्धं मिश्रमन्यत् प्रकीर्तितम् ॥
अतः स परमो धर्मो यो वेदादवगम्यते ।
अवरः[१] स तु विज्ञेयो यः पुराणादिषु स्थितः ॥

याज्ञवल्क्यः [ ३, ३१० ]—वेदाभ्यासरतं शान्तं महायज्ञक्रियापरम् ।
न स्पृशन्तीह पापानि महापातकजान्यपि ॥

मनुः [ २, १६७ ]—आ हैव स नखाग्रेभ्यः परमं तप्यते तपः ।
यः स्रग्व्यपि द्विजोऽधीते स्वाध्यायं शक्तितोऽन्वहम् ।

यमः—तपस्तप्यति योऽरण्ये मुनिर्मूलफलाशनः ।
ऋचमेकां च योऽधीते तच्च तेन समं भवेत् ॥

दक्षः [ २, ३१ ]—वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः ।
तद्दानञ्चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा ॥

यमः—न शूद्रो वृषलो नाम वेदो हि वृष उच्यते ।
यस्य विप्रस्य तेनालं स वै वृषल उच्यते ।
तस्माद् वृषलभीतेन ब्राह्मणेन प्रयत्नतः ।
एकदेशोऽप्यध्येतव्यो यदि सर्वो न शक्यते ॥

अत्रैकदेशपदेन यावदनुष्ठानोपयुक्तवेदभागोऽपेक्षितः ।

मनुः [ २, १५७ ]—यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः
यश्च विप्रोऽनधीयानस्त्रयस्ते नाम बिभ्रति ॥
यथा षण्ढोऽफलः स्त्रीषु यथा गौर्गवि चाफला ।
यथा चाज्ञेऽफलं दानं तथा विप्रोऽनृचोऽफलः ॥

तथा [ २, १५८ ]—योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥

शङ्ख-लिखितौ—न शास्त्रं शरणं[२] कुर्यान्न वेदमनधीत्यान्यां विद्यामधीयीतान्यत्र वेदाङ्गस्मृतिभ्यः ।

व्यासः—श्रुतिः स्मृतिश्च विप्राणां नयने द्वे विनिर्मिते ।
काणः स्यादेकया हीनो[३] द्वाभ्यामन्धः प्रकीर्तितः ॥

---

१ ख—अधमः ; ङ—न—अधरः ; प—अपरः ।
२ ज—सवनं, प—शतवत् ; क्वचित्क ब्र—अफलं ।
३ ज—°देकपाठीनो ।

मनुः [ २, २६५ ]—तपोविशेषैर्विविधैर्व्रतैश्च विधिनोदितैः ।
वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना ॥

तथा [ मनु ३, २ ]—वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् ।
अविप्लुत-ब्रह्मचर्यो गृहस्थाश्रममाविशेत् ॥

योगियाज्ञवल्क्यः—[ ११, ३० ]
वेदोऽधीतो [1]नयेच्छुद्धिं भ्रंशितो नरकप्रदः ।
[2]न्यायेनेष्टं नयेत्[2] स्वर्गं पुनरावृत्तिलक्षणम्[3] ॥

व्यासः—ऋक्पादमप्यधीयीत मार्गेणोक्तं न धर्मवित् ।
न त्वेव चतुरो वेदानन्यायेन कदाचन ॥

मनुः [ २, ११६ ]—ब्रह्म यस्त्वननुज्ञातमधीयानादवाप्नुयात् ।
स ब्रह्मस्तेयसंयुक्तो नरकं [4]चैव गच्छति[4] ॥

व्यासः—ऋग्यजुःसामसंज्ञं यन्न्यायतोऽधिगतं द्विजैः ।
पात्रत्वमापादयति नाक्रमेण सुबह्वपि ॥

योगियाज्ञवल्क्यः [ ११, १६-१७ ]
नासंयममधीतानि तारयन्ति कदाचन ।
ऋगेका संयमस्थस्य अधीता तारयेदपि ।
आमपात्रे यथा न्यस्तमापो दधि घृतं पयः ।
नश्यन्ति पात्रदौर्बल्यात् तरसा[5] तच्च भाजनम् ॥

इति वेदाध्ययन-प्रशंसा ॥

## अथ वेदार्थज्ञान-प्रशंसा

तत्र व्यास-संहितायां[6] कूर्मपुराणे [ उ १४, ८७-८८ ]
न वेदपाठमात्रेण सन्तोषं कारयेद्गुरुः ।
पाठमात्रावसानस्तु पङ्के गौरिव सीदति ॥
योऽधीत्य विधिवद्विप्रो वेदार्थं न विचारयेत् ।
स सान्वयः शूद्रसमः पात्रतां न प्रपद्यते ॥

---

१ योगिया°—ददच्छुद्धिं ।
२ योगिया°—न्यायेनेष्टो ददत् ।
३ योगिया—°त्तिकारकम् ।
४ क—ङ—प्रतिपद्यते ।
५ ज—ते रसाः ;
त—न—ते रसा ।
६ बल्लालसेनकृत-दानसागरे लघुव्यास-नाम्नोद्धृतमिदं वचनम् ।

व्यासः—वेदस्याध्ययनं सर्वं धर्मशास्त्रस्य चापि यत् ।
अजानतोऽर्थं[1] तत् सर्वं तुषाणां कण्डनं[2] यथा ॥
तथा—यथा पशुर्भारवाही न तस्य [3]भजते फलम्[3] ।
द्विजस्तथार्थानभिज्ञो न वेदफलमश्नुते ॥
तथा—पाठमात्ररतान् नित्यं द्विजातींश्चार्थवर्जितान् ।
पशूनिव च तान् प्राज्ञो वाङ्मात्रेणापि नार्चयेत् ॥
श्रुतहीनमधीतं यन्नेह चामुत्र तद्भवेत् ।
श्रुतन्तु केवलमपि समुद्धाराय कल्प्यते ॥

बृहद्यमः[4]

स स्थाणुवद्भारवाहः किलाभूदधीत्य वेदं न विवेद योऽर्थम् ।
योऽर्थवित् स फलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा ॥[5]
व्यासः—योऽधीते नार्थतत्त्वज्ञस्तस्य तद्धारणं वृथा ।
भारवाहीव भृतकः केवलं क्लेशभाग् भवेत् ॥
तस्मादर्थपरिज्ञाने यत्नः कार्यो विजानता ।
तथा—ज्ञानं कर्म च संयुक्तं मुक्त्यर्थं[6] कथितं यथा[7] ॥
अधीतं श्रुतसंयुक्तं तथा श्रेष्ठं न केवलम् ॥
तथा—अधीत्य यत्किञ्चिदपि वेदार्थाधिगमे रतः ।
स्वर्गलोकमवाप्नोति धर्मानुष्ठानविद् द्विजः ॥
मनुः [ १२, १०२ ]—वेदशास्त्रार्थतत्त्वज्ञो यत्र तत्राश्रमे वसन् ।
इहैव लोके संतिष्ठन् ब्रह्मभूयाय कल्प्यते ॥
व्यासः—समुच्चितं श्लोकमपि श्रुताधीतं विशिष्यते ।
चतुर्णामपि वेदानां केवलध्यायनाद् द्विजात् ॥
तथा—अनूचानाद् ग्रन्थिनः श्रेष्ठा ग्रन्थिभ्यो धारिणो वराः ।
धारिभ्यश्चार्थतत्त्वज्ञास्तेभ्योऽप्यध्यात्मचिन्तकाः ॥

इति वेदार्थ-ज्ञानप्रशंसा ॥

---

१ क—ज—त—अजानतार्थं ।
२ क—फल्गुनं ।
३ ज—फलभाग् भवेत् ।
४ ख—बृहद्व्यासः ।
५ 'स्थाणुरयम्' इति 'न विजानाति' इति 'अर्थज्ञ इत् सकलम्' इति च यास्कीय-निरुक्त-(१, १८) धृतः संहितोपनिषद्ब्राह्मणीयः (३) पाठः ।
६ क—ज—युक्त्यर्थं ।
७ क—ज—मया ।

## आर्षि-दैवत-छन्दो-ब्राह्मण-विनियोग-ज्ञानप्रशंसा

तत्र योगियाज्ञवल्क्यः [ १, २१-२७ ]

यस्तु जानाति तत्त्वेन आर्षं छन्दश्च दैवतम् ।
विनियोगं ब्राह्मणं च [1]मन्त्रार्थज्ञानकर्म च ॥
एकैकस्या ऋचः[2] सोऽभिवन्द्यो ह्यतिथिवद्द्विवेत् ।
देवतायाश्च सायुज्यं गच्छत्यत्र न संशयः ॥
पूर्वोक्तेन प्रकारेण ऋष्यादीन् वेत्ति यो द्विजः ।
अधिकारी भवेत्तस्य रहस्यादिषु कर्मसु ॥
मन्त्रे मन्त्रे प्रयत्नेन ज्ञातव्यं ब्राह्मणेन तु ।
विज्ञाते परिपूर्णन्तु स्वाध्यायफलमश्नुते ॥
छन्दांस्ययातयामानि भवन्ति फलदान्यपि ।
श्रेयश्च लभते सोऽत्र धर्ममायुश्च विन्दति ॥
दिव्यं वर्षसहस्रन्तु स्वस्थानैर्ऋषिभिः सह ।
तिष्ठते तत्र तैः सार्धं [3]तत्तुल्यश्चैव जायते[3] ॥

तथा [ योगिया १, २७-३१ ]

आर्षं छन्दश्च दैवत्यं विनियोगस्तथैव च ।
वेदितव्यं प्रयत्नेन ब्राह्मणेन विपश्चिता ॥
अविदित्वा तु यः कुर्याद् याजनाध्यापनं जपम् ।
होममन्तर्जलादीनि तेभ्योऽल्पाल्पफलं[4] भवेत् ॥
आपद्यते स्थाणुगर्तं स्वयं वापि प्रमीयते ।
यातयामानि छन्दांसि भवन्त्यल्पफलान्यपि[5] ॥
अन्तर्जलादिके जप्य इतरेषामजानताम् ।
नाधिकारोऽस्ति मन्त्राणामेवं स्मृतिनिदर्शनम्[6] ॥
अल्पमात्रफलं तस्य होमादन्तर्जलाज्जपात् ।
स्वाध्यायाद् याजनाच्चैव भवति[7] नात्र संशयः ॥

---

१ ज—ङ—वेदार्थं ज्ञान°
प—मन्त्रार्थं ज्ञान° ।
२ प—ऋषेः ।
३ त—प—तुल्यश्चैव प्रदीप्यते ।
४ योगिया—तस्य चाल्पफलं ।
५ ङ—ज—प्रभवन्त्यफलानि च ।
प—भवन्त्यफलदान्यपि ।
६ क—ख—मेतच्छास्त्रनिदर्शनम् , ङ—प—मेतच्छ्रुति ।
७ क—भवन्ति ; ज—भवेत्ते
प—लभेत्ते ।

व्यासः—अविदित्वा ऋषिं छन्दो दैवतं योगमेव च ।
योऽध्यापयेद् याजयेद्वा[1] पापीयान् जायते तु सः ॥

छन्दोगब्राह्मणम् [ आर्षेय ब्रा १, १ ]

यो ह वा अविदितार्षेयच्छन्दोदैवतविनियोगेन ब्राह्मणेन मन्त्रेण याजयति वाध्यापयति [2]स्थाणुं वर्च्छति[2] गर्तं वा पद्यति प्र वा मीयते पापीयान् भवति। यातयामान्यस्य छन्दांसि भवन्ति। अथ यो मन्त्रे मन्त्रे वेद सर्वमायुरेति[3]। अयातयामान्यस्य च्छन्दांसि भवन्ति। तस्मान्मन्त्रे मन्त्रे विद्यादिति।

योगियाज्ञवल्क्यः [ १, ३८-४४ ]

[4]येन यदृषिणा दृष्टं[4] सिद्धिः प्राप्ता च येन वै ।
मन्त्रेण तस्य तत् प्रोक्तमृषिभावस्तदार्षकः[5] ॥
छादनाच्छन्द[6] उद्दिष्टं वाससी इव चाकृतेः[6] ।
आत्मा तु छादितो [7]देवैर्मृत्योर्भीतैस्तु वै[8] पुरा ।
आदित्यैर्वसुभी रुद्रैस्तेनच्छन्द इति स्मृतम्[9] ॥
यस्य यस्य तु मन्त्रस्य उद्दिष्टा या च देवता ।
तदाकारं भवेत्तस्य दैवतं देवतोच्यते ॥
पुराकल्पे समुत्पन्ना मन्त्राः कर्मार्थमेव च[10] ।
अनेनेदन्तु कर्तव्यं विनियोगः स उच्यते ॥
निरुक्तं यत्तु मन्त्रस्य समुत्पत्तिः[11] प्रयोजनम् ।
प्रतिष्ठानं स्तुतिश्चैव [12]ब्राह्मणं चाभिधीयते ॥
एवं पञ्चविधं योगं[13] जप्यकाले त्वनुस्मरेत् ।
होमे चान्तर्जले योगी[14] स्वाध्याये याजने तथा ॥

---

१ ज—जपेद्वापि ।
२ प—स्थाणुमृच्छति ।
३ ङ—ज—प—सर्वमाप्नोति ।
४ प—ऋषिणा येन यद्दृष्टं ।
५ ङ—ज—न—°दात्मिकः ;
प—°दार्षकः ;
योगिया—°दार्षकम् ।
६ ख—वाससी वाथ संस्कृतम् ;
ङ—ज—त—न—वाससीवाथवा कृते ;
योगिया—°माकृतेर्वाससी यथा ।
७ क—वेदैः ।
८ ज—तैः ।
९ प—छन्दांसि ते तु वै ;
योगिया—छन्दांसि तानि वै ।
१० घ—कर्मार्थसिद्धये ।
११ प—विनियोगः ।
१२ ज—प—ब्राह्मणचा° ;
योगिया—ब्राह्मणं तदिहोच्यते ।
१३ प—प्रोक्तं ।
१४ क—त्यागी ।

तथा यजुर्वेदभाष्ये स्मृतिः [ उवट-कृत-मन्त्रभाष्यम् १।१ ]

स्वरो वर्णोऽक्षरं मात्रा तत्प्रयोगोऽर्थ एव च ।
मन्त्रं जिज्ञासमानेन वेदितव्यं पदे पदे ॥

इत्यावसथिक-महाधर्माध्यक्ष-श्रीहलायुधकृतौ[1] ब्राह्मणसर्वस्वे वेदाध्ययन-वेदार्थज्ञान-र्व्यादिज्ञान प्रशंसा[2] ॥

---

## अथ दन्तधावनम्

तत्र नारदः

उत्थाय नेत्रे प्रक्षाल्य शुचिर्भूत्वा समाहितः ।
परिजप्य च मन्त्रेण भक्षयेद्दन्तधावनम् ॥

वृद्धशातातपः

मुखे पर्युषिते नित्यं भवत्यप्रयतो नरः ।
तस्मात् सर्वप्रयत्नेन भक्षयेद्दन्तधावनम् ॥

नरसिंहपुराणम् [ ५८, ४६ ]

मुखे पर्युषिते नित्यं भवत्यप्रयतो नरः ।
तस्माच्छुष्कमथार्द्रं वा भक्षयेद्दन्तधावनम् ॥

[3]भगवन्तमधिकृत्य वराहपुराणम्[4]

अकृत्वा दन्तकाष्ठन्तु यो हि मामुपसर्पति ।
सर्वकालकृतं कर्म तेन चैकेन नश्यति[5] ॥

विष्णुः [ ६१, १६ ]

प्रक्षाल्य भुक्त्वा तज्जह्याच्छुचौ देशे प्रयत्नतः ॥

व्यासः—प्रक्षाल्य च शुचौ देशे दन्तधावनमुत्सृजेत् ।
पतितेऽभिमुखे सम्यग् [6]भोज्यमाप्नोत्यभीप्सितम् ॥

वराहपुराणम्

[7]अमावास्यां तु यो मूढो [8]दन्तकाष्ठन्तु भक्षयेत्[8] ।
सोमस्तु हिंसितस्तेन हिंसिता[9] च वसुन्धरा ॥

---

१ ख—°महाधर्माधिकारिक° ।
२ प—खण्डान्तपुष्पिकेयं नास्ति ।
३ ख—ङ—त—प—भागवतमधिकृत्य ।
४ ख—नरसिंहपुराणम् ; प—ब्रह्मपुराणम् ।
५ ख—दुष्यति ।
६ प—भोग्य° ।
७ त—अमायाञ्चैव ।
८ प—भक्षयेद्दन्तधावनम् ।
९ ख—भक्षिता ।

नरसिंहपुराणम् [ ५८, ५० ]

प्रतिपद्दर्शषष्ठीषु नवम्यां चैव सत्तमाः ।

दन्तानां काष्ठसंयोगो दहत्यासप्तमं कुलम् ॥

तथा [५०, ५१] अलाभे दन्तकाष्ठानां [1]प्रतिषिद्धे तथा दिने[1] ।

अपां द्वादश गण्डूषैर्मुखशुद्धिर्विधीयते[2] ॥

पारस्करः [ २, ६, १७ ]—औदुम्बरेण दन्तान् धावेत ।

**अन्नाद्याय व्यूहध्वं सोमो राजायमागमत् ।**

**स मे मुखं प्रमार्क्ष्यते यशसा च भगेन च ॥१॥**

[ पा गृ २, ६, १७ । हि गृ १, १०, १ । आपम २, ७, १९ ]

हे वनस्पते व्यूहध्वं व्यूहस्व[3] अवगमं कुरु । वनस्पतीनां राजा सोमोऽयं वनस्पतिं त्वामागमत् आगतवान् । स त्वं चन्द्रसहितो वनस्पतिर्मे मम मुखं प्रमार्क्ष्यते शोधयतु[4] । केन—यशसा च भगेन च कीर्त्या सौभाग्येन चेत्यर्थः । किमर्थम्—अन्नाद्याय अन्नञ्च आद्यञ्च तदर्थमन्नाद्यर्थं [5]नानाभक्ष्यभोज्यार्थमित्यर्थः । वनस्पतिशब्दोऽत्राध्याहरणीयः । तेन यं वनस्पतिं चन्द्र आगतः स चन्द्रसहितो वनस्पतिः अन्नाद्यार्थं नानाभक्ष्यार्थं च मम मुखं यशःसौभाग्याभ्यां शोधयिष्यतीति । अत्र वनस्पते सावधानो भव इति याच्ञा वाक्यार्थः । व्यूहध्वमिति ऊह वितर्के इत्यस्य तिङां तिङो भवन्तीति मध्यमपुरुषैकवचने बहुवचनम् । प्रमार्क्ष्यते मृजूष शुद्धौ इत्यस्य लृडन्तस्य[6] रूपम् ।

इति ब्राह्मणसर्वस्वे दन्तधावनम् ॥

---

१ क—निषिद्धायां तथा तिथौ ;
 ख—प्रतिषिद्धे ऽथवा दिने ।

२ क—गण्डूषैर्विदध्याद्दन्तधावनम् ।

३ क—ङ—व्यूहस्वेति ।

४ ख—ग—शोधयिष्यसि ।

५ ङ—ञ—°भक्ष्यभोगार्थं° ।

६ ख—घ—लङन्तस्य ; ङ—लङन्तस्य ।

# अथ प्रातःस्नानम्

हलायुधो[1] गौड़महोमहेन्द्र-निसृष्ट-धर्मद्वय-कान्तकीर्तिः[2] ।
प्राभातिकस्नानविधान-मन्त्रव्याख्यानमेतद्घटयाम्बभूव[3] ॥

---

तत्र दक्षः [ २, १० ]—प्रातरुत्थाय यो विप्रः प्रातःस्नायी सदा भवेत् ।
[4]सप्तजन्मकृतं पापं त्रिभिर्वर्षैर्व्यपोहति ॥

तथा [ २, ११ ]—उषस्युषसि यत् स्नानं सन्ध्यायामुदिते रवौ ।
प्राजापत्येन तत्तुल्यं महापातकनाशनम् ॥

उषसि अरुणोदये । सन्ध्यायां प्रभाते प्रागुदयात् । उदिते उदयादूर्ध्वमुहूर्ते । एतच्च पूर्वपूर्वासम्भवे द्रष्टव्यम् ।

विष्णुः [ ६४, ८ ] प्रातःस्नाय्यरुणकिरणग्रस्तां प्राचीमवलोक्य स्नायात् ।

तथा [ ६४, ४१ ] अलक्ष्मीः कालकर्णी च दुःस्वप्नं दुर्विचिन्तितम् ।
अप्मात्रेणाभिषिक्तस्य नश्यन्त इति धारणा ॥

अत्र कालकर्णी[5] दुर्गतिविशेषः ।

दक्षः [ २, ८ ]
[6]क्लिद्यन्ति हि प्रसुप्तस्य इन्द्रियाणि स्रवन्ति[7] च ।
अङ्गानि समतां यान्ति उत्तमान्यधमानि च ॥

[ २, ६ ] अस्नात्वा नाचरेत् कर्म जपहोमादिकञ्च न ।
लालास्वेदसमाकीर्णः शयनादुत्थितः पुमान् ॥

[ २, ७ ] अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः ।
स्रवत्येष[8] दिवा रात्रौ प्रातःस्नानं विशोधनम् ॥

[ २, १२ ] प्रातःस्नानं प्रशंसन्ति दृष्टादृष्टकरं[9] हि तत् ।
[10]सर्वमर्हति शुद्धात्मा[10] प्रातःस्नायी जपादिकम् ॥

---

१ प—इन्द्रायुधो ।
२ क—°धर्मद्रवकाण्डकीर्तिः, ज—°निसृष्टि-धर्मद्वयकाण्डकीर्तिः ; प—°धर्मद्वयमीनकीर्तिः ।
३ त—°मेतद्द्व्ढयाम्बभूव ; श्लोकोऽयं घ-पुस्तके नास्ति ।
४ प—शतजन्म° ।
५ प—दुःसहदुहितेत्यधिकम् ।
६ ङ—च्छिद्यन्ति ; ज—खिद्यन्ति ; न—खिद्यन्ति ।
७ न—ज्वरन्ति ।
८ ज—स्रवनेत्रव ।
९ ख—°दृष्टफलं ।
१० ङ—सर्वकर्मविशुद्धात्मा ; ख—सर्वमर्हति पूतात्मा ।

योगियाज्ञवल्क्यः [ ६, २६ ]

उभे सन्ध्ये च स्नातव्यं ब्राह्मणैश्च गृहाश्रितैः[१] ।
तिसृष्वपि हि सन्ध्यासु स्नातव्यं तु तपस्विना ॥

उभे सन्ध्ये इति प्रातर्मध्याह्नञ्च। तपस्विनेति तपःप्रधानेन[२] यतिना वानप्रस्थेन वा।

छन्दोगपरिशिष्टे कात्यायनः [ २, २, ६ ]

अल्पत्वाद्धोमकालस्य बहुत्वात् स्नानकर्मणः ।
प्रातर्न तनुयात् स्नानं होमलोपो विगर्हितः ॥

न तनुयाद् विस्तारविधिना न कुर्यादित्यर्थः। अनुदयहोमिना[३] साग्निना होम-कालातिक्रमभिया संक्षिप्तस्नाने क्रियमाणे कोदृशं कृत्वा करणीयमित्याकाङ्क्षायां योगियाज्ञवल्क्यः [ ७, १६८-१७० ]

योऽसौ विस्तरशः प्रोक्तः स्नानस्य विधिरुत्तमः ।
असामर्थ्यान्न कुर्याच्चेत्तत्रायं विधिरुच्यते ॥
स्नानमन्त्रर्जले चैव मार्जनाचमने तथा ।
जलाभिमन्त्रणञ्चैव तीर्थस्य परिकल्पनम्[४] ॥
अघमर्षणसूक्तेन त्रिरावृत्तेन नित्यशः ।
स्नानाचरणमित्येतत् समुद्दिष्टं महात्मभिः ॥
अन्यांश्च वारुणान्मन्त्रान् कामतः संप्रयोजयेत् ।
यथाकालं यथादेशं[५] ज्ञात्वा[६] ज्ञात्वा विचक्षणः ॥

अथवा व्यासोक्तसंक्षिप्तप्रातःस्नानमाचरणीयम्।

तथाच व्यासः— अन्तर्जले ऋतं सत्यं जपेत्त्रिरघमर्षणम् ।

तथा चापरसंक्षिप्तप्रातःस्नाने दक्षः [ २, १८ ]

सन्ध्यास्नानमुपगन्तेन मध्याह्ने च ततः पुनः[७] ॥ इति ।

सन्ध्यामुपासितुं प्रातःस्नानमुपगन्तेन द्रुपदाघमर्षणादिकाब्दैवत्यमन्त्रमात्रेण संक्षिप्य कर्तव्यम्। मध्याह्ने च ततः पुनरिति[८] मध्याह्नस्नानं यथोक्त-विस्तर-विधिनैव[९] कर्तव्यमिति प्रतिभाति।

अथवाऽतिसंक्षिप्तेन पैठीनसिविधिना स्नातव्यम्।

---

१ ङ—ज—गृहाश्रमैः।
२ ज—पुस्तके नास्ति।
३ ज—अनुदयिहोमिना।
४ ख—परिकीर्तनम्।
५ ज—प—यथायोगं।
६ ज—प—देशं।
७ ङ—ज—परम्।
८ ङ—ज—परमिति।
९ ङ—ज—यथोक्तविस्तरं विनैव; प—यथोक्तविधिनैव।

यथा पैठीनसिः—हिरण्यवर्णेति सूक्तेन स्नात्वा शौचं कृत्वाऽपां मध्ये त्रीन् प्राणायामान् कुर्यादिति ।

यदा तु निरग्नेः सन्ध्यातिक्रमे[१] त्वरा नास्ति तदा तेन यथाविधानमेव स्नानं कृत्वा सन्ध्योपासनं करणीयम् ।

यथा छन्दोगपरिशिष्टे कात्यायनः ( १, १०, १ )

यथाऽहनि तथा प्रातर्नित्यं स्नायादनातुरः ।
दन्तान् प्रक्षाल्य नद्यादौ गेहे चेत्तदमन्त्रवत् ॥

गेहे चेत्तदमन्त्रवदिति वर्षासु पानीयपतनभयाद्धेमन्ते शिशिरभयादत्यन्तवातातपभयाद्वा यदा गृहाभ्यन्तरेऽवश्यकर्तव्यतया प्रातःस्नानं करोति तदा तेन देहप्रक्षालनरूपममन्त्रकमेव स्नानं करणीयमित्यर्थः ।

जाबालिः— अशिरस्कं भवेत् स्नानं स्नानाशक्तौ तु कर्मिणाम् ।
आर्द्रेण वाससा वापि मार्जनं दैहिकं विदुः ॥

कर्मिणामिति जपहोमादिकारिणामित्यर्थः ।

योगियाज्ञवल्क्यः [ ६, २७ ]

कालदोषादसामर्थ्यान्न शक्नोति यदा ह्यसौ ।
तदा ज्ञात्वा ऋषिभ्यस्तु मन्त्रैर्दृष्टं तु मार्जनम्[२] ॥

कालदोषादिति अतिपीड़ाहेतोः शैत्यादेरित्यर्थः । असामर्थ्यादिति स्नानसंवर्धनीयपीड़ायोगादित्यर्थः । ज्ञात्वा ऋषिभ्यस्तु मन्त्रैरिति

[ योगिया ६, १८ ]

शन्न आपस्तु द्रुपदा आपोहिष्ठाऽघमर्षणम् ।
एतैश्चतुर्भिर्ऋङ्मन्त्रैर्मार्जनं[३] समुदाहृतम् ॥

मार्जनमिति मन्त्रस्नानमित्यर्थः ।

तथा [ ६, ३० ] अप्रायत्ये समुत्पन्ने स्नानमेव तु कारयेत् ।
पूर्वोद्दिष्टैस्तथा मन्त्रैरन्यथा मार्जनं स्मृतम् ॥ इति

अप्रायत्ये स्नानापनेयशय्यासंयमाद्यपावन इत्यर्थः । स्नानमेव तु कारयेदिति अशक्तमपि स्नानं कारयेदित्यर्थः ।

---

१ क—घ—सन्ध्यादिकर्म ;
ख—सन्ध्याकालातिक्रम ;
त—होमादिकर्म ।

२ ज—मार्जयेत् ।

३ ज—प—°श्चतुर्भिर्मन्त्रैस्तु मार्जनं ।

## अथ काम्यप्रातःस्नानम्

तत्र विष्णुः [ ९०, २८ ]

य इच्छेद्विपुलान् भोगान् चन्द्रसूर्यग्रहोपमान्।
प्रातःस्नायी भवेन्नित्यं द्वौ मासौ माघफाल्गुनौ ॥

यमः— प्रातःस्नायी च सततं द्वौ मासौ माघफाल्गुनौ।
देवान् पितॄन् समभ्यर्च्य सर्वपापैः प्रमुच्यते ॥

विष्णुः [ ९८, ४] कार्तिकं सकलं मासं प्रातःस्नायी जितेन्द्रियः।
जपन्[1] हविष्यभुग् दान्तः सर्वपापैः प्रमुच्यते ॥

एतच्च काम्यप्रातःस्नानं प्रातःस्नानं सन्ध्योपासनं प्रातर्होमं च कृत्वा[2] स्वकल्पोक्तविधिविस्तरेणैव मध्याह्नस्नानवत्[3] कर्तव्यम्। यत एतन्माघादिविहितं स्नानं किञ्चिदुदितसूर्ये क्रियत इति सदाचारः।

---

## अथ प्रातःस्नानमन्त्रव्याख्या

तत्र योगियाज्ञवल्कीय-संक्षिप्तप्रातःस्नाने मृत्तोयैरङ्गशौचादिरूपं [4]मल-स्नानमाचर्य-तीर्थावाहनं कुर्यात्।

यथा स्नानसूत्रे हारीतः—इमं म इत्युदकावर्तनम्[5]।

तत्र मन्त्रो यथा

**इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या।**
**असिक्न्या मरुद्वृधे वितस्तयार्जिकीये शृणुह्या सुषोमया ॥२॥**

[ ऋ स १०, ७५, ५। तै आ १०।१।१३। निरु ९।२६ ][6]

---

1 घ—सकृत्।

2 क—घ—दत्वा

3 प—मध्याह्नस्नानं।

4 ख—मन्त्रस्नानं, घ—मलापकर्षणं;
न—मार्जनस्नानं।

5 ङ—इति तीर्थावाहनम्;
ज—इति तीर्थावगाहनम्।

6 आकरग्रन्थे 'शुतुद्रि' इति 'शृणु ह्या सुषोमया' इति च मन्त्रपाठो दृश्यन्ते। तस्मिन् पक्षे सुषोमेति नदीविशेषस्याभिधानम्।

हे गङ्गे हे यमुने हे सरस्वति हे शतद्रु हे मरुद्‌वृधे हे आर्जिकीये मया मम आशिषः आशंसाः शृणुहि मदीयाशंसाः शृणुतेत्यर्थः। कास्ताः[१] आशंसा इत्याकाङ्क्षायामाह।—मे मदर्थं मदीयस्नाननिमित्तं परुष्ण्या आसिक्न्या वितस्तया सह इमं स्तोमं सचत समवेता भवत अस्मिन् पुरोवर्तिस्नानजलस्तोमे समवेता भवतेत्यर्थः।

## ततो मार्जनम्

तत्र छन्दोगपरिशिष्टम् [ २, १, ४ ]

रक्षार्थं वारिणात्मानं परिक्षिप्य[२] समन्ततः।
शिरसो मार्जनं कुर्यात् कुशैः सोदकबिन्दुभिः॥

तत्र मार्जन-प्रशंसायां योगियाज्ञवल्क्यः [ ७, १८६-१८७ ]

आपोहिष्ठेति मार्जयेत्।
अर्धया च क्षिपेदूर्ध्वमर्धया च क्षिपेदधः॥
अधोभागविसृष्टाभिरसुरा यान्ति संक्षयम्।
सर्वतीर्थाभिषेकस्य ऊर्ध्वं संमार्जनाद्भवेत्॥

अग्निपुराणम्[३] [ वङ्गिपु ५ ( १३क-पत्रे )]

आपो हि ष्ठेति सन्ध्यायां पठेत् प्रयतमानसः।
मूर्ध्नि भूमौ तथाकाशे आकाशे च पुनर्भुवि॥
मूर्ध्नि भूमौ पुनर्मूर्ध्नि भूमौ कुर्यात् प्रमार्जनम्[४]।

शङ्खः [ ८, १६-१७ ]

आचम्यैवं पुरा प्रोक्ष्य तीर्थसंमार्जने[५] तु ये।
[६] मन्त्रास्तैर्मन्त्रितं तोयं मूर्ध्नि भूमौ तथा क्षिपेत्॥
क्षिप्तेन मूर्ध्नि तोयेन पापमस्य प्रणश्यति।
भूमिक्षिप्तेन हन्यन्ते असुरा देवशत्रवः॥

---

१ ख—घ—त—न—कास्तौ।

२ घ—परिवेष्ट्य।

३ ब्राह्मणसर्वस्वे ऽस्मिन्नग्निपुराणीयतयोद्धृतानि वचनानि तन्नाम्ना प्रथिते पुराणे नोपलभ्यन्ते। 'एशियाटिक सोसाइटि' स्थिते वह्निपुराण-पुस्तके (Manuscript No. 8090) यङ्गेनैव तानि लब्धानि।

४ क—तु मार्जनम्, ङ—ज—स्वमार्जनम्; घ—त—न—सुमार्जनम्।

५ घ—सम्मार्जयेत् यः; घ—°सम्मार्जयन्ति ये।

६ ख—मन्त्रैस्तै।

व्यासः[1] — विप्रुषोऽष्टौ क्षिपेदूर्ध्वमधो यस्य क्षयाय च ॥

तत्रापोहिष्ठामन्त्रस्य ऋषिच्छन्दोदेवताविनियोगकथने पुनर्योगियाज्ञवल्क्यः [ ७, १७८ ]

सिन्धुद्वीपो भवेदार्षं गायत्रं छन्द एव हि ।
आपस्तु दैवतं प्रोक्तं विनियोगश्च मार्जने ॥
सर्वत्र मार्जनं कर्म अब्लिङ्गानामुदाहृतम्[2] ॥

[3]आपोहिष्ठेत्यादिमन्त्रत्रयस्य सिन्धुद्वीप ऋषिर्गायत्रीच्छन्द आपो देवता मार्जने विनियोगः ।

**आपो हि ष्ठा मयो भुवस्ता न ऊर्जे दधातन ।**
**महे रणाय चक्षसे ॥३॥**

[ वा स ११, ५०, ३६, १४ । ऋ स १०, ९, १ ]

हे आपः हि यस्मात् यूयं मयः सुखं तस्य भुवः भावयित्र्यः स्थ भवथ सुखदायिन्यो भवथेत्यर्थः । ता तस्मात् नोऽस्मान् ऊर्जे[4] अन्नाय दधातन स्थापयत । किं च महे महते रणाय रमणायाय चक्षसे दर्शनाय दधातनेति पूर्वेणैव सम्बन्धः । अयं वाक्यार्थः ।—हे आपः यस्मात् यूयं सुखं प्रापयत तस्मात् कारणात् [5]अस्मानैहिकेनार्थेनामुष्मिकेण च महारमणीयदर्शनेन परब्रह्मणा संयोजयत इत्यप्सु प्रार्थना । अत्र ष्ठा इति कृतमूर्धन्यस्यास्तेर्लडादेशमध्यमपुरुषबहुवचनान्तस्य प्रयोगः । दधातनेति दधातेर्लोण्मध्यमपुरुषबहुवचनस्य स्थाने तप्तनप्तनथनाश्चेति ( पा ७, १, ४५ ) तनबादेशः । ता इति तच्छब्दात् ङसेः सुपां सुलुगित्यादिसूत्रेण ( पा ७, १, ३९ ) डादेशः । महते इत्यस्य पदस्य छान्दसत्वादकारतकारयोर्लोपे सति महे इति भवति । रमणीयायेत्यस्य मकारेकारयकाराणां लोपात् रणायेति भवति । आपो हि ष्ठा इत्याकारः संहितायामिव[6] पठ्यमानः[7] पदेऽपठ्यमानत्वान्न व्याकृतः[8] ।

**यो वः शिवतमो रसस्तस्य भाजयतेह नः ।**
**उशतीरिव मातरः ॥४॥**

[ वा स ११, ५१, ३६, १५ । ऋ स १०, ९, २ ]

---

१ त—यमः, प—नास्ति ।
२ ख—सदैवतमुदाहृतम् ;
न—सर्वदैवतमुदाहृतम् ।
३ क—न—आपोहिष्ठेति मन्त्रस्य,
ख—आपोहिष्ठेत्यृक्त्रयस्य ;
त—आपोहिष्ठेत्यादित्रयस्य ।
४ ख—बलाय इत्यधिकम् ।
५ क—अस्मानैहिकेनानेन्ना° ।
६ क—त—संहितायां ।
७ ध—पठ्यमानत्वात् ।
८ त—व्याहृतः ।

हे आपः वो युष्माकं यो रसो निर्यासः। किम्भूतः—शिवतमः अत्यन्तकल्याणरूपः। तस्य रसस्य इह लोके[1] अस्मान् भाजयत भागिनः कुरुत। तेन रसेन संबद्धानस्मान् कुरुतेत्यर्थः। किम्भूता यूयमापः—उशतीः इच्छन्त्यो मातर इव इच्छायुक्तमातृसमा इत्यर्थः। अयं वाक्यार्थः—हे आपः यथा सस्नेहा मातरः पुत्रान् कल्याणयुक्तान् कुर्वन्ति तथा यूयमपि कल्याणात्मकयुष्मदीयरसेन अस्मान् सम्बद्धान् कुरुतेत्यप्सु प्रार्थना। उशतीरिति वश कान्तावित्यस्य शत्रन्तस्य प्रथमाबहुवचने रूपम्। वा छन्दसीति ( पा ६, १, १०६ ) विकल्पेन पूर्वसवर्णादेशविधानात् पक्षे पूर्वसवर्णत्वम्।

**तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ।**

**आपो जनयथा च नः ॥५॥**

[ वा स ११, ५२। ऋ स १०, ९, ३ ]

हे आपोः वो युष्माकं तस्मै तस्मिन् रसे अरम् अलं पर्याप्तिं गमाम गच्छामः। तत्र युष्मदीयरसविषये तृप्तिं गच्छाम इत्यर्थः। किञ्च तत्रैव रसविषये नोऽस्मान् यूयं जनयथ च तद्रसभोक्तृत्वेनास्मान् यूयं परिकल्पयथेत्यर्थः। तस्य कस्य—यस्य रसस्य क्षयाय क्षयस्य स्थानस्य ब्रह्मादिस्तम्बपर्यन्तस्य जगतः जिन्वथ प्रीणयथ यस्य रसस्य ब्रह्मादिस्तम्बपर्यन्तं स्थानं यूयं प्रीणयथेत्यर्थः। अयं वाक्यार्थः—हे आपः युष्माकं यस्य रसस्य ब्रह्मादिस्तम्बपर्यन्तं स्थानं यूयं प्रीणयथ तस्य रसस्य विषये वयं तृप्तिं गच्छामः। यूयं च [2]तद्रसभोगमस्माकं परिकल्पयथ इत्यप्सु प्रार्थना। तस्मै क्षयाय इत्युभयत्रापि सुपां सुपो भवन्तीति [3]सप्तमीषष्ठीस्थाने चतुर्थी। जिन्वथेति जिविः प्रीणनार्थः। तस्य [4]लण्मध्यमपुरुषबहुवचनान्तस्य रूपम्। अथवा हे आपः वो युष्माकं यस्य रसस्य। किम्भूतस्य—क्षयस्य स्थानस्य ब्रह्मादिस्तम्बपर्यन्तजगदाधारभूतस्य जिन्वथ प्रीणयथ तस्मै रसाय वयम् अरं शीघ्रं गच्छामः। ततश्च नोऽस्मान् जनयथ अस्माकं तं रसं यूयं परिकल्पयथेत्यर्थः।

ततो मार्जनानन्तरमाचमनम्

तत्र प्रजापतिर्ऋषिः सोमो देवता विराट् छन्द ऋजीषकुम्भप्लावने विनियोगः।

---

१ ख—घ—लोके इति नास्ति।

२ क—तद्रसभाजनं ; ङ—तद्रसभोगत्वं।

३ क—ख—घ—ङ—न—सप्तमीस्थाने।

४ ङ—लोण्मध्यम°।

समुद्रे ते हृदयमप्स्वन्तः सं त्वा विशन्त्वोषधीरुतापः ।
यज्ञस्य त्वा यज्ञपते सूक्तोक्तौ नमोवाके विधेम यत् स्वाहा ॥
[ का स ९, २५ । वा स ८, २५ । तै स १, ४, २, ४५ । का श्री १०, ९, १ ]

हे यज्ञपते सोम ते तव हृदयं समुद्रे अप्स्वन्तः जलमध्ये । गतमित्यर्थः । जलस्थो भवानित्यभिप्रायः । तत्रस्थं त्वा त्वाम् ओषधीः संविशन्तु । उत अपि च आपः संविशन्तु । किञ्च यज्ञस्य सूक्तोक्तौ यज्ञसम्बन्धिशोभनवचनोच्चारणेन नमोवाके नमस्कारवचनेन च त्वा त्वां विधेम स्थापयामः । जलपानाहुतौ[1] स्वाहापदप्रयोगः । अयं वाक्यार्थः—हे सोम जलस्थो भवान् ओषधीसहितः । यज्ञ-सम्बन्धिवचनेन नमस्कारेण च त्वामत्राचमनजले स्थापयामः । तदिदमाचमनजलम् ओषधीयुक्तस्य तवाधिष्ठानात् अतिपुण्यहेतुरिति मां पवित्रीकरोत्विति आशंसा वाक्यार्थः । अत्र सूक्तोक्ताविति नमोवाके चेति तृतीयार्थे सप्तम्येकवचनम् । वाकः भावे घञ् ।

अथवा योगियाज्ञवल्क्योक्तविधिना ओंपूर्वाभिः सप्तमहाव्याहृतिभिराचामेदिति ।

ततो जलमध्ये निमज्ज्याघमर्षणमन्त्रं[2] त्रिधा पठित्वा स्नायात् । तत्राघ-मर्षणसूक्तस्य माहात्म्यव्याख्यानादिकमुत्तरत्र मध्याह्नस्नान एव लिखितत्वादत्र पुनर्न लिखितमतस्तत्रैव तदनुसन्धेयम् ।

इत्यावसथिक-महाधर्माध्यक्ष-श्रीहलायुधकृतौ ब्राह्मणसर्वस्वे प्रातःस्नानम् ।

---

## अथ सन्ध्योपासनम्

स्नानं निर्वर्त्य धौते वाससी परिधाय सन्ध्यामनुतिष्ठेत् ।

तत्र योगियाज्ञवल्क्यः [ ६, १ ]

अतः परं प्रवक्ष्यामि सन्ध्योपासननिर्णयम् ।
अहोरात्रकृतात् पापाद् यामुपास्य प्रमुच्यते ॥

तथा [ ६, ८ ] यावन्तोऽस्यां पृथिव्यां हि विकर्मस्थास्तु वै द्विजाः ।
तेषां वै पावनार्थाय सन्ध्या सृष्टा स्वयम्भुवा ॥

---

१ त—जपदानाहुतौ ।
२ त—°मर्षणसूक्तं ।

या सन्ध्या सा तु गायत्री द्विधा भूत्वा प्रतिष्ठिता ।

तथा [ ६, ७ ] सातत्यं[1] कर्म विप्राणामहोरात्रकृतस्य तु[2] ॥

पापापनुत्तये यस्मान्नित्यं तस्मात् समाचरेत् ।

यमः— सन्ध्यामुपासते ये तु सततं शंसितव्रताः ।

विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम्[3] ॥

शातातपः[4] — अनृतं मद्यगन्धञ्च दिवामैथुनमेव च ।

पुनाति वृषलस्यान्नं बहिः सन्ध्या ह्युपासिता ॥

याज्ञवल्क्यः [ ३, ३०७ ]

निशायां वा दिवा वापि यदज्ञानकृतं भवेत् ।

त्रिकालसन्ध्याकरणात्तत् सर्वं विप्रणश्यति ॥

देवलः[5]— सायं प्रातः सदा सन्ध्यामुपासीत शुचिर्बहिः[6] ।

विष्णुपुराणम् [ ३, ११, ९८ ]

सर्वकालमुपस्थानं सन्ध्ययोः पार्थिवेष्यते ।

अन्यत्र सूतकाशौचविभ्रमातुरभीतितः ॥

योगियाज्ञवल्क्यः [ ६, ४ ]

सर्वावस्थोऽपि[7] यो विप्रः सन्ध्योपासनतत्परः ।

ब्राह्मण्यात् न स हीयेत अन्यजन्मगतोऽपि[8] सन् ॥

तथा [ ६, १० ] सन्ध्या तूपासिता येन तेन विष्णुरुपासितः ।

[ ६, १६ ] दीर्घमायुः स विन्देत सर्वपापैः प्रमुच्यते ॥

तथा [ ४, ५९-६० ]

सायं प्रातस्तु ये सन्ध्यां सम्यक्चां पर्युपासते ।

जप्त्वैव पावनीं देवीं सावित्रीं लोकमातरम् ॥

स तया पावितो[9] देव्या ब्राह्मणो धूतकल्मषः[10] ।

न सीदेत् प्रतिगृह्णानः पृथिवीं च ससागराम् ॥

---

१ ज—सात्यन्तं ।
२ घ—यत् ; ङ—ज—च ।
योगिया—°मह्नोरात्राद्यसौ(घनौ)दनम् ।
३ ख—अनामयम् ।
४ त—शातातपस्य नाम नास्ति ।
५ घ—तथा ।
६ ज—बहिः शुचिः ।
७ घ—पापासक्तोऽपि ।
८ ङ—अन्त्यजन्मगतोऽपि , ज—अन्त्यजन्मशतोऽपि ।
९ ख—स तया भाविती ; प—शतमायाचिती ।
१० घ—धर्मसञ्चयः ।

अग्निपुराणे [ वह्निपु ८ (२३क-ख) ] मुनय ऊचुः—

कथं मुने दिवं याति ब्राह्मणो दग्धकिल्विषः[१] ।
अनग्निको हि नो ब्रूहि यदुक्तं वह्निना पुरा ॥

सूत उवाच

सायं प्रातश्च यः सन्ध्यामुपास्ते स्कन्नमानसः[२] ।
जपन् हि पावनीं देवीं गायत्रीं वेदमातरम् ॥
तया स पावितो[३] देव्या ब्राह्मणो [४]धूतकिल्विषः ।
न सीदेत् प्रतिगृह्णानो अपि पृथ्वीं ससागराम् ॥
ये चान्ये दारुणाः केचिद्ग्रहाः सूर्यादयो दिवि ।
ते चास्य सौम्यतां यान्ति [५]शिवाः [६]शिवतरास्तथा ॥
यत्र तत्र गतश्चैनं[७] दारुणाः पिशिताशनाः ।
घोररूपा महाकायाः प्रभवन्ति न राक्षसाः ॥
यावन्तश्च पृथिव्यां हि चीर्णवेदव्रता द्विजाः ।
अचीर्णव्रतवेदा वा विकर्मपथमाश्रिताः ॥
तेषां हि पावनार्थाय गायत्र्या नित्यमेव हि ।
द्वे सन्ध्ये ह्युपतिष्ठेत तदस्कन्नं[८] महाव्रतम् ॥

तथा [ वह्निपु १० (३०क) ]

द्वे सन्ध्ये ह्युपतिष्ठेत गायत्रीं प्रयतः शुचिः ।
यस्तस्य दुष्कृतं नास्ति पूर्वतः परतोऽपि वा ॥

तथा [ वह्निपु १० (३०क) ]

एवं किल्विषयुक्तस्तु[९] विनिर्दहति पातकम् ।
उभे सन्ध्ये ह्युपासीत तस्मान्नित्यं द्विजोत्तमः ॥

---

१ ख—ज—°कल्मषः ।
२ घ—ऽस्तुब्धमानसः ; ङ—सुस्थमानसः ; त—शुद्धमानसः , प—स्वस्थमानसः ।
३ क—घ—भावितो ; ङ—ज—तारितो ; वह्निपु—तपसा भावितो ।
४ क—घ—ज—वह्निपु—पूत° ।
५ न—सर्वे ।
६ घ—शिवचरा° ; त—शिवभवा° ।
७ ज—गतश्चैवं ।
८ ङ—तदक्षय्यं ; ज—तदक्षयं ; त—तदद्भुतं ।
९ प—युक्तस्य ।

तथा [ योगिया ६, २-३ ]

सन्ध्या येन न विज्ञाता सन्ध्या नैवाप्युपासिता ।
जीवन्नेव भवेच्छूद्रो मृतः श्वा चाभिजायते ॥
[1] न तिष्ठति[1] तु यः पूर्वां नोपास्ते यस्तु पश्चिमाम् ।
स साधुभिर्बहिष्कार्यः सर्वस्माद्द्विजकर्मणः ॥

व्यासः— बहिः सन्ध्या दशगुणा गोष्ठप्रस्रवणादिषु ।
ख्याततीर्थे शतगुणा [2]साहस्री जाह्नवीजले ॥

बहिरित्यनाच्छादितस्थाने प्राङ्गणादौ ।

शातातपः— गृहेषु प्राकृती सन्ध्या गोष्ठे [3]शतगुणा स्मृता ।
नदीषु शतसाहस्री अनन्ता [4]शिवसन्निधौ ॥

गृहेष्विति[5] गृहवीथ्यादौ च ।

योगियाज्ञवल्क्यः [ ६, १५ ]

सन्धौ सन्ध्यामुपासीत नास्तगे नोद्गते[6] रवौ ।
सन्ध्यात्रयन्तु कर्तव्यं द्विजेनात्मविदा सदा ॥

संवर्तः— सन्ध्यां प्रातः सनक्षत्रामुपासीत यथाविधि ।
सादित्यां पश्चिमां सन्ध्यामर्धास्तमितभास्कराम् ॥

नरसिंह-पुराणम् [ ५८, ५८ ]

पूर्वां सन्ध्यां सनक्षत्रामुपक्रम्य[7] यथाविधि ।
गायत्रीमभ्यसेत्तावद् यावदादित्यदर्शनम् ॥

मनुः [ ४, ९४ ] ऋषयो दीर्घसन्ध्यत्वाद् दीर्घमायुरवाप्नुवन्[8] ।
प्रज्ञां यशश्च कीर्तिञ्च ब्रह्मवर्चसमेव च ॥

दक्षः [ २, २२ ] उपास्ते यस्तु नो सन्ध्यां ब्राह्मणो हि विशेषतः ।
स जीवन्नेव शूद्रः स्यान्मृतः श्वा चाभिजायते ॥

---

१ घ—योगिया—नोपतिष्ठति ;
न—नोपातिष्ठत् ।
२ ख—घ—साहस्रा ; ङ—ज—सहस्रं ।
३ ख—दशगुणा ।
४ घ—विष्णुसन्निधौ ।
५ क—गृहे गृहस्थाने इत्यधिकम् ; त—गृहे ।
६ त—नोद्यते ।
७ ङ—°मुपासीत ; ठ—°मुपागम्य ।
८ °रवाप्नुयुरिति मनु-पाठः ।

तथा [ २, २७ ] सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ।

यदन्यत् कुरुते किञ्चिन्न तस्य फलभाग् भवेत् ॥

यमः[१]— अनागतान्तु ये पूर्वामतीतां ये तु पश्चिमाम् ।

विप्राः सन्ध्यां न तिष्ठन्ति वृषलास्त उदाहृताः ॥

छन्दोगपरिशिष्टे कात्यायनः [ २, १, १६ ]

सन्ध्यालोपस्य चाकर्ता स्नानशीलश्च यः सदा ।

तं दोषा नोपसर्पन्ति वैनतेयमिवोरगाः ॥

तथा [ छ प २, १, १५ ]

एतत् सन्ध्यात्रयं[२] प्रोक्तं ब्राह्मण्यं [३]यदधिष्ठितम् ।

यस्य नास्त्यादरस्तत्र न स ब्राह्मण उच्यते ॥

कूर्मपुराणम् [ उ १८, २६ ]

न तिष्ठति तु यः पूर्वां नापि सन्ध्यान्तु पश्चिमाम् ।

स शूद्रेण समो लोके सर्वधर्मविवर्जितः ॥

## अथ प्रातःसन्ध्या

तत्र बोधायनः [ बौ ध २, ७, २ ]

तीर्थं गत्वा प्रयतोऽभिषिक्तः [४]प्रयतो वाऽनभिषिक्तः प्रक्षालितपाणिपादः[४] अप आचम्य अग्निश्च मामन्युश्चेति सायमपः पीत्वा सूर्यश्च मामन्युश्चेति प्रातः सपवित्रेण पाणिना [५]सुरभिमत्याब्लिङ्गाभिर्वारुणीभिर्हिरण्यवर्णाभिः [६]पावमानीभिर्व्याहृतिभिरन्यैश्च पवित्रैरात्मानं प्रोक्ष्य प्रयतो भवति । तथा सर्वकर्मणाञ्चैवारम्भेषु प्राक् सन्ध्योपासनकालाच्चैतेनैव पवित्रसमूहेनात्मानं प्रोक्ष्य प्रयतो भवति ।

योगियाज्ञवल्क्यः [ ७, १८३-८४ ]

सन्ध्यामुपासते यद्वद् यथावत्तन्निबोधत ।

ऐशान्याभिमुखो भूत्वा शुचिः प्रयतमानसः ॥

१ घ—याज्ञवल्क्यः । बौ ध (२, ७, १५) कृत्यकल्प (ब्र १८०, १८१) स्मृतिमुक्ता (भा ३११) अपरार्कटीका (याज्ञ १, २५) द्र: ।

२ क—ङ—ज—सन्ध्याद्वयं ।

३ घ—यत्र विष्ठितम् , ज—न—यत्र तिष्ठति ।

४ पादपाणिरिति बौधायनधर्मसूत्रे मुद्रापितः पाठः ।

५ क—सुरभिमत्याब्लिङ्गाभिर्वारुणीभिः, ख—सुरभिमत्यादिगङ्गाभिर्वारुणीभिः; न—सुरभिमत्याब्लिङ्गाभिर्वारुणीभिः ।

६ त—पाठशालीभि॰ ।

आचान्तः पुनराचामेद्दतमित्यभिमन्त्र्य च ।
अन्तरं शुध्यति ह्येवमन्नपानमलीकृतम् ॥

शाम्बपुराणम्— क्रियां[1] यः कुरुते मोहादनाचम्यैव नास्तिकः ।
भवन्ति हि वृथा तस्य क्रियाः सर्वा न संशयः ॥

छन्दोगपरिशिष्टे कात्यायनः [ २, १, २-३ ]
सव्ये पाणौ कुशान् कृत्वा कुर्यादाचमनक्रियाम् ।
सव्य सोपग्रहः कार्यो दक्षिणः सपवित्रकः ।

बोधायनः [ बौ ध—गृह्यशेष ४, ७, ४ द्रः ]

ओंपूर्वाभिः सर्वाभिर्व्याहृतिभि. सर्वपातकेष्वाचामेत् । यत्[2] प्रथमेनाचामति तेन ऋग्वेदं प्रीणाति । यद्द्वितीयं तेन यजुर्वेदम् । यत् तृतीयं तेन सामवेदम् । यत् प्रथमं संमार्ष्टि तेनाथर्ववेदम् । यद्द्वितीयं[3] तेनेतिहासादीन् । यत् सव्यं पाणिं प्रोक्षति पादौ शिरो हृदयं चक्षुःकर्णनासानाभिश्चोपस्पृशति तेनौषधिवनस्पतिप्रभृतीन् सर्वांश्च देवान् प्रीणात्याप्नोति च । तस्मादाचमनादेव सर्वस्मात् पापात् पूतो भवति ।

व्यासः— कृत्वोङ्कारञ्च गायत्रीं निबध्नीयाच्छिखां ततः ।
पुनराचम्य हृदयं नाभिस्कन्धौ च संस्पृशेत् ॥

शङ्खः— त्रिः प्राश्नीयाद् यदम्भस्तु प्रीतास्तेनास्य देवताः ।
ब्रह्मा विष्णुश्च शम्भुश्च[4] भवन्तीत्यनुशुश्रुमः ॥
गङ्गा च यमुना चैव प्रीयेते परिमार्जनात् ।
नासत्यदस्रौ प्रीयेते स्पृष्टे नासापुटद्वये ॥
स्पृष्टे लोचनयुग्मे तु प्रीयेते शशिभास्करौ ।
कर्णयुग्मे तथा स्पृष्टे प्रीयेते अनिलानलौ ॥
स्कन्धयोः स्पर्शनादस्य प्रीयन्ते सर्वदेवताः ।
मूर्ध्नः संस्पर्शनादस्य प्रीतस्तु पुरुषो भवेत् ॥

याज्ञवल्क्यः[5]— क्षुते निष्ठीविते[6] सुप्ते[7] परिधानेऽश्रुपातने ।
पञ्चस्वेतेषु नाचामेद् दक्षिणं श्रवणं स्पृशेत् ॥

---

१ घ—सन्ध्यां ।
२ ङ—सर्वपापेभ्यः पूतो भवतीत्यधिकम् ।
३ ज—मार्ष्टि इत्यधिकम् ।
४ त—रुद्रश्च ।
५ स्मृतिचन्द्रिकायां ( आ २६२ ) वचनमिदं वसिष्ठनाम्नोद्धृतम् । पराः १२, १८ द्रः ।
६ त—न—प—निष्ठीवने ।
७ घ—ङ—ज—न—प—स्वप्ने ।

पराशरः [ १२, १८ द्रः ]

अग्निरापश्च वेदाश्च[1] चन्द्रादित्यानिलास्तथा ।
सर्वं एते हि विप्राणां कर्णे तिष्ठन्ति दक्षिणे ॥
गङ्गा च दक्षिणे श्रोत्रे नासिकायां हुताशनः ।

तथात्रैव[2] उभयोः स्पर्शने चैव तत्क्षणादेव शुध्यति[3] ॥

## ओङ्कारमाहात्म्यम्

तत्र योगियाज्ञवल्क्यः [ २, १-३ ]

प्रणवाद्याः स्मृता मन्त्राश्चतुर्वर्गफलप्रदाः ।
तस्माच्च निःसृताः सर्वे प्रलीयन्ते च तत्र वै ॥
मङ्गल्यं पावनं धर्म्यं सर्वकामप्रसाधनम् ।
ओङ्कारं परमं ब्रह्म सर्वमन्त्रेषु नायकम् ॥
प्रजापतेर्मुखोत्पन्नं तपःसिद्धस्य वै पुरा ॥

तथा [ २, १४६-१४७ ]

यथा पर्णं पलाशस्य शङ्कुनैकेन धार्यते ।
तथा जगदिदं सर्वमोङ्कारेणैव धार्यते ॥
जपेन दहते पापं प्राणायामैस्तथा मलम् ।
ध्यानेन जन्मनिर्जातं[4] धारणाभिश्च मुच्यते[5] ।

मनुः [ २, ७६ ] लघुविष्णुश्च—

अकारं चाप्युकारञ्च मकारञ्च प्रजापतिः ।
वेदत्रयान्निरदुहद् भूर्भुवःस्वरितीति च ॥

योगियाज्ञवल्क्यः[6] [ २, ८-१० ]

ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः
ब्राह्मणास्तेन यज्ञाश्च वेदाश्च विहिताः पुरा ॥
तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥

---

१ क—ख—देवाश्च ।
२ ख—त—अथात्रैव, ङ—तथा चैव ।
३ ङ—ज—नश्यति ।
४ घ—निर्ज्ञातं, ङ—ज—निर्यातं ।
५ ङ—ज—धारणाभिः प्रमुच्यते ।
६ कृत्यकल्पतरौ ( १, ५६ ) ओमित्याद्याः पंक्तयो महाभारत-नाम्नोद्धृताः ।

तथा [ २, १३-१४ ]

सिद्धान्तानां तु सर्वेषां वेदवेदान्तयोस्तथा ।
अन्येषामपि शास्त्राणां निष्ठाप्योङ्कार[1] उच्यते ॥
प्रणवाद्याः स्मृता वेदाः प्रणवे पर्यवस्थिताः[2] ।
वाङ्मयं प्रणवः सर्वं तस्मात् प्रणवमभ्यसेत् ॥

तथा [ २, ४१ ] आद्यं यदक्षरं[3] ब्रह्म त्रयी यस्मिन् प्रतिष्ठिता ।
स [4]गुह्योऽन्यस्त्रिवृद्वेदो[5] यो वेदैनं स वेदवित् ॥

तथा [ २, ६६ ] एक एव तु विज्ञेयः प्रणवो योगसाधनः ।
गृहीतः [6]सर्वसिद्धान्तैरितरैर्ब्रह्मवेदिभिः[7] ॥

वसिष्ठः— चतुर्वेदोऽपि[8] यो विप्रः सूक्ष्मं ब्रह्म न विन्दति ।
[9] तावद्भ्रमति संसारे यावद्‌ब्रह्म न विन्दति ।[9]
वेदभारभराक्रान्तः स वै ब्राह्मणगर्दभः ॥
यो वेत्ति ब्रह्मणोऽप्यन्तं[10] त्रिमात्रार्धेषु[11] तिष्ठति ॥

तथा— त्रिमात्रार्धं[12] परं[13] ब्रह्म मात्राक्षरविवर्जितम् ।
अचिन्त्यमव्ययं सूक्ष्मं निष्कलं परमं पदम् ॥

मनुः [ २, ८४ ] क्षरन्ति सर्वा वैदिक्यो जुहोतियजतिक्रियाः ।
अक्षरन्त्वक्षरं ज्ञेयं ब्रह्म चैव प्रजापतिः ॥

वसिष्ठः— यथाऽमृतेन तृप्तस्य पयसा किं प्रयोजनम् ।
तथोङ्कारविधिज्ञस्य ज्ञानतृप्तिर्न विद्यते ॥

योगियाज्ञवल्क्यः [ २, १५१-१५३ ]

सर्वमन्त्रप्रयोगेषु ओमित्यादौ प्रयुज्यते ।
तेन संपरिपूर्णानि यथोक्तानि भवन्ति च[14] ।

---

१ क—निष्ठामोङ्कार ; ख—निष्ठाचोङ्कार°, ज—निष्ठाप्योङ्कार° ।
२ त—पर्युपस्थिताः ।
३ ज—तमक्षर ; त—मन्त्राक्षरं ।
४ प—गुप्तो° ।
५ क—त—°स्त्रिविद्वेदो । मनुः ११, २६५ द्रः ।
६ घ—ङ—ज—न—सप्तसिद्धान्तै° ।
७ ख—ब्रह्मवादिभिः । प—श्लोकोऽयं नास्ति ।
८ घ—त—चतुर्वेदेषु ; प—चातुर्वेदोऽपि ।
९ प—श्लोकार्धमिदं न दृश्यते ।
१० प—ब्राह्मणोऽपीग्नं ।
११ क—त—त्रिमात्रार्थेषु ; न—त्रिमात्रोर्धेषु ।
१२ क—त्रिमात्राद्वै ; ज—न—त्रिमात्राधं ; क२—त—त्रिमात्रार्थे ।
१३ ख—त—पदं ।
१४ त—प—हि ।

योगियाज्ञवल्क्यः[१] [ २, ५-७ ]

> त्रिमात्रस्तु प्रयोक्तव्यः कर्मारम्भेषु सर्वसु ।
> तिस्रः सार्धास्तु कर्तव्या मात्रास्तत्त्वार्थचिन्तकैः ॥
> देवताध्यानकाले तु प्लुतं कुर्यान्न संशयः ।
> तैलाधारावदच्छिन्नं दीर्घघण्टानिनादवत् ॥
> अवाग्जं[२] प्रणवस्यान्तं यस्तं वेद स वेदवित् ।

तथा [ २, ४१ ] आद्य यदक्षरं[३] ब्रह्म त्रयी यस्मिन् प्रतिष्ठिता ॥

> स [४]गुह्योऽन्यस्त्रिवृद्वेदो[५] यो वेदैनं स वेदवित् ॥[६]

छन्दोगपरिशिष्टम्—

स्वरितोदात्त एकाक्षर ओङ्कार ऋग्वेदे त्रैस्वर्योदात्त एकाक्षर ओङ्कारो यजुर्वेदे दीर्घोदात्त एकाक्षर ओङ्कारः साम्नि संक्षिप्तोदात्त एकाक्षर ओङ्कारोऽथर्ववेदे ।[७] उदात्तो नात्र संशयः ।

बौधायनः [ ध सू ४, ४, ८ ]

अपि वा प्रणवमेव त्रिरन्तर्जले पठन् सर्वस्मात् पापात् प्रमुच्यते ।

बृहद्यमः[८] — स्वदेहमरणिं कृत्वा प्रणवञ्चोत्तरारणिम् ।

> ध्याननिर्मथनाद्विष्णु पश्येदग्निं निगूढवत् ॥

योगियाज्ञवल्क्यः [ २, ४० ]

> ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ।
> यः प्रयाति त्यजन् देहं स याति परमां गतिम् ॥

## अथ सन्ध्यामन्त्रानुक्रमणिका

योगियाज्ञवल्क्यः [ ६, ५-६ ]

> ओङ्कारो व्याहृतिश्चैव गायत्री सशिरास्तथा ।
> आपोहिष्ठा ऋचस्तिस्रः सूक्तञ्चैवाघमर्षणम् ॥
> आदित्यरक्षणार्थन्तु सायं प्रातर्दिने दिने ।
> सृष्ट स्वयम्भुवा पूर्वं ब्रह्मणस्तन्मुखं स्मृतम् ॥

---

१ कृत्यक ( १, ५६ )—महाभारतम् ।
२ ख—भवाग्र॑, त—भवाग्रु ; प—स्वराग्र॑ ।
३ क—त—यच्चाक्षरं ; प—सदक्षर ।
४ ख—गुह्यो य॰ ।
५ त—॰स्त्रिविद्वेदो । मनुः ११, २६५ द्रः ।
६ वचनमिदमस्मिन्नेव प्रकरणे प्रागुद्धृतम् ।
७ गोपथब्राह्मणम् ( पू १, २५ ) द्रष्टव्यम् ।
८ ङ—ज—न—बृहन्मनुः ।

## अथ गायत्रीमन्त्रव्याख्या

गायत्री [1]ऋटगखण्डनीयमपरैर्मन्त्राक्षरैर्या क्षणात्[2]
प्राणायामपुरःसरं व्यवसिता च्छिन्द्यान्महापातकम्[3] ।
मात्सर्यं कृतबुद्धयो हृदि[4] मनाङ् निर्वास्य तस्या महा-
धर्माध्यक्षहलायुधेन रचितं व्याख्यानमाकर्ण्यताम्[5] ॥

अथात्रैव[6] प्रातःसन्ध्याविधाने प्राणायामविवर्त-प्राणायाममाहात्म्य-सव्याहृति-सशिरस्कगायत्रीमाहात्म्यानि ।—

तत्र अत्रिः [ २, १ ]—प्राणायामांश्चरेत् त्रींस्तु यथाकालमतन्द्रितः ।
अहोरात्रकृतं पापं तत्क्षणादेव नश्यति ॥

विष्णुधर्मोत्तरे [१, १६४, २५] शङ्खश्च
प्राणायामत्रयं कृत्वा कल्यमुत्थाय वै द्विजः ।
अहोरात्रकृतात् पापात् तत्क्षणादेव मुच्यते ॥

अत्रिः [ २, २ ] कर्मणा मनसा वाचा यदह्ना कुरुते त्वघम् ।
सन्तिष्ठन् पूर्वसन्ध्यायां प्राणायामैस्तु पूयते ॥

तथा वृद्धविष्णु - बौधायन-वसिष्ठात्र्यग्निपुराण-शङ्ख-योगियाज्ञवल्क्य-वृद्धापस्तम्बाः
[बौ ध ४, १, २८ । वसि २५, १३ । अत्रि १, १६ । वह्निपु १० (३०क) । योगिया ८, २]
सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥

तत्र ओंकारस्य ब्रह्मा ऋषिर्गायत्री च्छन्दोऽग्निर्देवता[7] सर्वकर्मारम्भे विनियोगः । भूरादिसप्तव्याहृतीनां प्रजापतिऋषिर्गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्ति-

---

१ क—त—चिरखण्डनी°
ख—निरखण्डनी°,
प—ऋचखण्डनी ।
२ क—मन्त्राक्षरैरीक्षणात् ;
प—मत्राक्षरैर्यत्क्षणात्,
घ—र्व्याख्या कृता लक्षणात् ।
३ क—छिन्नं महापातकं ;
त—छन्नं महापातकं ;
प—( व्यवसित ) निर्णीतमेतत्पदः ।
४ ख—प—यदि ।
५ प—°माकर्णनम् ।
६ घ—त—अथ ।
७ न°—शुक्ली वर्णं इत्यधिकम् ।

त्रिष्टुब्जगत्यश्छन्दांस्यग्निवायुसूर्यबृहस्पतिवरुणेन्द्र-विश्वेदेवा[1] देवता अनादिष्ट-प्रायश्चित्ते प्राणायामे जपे च विनियोगः। गायत्र्या विश्वामित्र ऋषिः सविता देवता गायत्री च्छन्द उपनयने प्राणायामे जपे च विनियोगः। गायत्रीशिरसः प्रजापति-ऋषिर्यजुष्टाच्छन्दो नास्ति ब्रह्माग्निवायुसूर्या देवताः प्राणायामे विनियोगः।

तत्र प्राणायामविहित-सप्रणव-ससप्तव्याहृति-सशिरस्कगायत्री यथा—

ओं भूः ओं भुवः ओं स्वः ओं महः ओं जनः ओं तपः ओं सत्यम्।
ओं तत् सवितुर्वरेण्यं भर्गो देवस्य धीमहि।
धियो यो नः प्रचोदयात् ॥७॥

[ वा स ३, ३५। ऋ स ३, ६२, १० ]

ओमापो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वरोम् ॥८॥

[ तै आ १०, २, ७, १ ]

तत् तस्य[2] तं भर्गस्तेजः धीमहि चिन्तयामः। अत्र यद्यपि तमिति[3] पदं भर्गविशेषणं नास्ति तथापि य इति यच्छब्दप्रयोगादेव तमिति तच्छब्दप्रयोगो लभ्यते।

तथा च योगियाज्ञवल्क्यः [ ८, ४१ ]

तच्छब्देन तु यच्छब्दो बोद्धव्यः सततं बुधैः।
उदाहृते तु यच्छब्दे तच्छब्दः स्यादुदाहृतः ॥ इति।

किम्भूतस्य तस्य सवितुः—सर्वभावानां प्रसवितुरित्यर्थः।

तथा च योगियाज्ञवल्क्यः [ ८, ५५ ]

सविता सर्वभूतानां सर्वभावान् प्रसूयते।
सवनात् पावनाच्चैव सविता तेन चोच्यते ॥ इति।

पुनः किम्भूतस्य—देवस्य दीप्तिक्रीडादियुक्तस्य।

---

१ क—बृहस्पति-अप-वरुण-इन्द्र°;
क१—घ—बृहस्पति-अप-इन्द्र°,
ख—बृहस्पत्यापेन्द्र°।

२ क—च—सवितुः इत्यधिकम्।
३ ख—तदिति।

तथा च योगियाज्ञवल्क्यः [ ९, ५४ ]

दीप्यते[1] क्रीडते यस्माद्रोचते[2] द्योतते[3] दिवि ।
तस्माद्देव इति प्रोक्तः स्तूयते सर्वदैवतैः ॥ इति ।

पुनः किंविशिष्टो[4] भर्गः—यो भर्गो नोऽस्माकं धियो बुद्धीः प्रचोदयात् प्रेरयति धर्मार्थकाममोक्षेष्वस्माकं बुद्धीर्नियोजयतीत्यर्थः ।

तथा च योगियाज्ञवल्क्यः [ ९, ४३ ]

चिन्तयामो वयं भर्गं धियो यो नः प्रचोदयात् ।
धर्मार्थकाममोक्षेषु बुद्धिवृत्तीः पुनः पुनः ॥ इति ।

तदिह भर्गशब्देन बहुविधमाहात्म्ययुक्तः [5]सवितृमण्डलगतादित्यदेवतास्वरूपः पुरुष उच्यते ।

तथा च योगियाज्ञवल्क्यः [ ९, ५२-५३ ]

भृजिः पाके भवेद्धातुर्यस्मात् पाचयते ह्यसौ ।
भ्राजते दीप्यते यस्माज्जगच्चान्ते हरत्यपि ॥
कालाग्निरूपमास्थाय सप्तार्चिः सप्तरश्मिभिः ।
भ्राजते तत्स्वरूपेण तस्माद्भर्गः स उच्यते ॥

तथा [ ९, ४५ ] भेति भासयते[6] लोकान् रेति रञ्जयते प्रजाः ।
[7]गेति गच्छत्यजस्रं वै[7] भरणाद्[8] भर्ग उच्यते ॥

अतो यद्यपि सवितुर्भर्ग इति सवितृ-भर्गयोर्भिन्नता गायत्रीमन्त्रे प्रतीयते तथापि परमार्थचिन्तायामादित्यभर्गयोर्भेदो न विद्यत[9] एव । य एवादित्यः स एव भर्गो य एव भर्गः स एवादित्य इति भर्गादित्ययोरद्वैतमिति स्थितम् । पुनरपि किम्भूतं भर्गम्—वरेण्यं वरणीयं प्रार्थनीयं जन्ममृत्युदुःखादिनाशाय ध्यानेनोपासनीयमित्यर्थः ।

तथा च योगियाज्ञवल्क्यः [ ९, ५६-५७ ]

वरेण्यं वरणीयञ्च जन्मसंसारभीरुभिः ।
आदित्यान्तर्गतं यच्च भर्गाख्यं वै मुमुक्षुभिः ॥

---

१ त—प—दीव्यते ।
२ क—त—यस्माद्रुच्यते , प—यस्मात्तप्यते ।
३ त—शोभते ।
४ ख—किम्भूतो ।
५ ख—सवितृमण्डलमध्यगता° ।
६ क—भाषयते , त—भाजयते ; प—भीष्ययते
७ क२—त—प—ग इत्यागच्छतेऽजस्रं ।
८ क—ज—भरणाद ; त—भरणी ।
९ प—स्यात् ।

जन्ममृत्युविनाशाय दु.खस्य त्रिविधस्य च ।
ध्यानेन पुरुषो यस्तु द्रष्टव्यः सूर्यमण्डले ॥ इति ।

एवं गायत्र्या तस्य भर्गस्य माहात्म्यमुपवर्ण्य पुनस्तस्यैव महाप्रभावत्वं सप्तव्याहृतिभिर्विशेषणभूताभिरभिधीयते । तद्यथा—किम्भूतं भर्गम्—भूरादिसप्तलोकप्रकाशकम् । भूः भूमिलोकः । भुवः भुवर्लोकोऽन्तरीक्षम् । स्वः स्वर्गलोकः । महः महर्लोकः । जनः जनलोकः । तपः तपोलोकः । सत्यं सत्यलोकः । एवमुपर्युपरिक्रमेणावस्थितान् सप्त लोकानभिव्याप्यावर्तिष्ठमानोऽसौ भर्ग एतान् सप्त लोकानेव प्रदीपवत् प्रकाशयतीत्यर्थ. । सप्त लोका. पुनरेताः सप्त व्याहृतय एवेति योगियाज्ञवल्क्येन[1] प्रतिपादितम् ।

यदाह [ योगिया ३, ६ ] भूराद्याश्चैव सत्यान्ताः सप्त व्याहृतयस्तु याः ।
लोकास्त एव सप्तैत उपर्युपरि संस्थिताः ॥

तथा [ ३, २ ] सप्त व्याहृतयः प्रोक्ताः पुराकल्पे स्वयम्भुवा ।
ता एव सप्त छन्दांसि लोकाः सप्त प्रकीर्तिताः ॥ इति ।

यया च वासनया सप्त व्याहृतय एव सप्त लोकाः सा च वासना योगियाज्ञवल्क्येनैव निरुक्तौ विविच्य[2] प्रतिपादिता ।

यदाह [ योगिया ३, १५-२४ ] भवन्ति चास्मिन् भूतानि स्थावराणि चराणि च ।
तस्माद् भूरिति विज्ञेया प्रथमा व्याहृतिः स्मृता ॥[3]
भवन्ति भूयो भूतानि उपयोगक्षये[4] पुनः ।
कल्पान्त उपभोगाय भुवस्तस्मात् प्रकीर्तिताः ॥
शीतोष्णवृष्टितेजांसि जायन्ते तेन[5] वै सदा ।
आलयः [6]सुकृतीनाञ्च स्वर्लोकः स[6] उदाहृतः ॥
अधरोत्तरलोकेभ्यो महांश्च परिमाणतः ।
हृदयं सर्वलोकानां[7] महस्तेन निगद्यते ॥
कल्पदाहे प्रलीनास्तु प्राणिनस्तु पुनः पुनः ।
जायन्ते च पुनः स्वर्गे जनस्तेन प्रकीर्तितः ॥

---

१ ज—याज्ञवल्क्यवाक्येन, प—याज्ञवल्क्यः ।
२ क२—विशिष्य ।
३ भवन्ति चास्मिन्नित्यादिः प्रथमः श्लोकोऽय मुद्रितायां बृहद्योगियाज्ञवल्क्यस्मृतौ नास्ति ।
४ प—उपभोगेषु यत् ।
५ त—प—तानि ।
६ प—प्रकृतीना स स्वर्गलोके ।
७ त—सप्तलोकाना, प—सर्वभूतानां ।

सनकाद्यास्तपःसिद्धा ये चान्ये ब्रह्मणः सुताः ।
अधिकारनिवृत्तास्तु तिष्ठन्त्यस्मिंस्तपस्ततः ॥
सत्यन्तु सप्तमो लोको ब्रह्मणः सदनन्तु तत् ।
सर्वेषाञ्चैव लोकानां मूर्ध्नि सन्तिष्ठते सदा ॥
ज्ञानकर्मसुनिष्ठानात्[1] तथा सत्यस्य भाषणात् ।
प्राप्यते चोपभोगार्थं प्राप्य न च्यवते पुनः ।
तत् सत्यं सप्तमो लोकस्तस्मादूर्ध्वं न विद्यते ॥ इति ।

एतदेव तु ज्ञानकर्मनिष्ठैस्त्रिदण्डिभिरप्यर्चिरादिमार्गोपासिभिरनुचिन्त्यत[2] इति । अत्र च 'क्षरत्यनोङ्कृतं ब्रह्म' इति प्रत्यवायपरिहाराय प्रतिव्याहृति ओङ्काराणां प्रयोगः । अथवा भूरादिसप्तलोकानां विशेषणत्वेन ओङ्कारपूर्वकाः सप्तैते निर्दिष्टाः । ओङ्कारस्वरूपा[3] एव ते सप्त लोका इत्यभिप्रायः ।

एवमुक्तप्रकारेण तस्यादित्यदेवतास्वरूपस्य भर्गस्य तथाविधं प्रभावमुपदर्श्य पुनरिदानीन्तस्यैवोत्कर्षप्रतिपादनाय शिरोमन्त्रयोजनमाह[4] । पुनरपि कीदृशोऽसौ भर्गः—ब्रह्मरूपः परमात्मस्वरूप इत्यर्थः । भर्ग एव परमात्मभूत इत्यभिप्रायः । तथा च योगियाज्ञवल्क्यः [ ८, १५८ ]

आदित्यो ब्रह्म इत्येषा [5]निष्ठा ह्युपनिषत्सु[5] च ।
छन्दोगे बृहदारण्ये तैत्तिरीये तथैव च ॥

तथा [ ८, २३ ]　　ईश्वरं पुरुषाख्यन्तु सत्यधर्माणमच्युतम् ।
भर्गाख्यं विष्णुसंज्ञन्तु यं ज्ञात्वाऽमृतमश्नुते ॥

शाम्बपुराणम्—

सहस्ररश्मिरेषोऽत्र परमात्मा प्रजापतिः ॥

आदित्य इत्यनुवृत्तौ भविष्यपुराणम् [ ब्राह्म ४८, २८ ]

यस्मादतः[6] परं नास्ति न भूतं न भविष्यति ।
अयं वेदेषु सर्वेषु परमात्मेति गीयते ॥

---

१ क—प—निष्ठानां ; ङ—ज—ज्ञानकर्मस्वनुष्ठानात् । च—त—ज्ञानकर्मप्रतिष्ठानात् ।
२ घ—स्त्रिदण्डिभिरप्यृषिभिरादित्यमार्गो॰ ।
३ प—ओङ्कारपूर्वका ।
४ ख—त—न—प—॰मन्त्रप्रयोजनमाह ।
५ योगिया—मिदाद्युपनिषत्सु ।
६ त—आदित्याद्य ; भविष्यपु—तस्मादतः ।

तथा विष्णुधर्मोत्तरीयप्रथमकाण्डे [ १, १६५, ४-७ ] वज्रं प्रति मार्कण्डेय-वाक्यम्—

रविमध्ये स्थितः सोमः सोममध्ये हुताशनः ।
तेजोमध्ये स्थितं सत्यं सत्यमध्ये स्थितोऽच्युतः ॥
अङ्गुष्ठमात्रः पुरुषः पूर्वमेव मयेरितः ।
शङ्करेण तथा दृष्टः प्रभवः सर्वतेजसाम् ॥
स विष्णुर्भुवनाधारो यस्येदं सकलं जगत् ।
वरेण्यं [1]तच्च सवितुर्भर्गं वर्यन्तु[1] योगिनाम् ॥
ध्येयं वरं तदुद्दिष्टं बहिरन्तश्च यादव[2] ॥ इति ।

किञ्च प्राणिनो हृदयाभ्यन्तर्वर्ती यो जीवात्मा सोऽपि भर्ग एव ।
तथा च योगियाज्ञवल्क्यः [ ८, २१ ]

[3]आदित्यान्तर्गतं यच्च[3] ज्योतिषां ज्योतिरुत्तमम् ।
हृदये सर्वभूतानां जीवभूतः स तिष्ठति ॥

तथा [ ८, २४-२५ ]

हृद्व्योम्नि तपति ह्येष बाह्ये[4] सूर्यः स चान्तरे ।
अग्नौ वा धूमको ह्येष ज्योतिश्चित्रतरं[5] च यत् ॥
हृद्याकाशे च यो जीवः साधकैरुपवर्ण्यते ।
स एवादित्यरूपेण बहिर्नभसि राजते ॥ इति ।

पुनरपि किंविशिष्टोऽसौ ब्रह्मस्वरूपो भर्गः—ज्योतिः तेजःस्वरूपः मणि-पाषाणधातुप्रभृतिषु स्थावरेषु च स एव भर्गस्तेजोरूपेण वसतीत्यर्थः ।
तथा च योगियाज्ञवल्क्यः [ ८, १५३ ]

पाषाणमणिधातूनां तेजोरूपेण संस्थितः । इति ।

पुनरपि कीदृशः स एव ब्रह्मस्वरूपो भर्गः—रसः । वृक्षौषध्यादिषु स्थावरेषु च स एव रसरूपेण वसतीत्यर्थः ।
तथा च योगियाज्ञवल्क्यः [ ८, १५४ ]

वृक्षौषधिलतानाञ्च रसरूपेण तिष्ठति ॥ इति ।

अयमभिप्रायः ।—जङ्गमेषु देवासुरनरोरगपशुपक्षिकीटादिषु तावदन्तश्चरतया

---

१ छ—ज—यत्तत् सवितुर्भर्गं वर्यं तु ।
का—सवितुर्भर्गमुपसेव्यन्तु ।
२ क—°श्च यज्ञवित् । ज—प—°श्च यादवैः ।
त—°स्तदेव हि ।
३ योगिया—ब्रह्मणः परमं ब्रह्म ।
४ क—त—बाह्यः ।
५ त—°श्चक्रधरं च । प—°श्चित्रचिरश्चि ।

ब्रह्मस्वरूपोऽसौ भर्गो विद्यत एव। ये च स्थावराः पाषाणमणिधातुप्रभृतयस्तेषु च तेजोमूर्त्या स एव भर्गः प्रतिवसति। येऽप्यपरे वृक्षौषधितृणादयः स्थावरास्तेष्वपि रसरूपितया स एव भर्गोऽवतिष्ठते। एवमखिलस्थावरजङ्गममेव तेन भर्गेणाभिव्याप्तमिति। न केवलमयं भर्गः परमात्मस्वरूपितयैव जङ्गमेषु विद्यते अपि तु जङ्गमानाममृतनामा चेतनात्मापि[1] स एव भर्ग इति दर्शयितुमाह। पुनः किम्भूतोऽसौ भर्गः—अमृतं अमृतनामा ज्योतिर्मयो यश्चेतनात्मा[2] प्राणिनां हृदये वसति सोऽपि भर्ग एवेत्यर्थः। तथा हि प्राणिनां हृदये सूर्यमण्डलमस्ति सूर्यमण्डलमध्ये सोममण्डलं सोममण्डलमध्ये तेजः तेजोमध्ये सत्यं सत्यमध्ये परमात्मा। यदाह योगियाज्ञवल्क्यः [ ८, १२८ ]

रविमध्ये स्थितः सोमः सोममध्ये हुताशनः।
तेजोमध्ये स्थितं सत्यं सत्यमध्ये स्थितोऽच्युतः॥ इति।

तत्र सोममध्ये यो हुताशनो वसति स एवामृतनामा चेतनात्मा[3]।
तथा च योगियाज्ञवल्क्यः [ ८, १२६-२७ ]

[4]केशवर्हिःसमाच्छन्न उरोवेद्यां प्रतिष्ठितः[4]।
चेतात्मा धाममात्रस्तु निर्भासश्चात्मभासकः॥
[5]एषोऽग्निः [6]सोममध्यस्थो ह्यमृतं[7] ज्योतिरूपकः[8]।
हृदिस्थः[9] सर्वभूतानां चेतनो[10]ऽद्योतते[11] ह्यसौ॥

तदेवंस्वरूपोऽमृतनामा चेतनात्मापि[12] तस्य परमात्मरूपभर्गस्यैव मूर्तिरिति प्रतिपादितम्। किञ्च जल[13] एव निखिलत्रैलोक्यमिदमुत्पन्नम्।
यदाह [ मनु १, ८ ]

अप एव ससर्जादौ तासु बीजमवासृजत्। इति।

तत्र जगत्त्रयजन्माधारभूतं जलमपि भर्ग एवेति दर्शयितु भर्गविशेषणमाह आप इति जलरूपो[14] स एव भर्गः।

---

१ घ—छ—ज—चेतात्मापि।
२ छ—ज—प—चेतात्मा।
३ ज—चितात्मा। प—चेतात्मा।
४ क—ङ—कोशवह्नि ( क१—केशवर्हं ङ—केशवो हि ) समाच्छन्नं तेजोवेद्या प्रतिष्ठति। छ—ज—न—प—केशवर्हिसमाच्छिन्नं तेजो-(प—पुरो ) वेद्यां प्रतिष्ठितम्।
५ क—न—ज—एवं हि। घ—प—एषो हि। त—एको हि।
६ क—घ—°मध्यस्थम्।
७ क—अमृतं।
८ क—घ—न—प—°कम्।
९ क—घ—न—प—हृदिस्थं।
१० क—चेतो। ख—प—चेतसो। घ—चेतात्मा।
११ क—विद्योतते। त—द्योतयते।
१२ ज—चेतात्मापि।
१३ क—घ—जलत।
१४ क—त—जलस्वरूपोऽपि।

तथा च शाम्बपुराणम् [ २३, २१-२२ ]

य एष मण्डले ह्यस्मिन् पुरुषो दीप्यते महान् ।
एष विष्णुरचिन्त्यात्मा[१] ब्रह्मा चैव पितामहः ॥
रुद्रो महेन्द्रो वरुण आकाशं पृथिवी जलम् ॥ इति ।

न केवलं त्रैलोक्यजन्माधारभूतजलमात्रमसौ[२] भर्गः अपि तु ब्रह्मविष्णु-रुद्रमूर्तितया सृष्टिस्थितिप्रलयानामिव कर्ता स भर्ग इति दर्शयितुं पुनर्भर्ग-विशेषणमाह भूर्भुवः स्वरिति। एतद्व्याहृतित्रयं सत्त्वरजस्तमोमयब्रह्मविष्णु-रुद्रात्मकम् ।

यदाह कूर्मपुराणम् [ उ १४, ५३-५४ ]

पुराकल्पे समुत्पन्ना भूर्भुवःस्वःसनातनाः ।
महाव्याहृतयस्तिस्रः सर्वासुरनिवर्हणाः ॥
प्रधानं पुरुषः कालो ब्रह्मविष्णुमहेश्वराः ।
सत्त्वं रजस्तमस्तिस्रः क्रमाद्व्याहृतयः स्मृताः ॥

तदयमर्थः। सत्त्वरजस्तमोमयो ब्रह्मविष्णुरुद्रस्वरूपश्च स एव भर्ग इति ब्रह्मविष्णुमहेश्वरमूर्तितया[३] सृष्टिस्थितिप्रलयानेवासौ[४] परब्रह्मात्मको भर्गः करोतीत्यभिप्रायः ।

तथा चादित्यानुवृत्तौ भविष्यपुराणम् [ ब्राह्म ४८, २२ ]

यस्मादिदं जगज्जातं लयं यास्यति यत्र च । इति ।

इत्थं निखिलचराचरात्मकत्रैलोक्यमेव भर्गस्वरूपम्। त्रैलोक्योत्पत्तिस्थानं त्रैलोक्य-पालयिता[५] त्रैलोक्यसंहर्ता च स एव भर्गः। ततो भर्गादन्यदिह किमपि न सम्भवतीति परब्रह्मरूपत्वं तस्य भर्गस्य प्रतिपादितमिति। अत्र च सर्वेषामोङ्का-राणां 'क्षरत्यनोङ्कृतं ब्रह्म' इति प्रत्यवायपरिहाराय प्रयोगः। अस्यास्तु सप्त-व्याहृतियुक्तसशिरस्कगायत्र्या अयं वाक्यार्थः। यस्तथाभूतो[६] भर्गोऽस्मान् प्रेरयति स एव जलज्योतीरसामृतभूरादिलोकत्रयात्मकसकलचराचरस्वरूपब्रह्मविष्णुमहेश्वर-सूर्यादिनानादेवतामयपरब्रह्मस्वरूपो भूरादिसप्तलोकान् प्रदीपवत् प्रकाशयन् मदीय-जीवात्मानं ज्योतीरूपं सत्याख्यं सप्तमं ब्रह्मलोकं ब्रह्मस्थानं नीत्वा स्वात्मन्येव ब्रह्मणि ब्रह्मज्योतिषा सहैकीभावं करोत्विति[७] चिन्तयन् प्राणायामं जपं वा

---

१ क—ङ—छ—रविर्नाम्ना ।
२ क—जलरूपमसौ । त—जलमसौ ।
३ ङ—ज— मूर्तित्रयी ।
४ ज—प्र—°प्रलयात्मकोऽसौ ।
५ क—त—प—त्रैलोक्योत्पादयिता ।
६ क—यस्तस्मादेव सम्भूतो ।
७ क—च—त—प—करोतीति ।

कुर्यादिति। तदेवंस्वरूपगायत्र्या सम्यगर्थपरिज्ञानपूर्वकं यथाविधि प्राणायामे जपे वा क्रियमाणे कथं महापातकोपपातकान्यन्यानि च सप्तजन्मकृतानि पापानि न नाशमुपयास्यन्ति। एतस्याः[1] सम्यगर्थचिन्तनेन वा कथमपवर्गसिद्धिर्न भविष्यति।

तथा चास्याः प्राणायामविधावपि तत्तद्बहुविधमाहात्म्योपवर्णने नानामुनिवचनानि।—

तत्राग्निपुराणे गायत्रीं प्रति ब्रह्मवाक्यम् [ वह्नि पु ११ (३४क) ]

कुर्वन्तोऽपोह पापानि ये त्वां ध्यायन्ति पावनि।
उभे सन्ध्ये न तेषां हि विद्यते देवि पातकम्॥
त्रिः पठन्नायतप्राणः प्राणायामेन यो द्विजः।
वर्तते न स लिप्येत पातकैरुपपातकैः॥

बृहद्विष्णुः [ विष्णुस्मृ ५५, ८ ]

प्राणायामान् द्विजः कुर्यात् सर्वपापापनुत्तये।
दह्यन्ते सर्वपापानि प्राणायामैर्द्विजस्य तु॥

विष्णुधर्मोत्तराग्निपुराणे [ वि ध १, १६५ २६। वह्निपु १० (३०क-३१ख) ]

सर्वदोषहरं प्रोक्तं प्राणायामं द्विजन्मनाम्।
ततस्त्वभ्यधिकं[2] नास्ति तपः परमपावनम्॥

अत्रिः[3]— कर्मणा मनसा वाचा यदह्ना कुरुते त्वघम्।
आसीनः पश्चिमां सन्ध्यां प्राणायामैस्तु शुध्यति॥

अग्निपुराणम् [ वह्निपु १० (३०ख) ]

प्राणायामत्रयं कृत्वा प्राणायामैस्त्रिभिः पुनः[4]।
अहोरात्रकृतात् पापान्मुच्यते नात्र संशयः॥

वसिष्ठः [२६, १-३] प्राणायामान् धारयेत्[5] त्रीन् यथाविधिरतन्द्रितः।
अहोरात्रकृतं पापं तत्क्षणादेव नश्यति॥
कर्मणा मनसा वाचा यदह्ना कृतमेनसम्[6]।
आसीनः पश्चिमां सन्ध्यां प्राणायामैर्व्यपोहति॥
कर्मणा मनसा वाचा यद्रात्र्या कृतमेनसम्[7]।
उत्तिष्ठन् पूर्वसन्ध्यायां प्राणायामैर्व्यपोहति॥

---

१ ज—गायत्र्या इत्यधिकम्।
२ ज—ततश्चैवाधिकम्।
३ अत्रिस्मृतिः २, २ द्रः।
४ ख—निशि।
५ ङ—ज—न—करोति।
६ क—कृतमानस.। न—°मेनसम्।
क२—छ—कृतमेनसः।
७ क२—कुरुते त्वघम्।

वृद्धापस्तम्बः[1]— पूर्वमुक्तेषु पापेषु तथान्येष्वपि सर्वशः ।
प्राणायामास्त्रयोऽभ्यस्ताः सूर्यस्योदयनं प्रति ॥
जायन्ते तद्विनाशाय तमसामिव भास्करः ॥
सूर्यस्योदयनं प्राप्य निर्मला धूतकल्मषाः ।
भवन्ति भास्कराकारा विधूमा इव पावकाः ॥

योगियाज्ञवल्क्यः [ ८, ३७ ]
यदह्ना कुरुते पापं कर्मणा मनसा गिरा[2] ।
त्रैकाल्यसन्ध्याकरणात् प्राणायामैर्व्यपोहति ॥

बृहस्पतिः [ सं ५५७ ]
प्राणायामैर्दहेद्दोषान् मनोवाग्देहसम्भवान्[3] ॥

प्राणायामानुवृत्तौ बौधायनः [ बौ ध ४, १, ३० ]
एतदाद्यं तपः श्रेष्ठमेतद्धर्मस्य लक्षणम् ।
सर्वदोषोपघातार्थमेतदेव विशिष्यते ॥

अत्रिवसिष्ठौ [ अ १, ७ । व २५, ५ ]
आवर्तयेत् सदा युक्तः प्राणायामं पुनः पुनः ।
आ केशाग्रान्नखाग्राच्च[4] तपस्तप्यत उत्तमम् ॥

विष्णुधर्मोत्तराग्निपुराणे, [ वि ध १, १६', २८ । वह्निपु १० (३१क) ]
आ केशाग्रादा नखाग्रात्तपस्तप्यन्[5] सुदारुणम्[5] ।
आत्मानं शोधयेद् यस्तु प्राणायामैः पुनः पुनः ॥

मनुः [ ६, ३१ ] दह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः ।
तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य निग्रहात् ॥

तथा— प्राणायामैर्दहेद्दोषान् प्राणायामः परन्तपः ॥[6]

बृहद्यमः— यथा हि शैलधातूनां धम्यतां भ्रश्यते रजः ।
इन्द्रियाणां तथा दोषान् प्राणायामैस्तु निर्दहेत् ॥

बृहस्पतिः [ सं ५५८ ]
धम्यमानं यथा[7] दह्याद्धातूनां संभृतं मलम् ।
तथेन्द्रियकृतो दोषः प्राणायामेन दह्यते[8] ॥

---

१ क—च—वृद्धापस्तम्बः ।
२ क—ख—घ—प—पि वा ।
३ ज—प—मनोवाक्कायसम्भवान ।
४ क—क२—तपस्तप्यन् ।
५ वह्नि-पुराणे—आ केशादा नखाग्राच्च तपस्तप्येत् सुदारुणमिति पाठः ।
६ मानवे धर्मशास्त्रे ( ६।७२ ) त्वन्यथा पाठो दृश्यते ।
७ क—त—प—दह्येद्धातूनां ।
८ प—शुध्यति ।

योगियाज्ञवल्क्यः [ ८, ३० ]

दह्यन्ते धम्यमानानां धातूनां हि यथा मलाः ।
[१]तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य निग्रहात् ॥

तथा [ ८, ३३ ] यथा पर्वतधातूनां दोषान् दहति पावकः ।[१]
एवमन्तर्गतञ्चैनः प्राणायामेन दह्यते ॥

अत्रिवसिष्ठौ [ अ १, ८ । व २५, ६ ]

निरोधाज्जायते वायुर्वायोरग्निः प्रजायते ।
अग्नेरापोऽभिजायन्ते[२] तैरन्तः शुध्यते त्रिभिः ॥

विष्णुधर्मोत्तराग्निपुराणे [ वि ध १, १६५, २८ । वह्नि पु १० (३१क) ]

निरोधाज्जायते वायुस्तस्मादग्निस्ततो जलम् ।
त्रिभिः शरीरं सकलं प्राणायामैर्विशुध्यति[३] ॥

योगियाज्ञवल्क्यः [ ८, २६-२७ ]

तथा निरोधसंयोगाद्दैवतात्रयचिन्तनात् ।
अग्नेर्वायोरपां योगादात्मा[४] शुद्धिरस्तु वै त्रिभिः ॥
[५]निरोधाज्जायते वायुर्वायोरग्निश्च जायते ।
अग्नेरापोऽभिजायन्ते तैरन्तः शुध्यते त्रिभिः[५] ॥

[६]मनुः [६, १०] प्राणायामा ब्राह्मणस्य त्रयोऽपि विधिवत् कृताः ।
व्याहृतिप्रणवैर्युक्ता विज्ञेयं परमं तपः ॥

योगियाज्ञवल्क्यः [ ८, २८ ]

प्राणायामा ब्राह्मणस्य त्रयोऽपि विधिवत् कृताः ।
व्याहृतिप्रणवैः सार्धं विज्ञेयं परमं तपः ॥[७]

विष्णुधर्मोत्तराग्निपुराणे [ वि ध १, १६५, २७ । वह्निपु १० (३१क) ]

प्राणसन्धारणं मासं[८] कुशाग्रच्युतबिन्दुना[९] ।
यः कुर्यादम्भसा राजन् [१०]प्राणायामश्च तत्समः[१०] ॥

---

१ प—पुस्तके पङ्क्तिद्वय नास्ति ।
२ क—ङ— व्यजायन्ते । त— प व्यजायन्त ।
३ वह्निपुराणे प्राणायामेन शुध्यतीत्यस्य श्लोकपादस्य पाठः ।
४ त—शुद्धेरत ।
५ त—नास्ति ।
६ त—नास्ति ।
७ त—नास्ति ।
८ त—नाक ।
९ ज—कुशाम्भः च्युतबिन्दुना ।
१० क—प्राणायामः स उच्यते ।
ज—प्राणायामं च तत्समम् ।
वह्निपु—यत्कुर्यात् प्रयतो नित्यं प्राणायामस्तु तत्समः । विष्णुध—यः कुर्यादम्भसां पानं ।

वृद्धहारीतविष्णुबौधायनवसिष्ठात्र्यग्निपुराणशङ्खयोगियाज्ञवल्क्यवृद्धापस्तम्बाः [ विष्णुस्मृ ५५, १। बौ ध ४, १, २८। व २५, १३। अत्रि १, १६। वह्निपु १० (३०क)। शङ्ख ७, १३। योगिया ८, २ ]

सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते।

याज्ञवल्क्य-योगियाज्ञवल्क्यौ [ या १, २३। योगिया ८, ३ ]

गायत्रीं शिरसा सार्धं जपेद् व्याहृतिपूर्विकाम्।
प्रतिप्रणवसंयुक्तां त्रिरयं प्राणसंयमः॥

योगियाज्ञवल्क्यः [ ८, ४-६ ]

भूर्भुवः स्वर्महर्जनस्तपः सत्यं तथैव च।
प्रत्योङ्कारसमायुक्तं तत् सवितुर्वरेण्यपि[1]॥
[2]ओमापोज्योतिरित्येतच्छिरः पश्चात् प्रयोजयेत्।
एवं मन्त्रप्रयोगस्तु प्राणायामनिरोधने।
त्रिरावर्तनयोगेन प्राणायामस्तु शब्दितः॥[2]

[3]शङ्खः [ १२, १२ ]

ओमापो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वरोमिति शिरः॥

योगियाज्ञवल्क्यः [ ४, ८-१० ]

षोडशाक्षरकं ब्रह्म गायत्र्यास्तच्छिरः स्मृतम्।
ओमापोज्योतिरित्येष मन्त्रो यस्तु प्रकीर्त्यते[4]॥
तस्य प्रजापतिर्ऋषिर्यजुश्छन्दसा विना।
ब्रह्माग्निवायुसूर्याश्च देवताः समुदाहृताः॥
प्राणस्यायमने चैव विनियोग उदाहृतः।
गायत्रीं शिरसा सार्धमेवं श्रुतिनिदर्शनम्॥

व्यासः— प्रणवव्याहृतियुतां गायत्रीं शिरसा सह।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते॥
आदानं रोधमुत्सर्गं वायोस्त्रिस्त्रिः समभ्यसेत्।
ब्रह्माणं केशवं शम्भुं ध्यायेदेताननुक्रमात्॥

---

१ ख—ज—प—°ऽरेण्यमपि।

२ त—पुस्तके श्लोकोऽयं 'तस्य प्रजापति'रित्याद्यनन्तरपठितवचनात् प्राक् पठ्यते।

३ त—नास्ति। तै आ १०, १५, १ द्र:।

४ क—च—प्रकीर्तितः।

रक्तं प्रजापतिं ध्यायेद्विष्णुं नीलोत्पलप्रभम् ।
शङ्करं त्र्यम्बकं श्वेतं ध्यायन्मुच्येत बन्धनात् ॥

योगियाज्ञवल्क्यः [ ८, ४३ ]

पूरके विष्णुसायुज्यं कुम्भके ब्रह्मणोऽन्तिकम् ।[1]
रेचकेन तृतीयन्तु प्राप्नुयादैश्वरं पदम् ॥

## अथ प्राणायामविधिः

तत्र गद्यव्यासः[2]—आदौ छन्दोदेवताऋषिविनियोगान् निरूप्य गायत्रीं शिरसा सार्धं सप्तव्याहृतिपूर्विकां प्राणायामेन त्रिरावर्तयेत् । तत्र शनैः प्रश्वसेत्[3] । एवं प्राणायामैर्दग्धदोषो यच्छ्रेयः[4] करोति तत् सफलम्भवति ॥

व्यासः— गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ।
त्रिष्टुप् च जगती चेति छन्दांस्याहुरनुक्रमात् ॥
अग्निवाय्वर्कवरुणा बृहस्पतिशतक्रतू ।
विश्वे देवा व्याहृतीनां दैवतानि यथाक्रमम् ॥
विनियोगः स्मृतस्त्वासां प्राणायामे महर्षिभिः ।

योगियाज्ञवल्क्यः [ ३, १३-१६ ]

व्याहृतीनां च सर्वासामार्षञ्चैव प्रजापतिः ।
सप्त च्छन्दांसि प्रोक्तानि छादनानि तु सर्वशः ॥
गायत्र्युष्णिगनुष्टुप् च जगती त्रिष्टुबेव च ।
पङ्क्तिश्च बृहती चेति सप्त च्छन्दांसि तानि वै ॥
अग्निर्वायुस्तथादित्यो बृहस्पत्याप एव च ।
इन्द्रश्च विश्वे देवाश्च देवताः समुदाहृताः ॥

---

१ क-पुस्तके लेखकेन टिप्पण्या 'ब्रह्मसायुज्यं' "विष्णोरन्तिकम्" इति पाठद्वयं निर्देशितम् ।
२ त—प—वेदव्यासः ।
३ क—ज—न—प्रनिश्वसेत् । त—श्वसेत् ।
४ क—ख—यः श्रेयः । ज—यस्तु श्रेयः । प—यद्दयच्छ्रेयः ।

अनाम्नातेषु नित्येषु[1] प्रायश्चित्तेषु सर्वदा ।
प्राणायामप्रयोगे च विनियोग उदाहृतः ॥

बृहस्पतिः [ आ २१ ]

बद्ध्वासनं नियम्यासून् स्मृत्वा चार्षादिकं तथा ।
सन्निमीलितदृङ्मौनी प्राणायामं समभ्यसेत् ॥

बृहस्पति-विष्णुधर्मोत्तरे [ बृ आ २२ । विध १, १६५, २४ ]

सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥

[ बृ, संस्कार ५५९, ५६० ]

आदानं [2]रोधमुत्सर्गं मनसा त्रिः समभ्यसेत् ।
ब्रह्माणं केशवं शम्भुं ध्यायन्मुच्येत बन्धनात् ॥
रक्तं पितामहं ध्यायेद्विष्णुं नीलोत्पलप्रभम् ।
शुक्लेतं त्र्यम्बकञ्चैव संसारार्णवतारकम् ॥

योगियाज्ञवल्क्यः [ ८, १९-२२ ]

बाह्यस्थितं नासपुटेन वायुमाकृष्य तेनैव शनैः समस्तम्[3] ।
नाड़ीश्च सर्वाः परिपूरयेयुः स पूरको नाम मरुन्निरोधः[4] ॥
न रेचको नैव तु पूरको वा नासाग्रचारी स्थित एव वायुः ।
सुनिश्चलं धारयति क्रमेण कुम्भाख्यमेनं प्रवदन्ति तज्ज्ञाः ॥
निष्क्राम्य नासाविवरादशेषं प्राणं बहिः शून्यमिवानिलेन ।
[5]निरुच्छ्वसंस्तिष्ठति चोर्ध्ववायुः[5] स रेचको नाम महानिरोधः ॥
[6]नासिकाकृष्ट उच्छ्वासो ध्मातः[6] पूरक उच्यते ।
कुम्भो निश्चलनिःश्वासो रिच्यमानस्तु रेचकः ॥

तथा [ ८, ४४-४५ ]

न प्राणेनाप्यपानेन वेगवायुं समुत्सृजेत् ।
येन सक्तून् करस्थांश्च निःश्वासेन न चालयेत् ॥
[7]शनैर्नासापुटे वायुमुत्सृजेन्न तु वेगतः ॥

---

१ ङ—ज—अनाम्नातेष्वनित्येषु । मुद्रिते योगियाज्ञवल्क्ये तु अनादिष्टेषु सर्वेष्विति पाठः ।
२ बङ्गोदातः प्रकाशिताया बृहस्पतिस्मृतौ बोधमुत्सर्गमिति मुद्रापितः पाठः ।
३ प—समन्तात् ।
४ क—प—महान्निरोधः । त—महानिरोधः ।
५ क—निरुध्य सन्तिष्ठति चैव वायुः ।
६ क—ज—नासिकयाकृष्योच्छ्वास ध्मा॰ ।
त—नासिकाकृष्ट उच्छ्वासो ध्मातः ।
न—नासयाकृष्यमाणं तु ध्मानं ।
प—नासिकोत्कृष्योच्छ्वासं तु ध्मानं ।
७ त—॰र्नासापुटे वायु॰ ।

## अथ काम्य-प्राणायामः

अङ्गिराः— दह्यमानोऽनुतापेन कृत्वा पापानि मानवः ।
शोचमानस्त्वहोरात्रं [1]प्राणायामैस्तु पूयते[1] ॥

बौधायनः [ धर्म ४, १, ३-११ ]

विधिना शास्त्रदृष्टेन प्राणायामान् समाचरेत् ।
यदुपस्थकृतं पापं पद्भ्यां वा यत् कृतं भवेत् ।
बाहुभ्यां मनसा वाचा श्रोत्रत्वग्घ्राणचक्षुषा ॥

अथवा[2] चक्षुःश्रोत्रत्वग्घ्राणमनोव्यतिक्रमेषु त्रिभिः प्राणायामैः शुध्यति । शूद्रान्नस्त्रीगमनभोजनेषु केवलेषु पृथक् पृथक् सप्ताहं[3] सप्त प्राणायामान् धारयेत् । अभक्ष्याभोज्यापेयानाद्यप्राशनेषु[4] तथाऽपण्यविक्रयेषु मधुमांसतैलघृतक्षारलवणावरान्नवर्जेषु[5] यच्चान्यदप्येवं युक्तं द्वादशाहं[6] द्वादश द्वादश प्राणायामान् धारयेत् । पातकपतनीयोपपातकवर्जेषु यच्चान्यदप्येवं युक्तमर्धमासं द्वादश द्वादश प्राणायामान् धारयेत् । पातकपतनीयवर्जेषु यच्चान्यदप्येवं युक्तं द्वादश[7] द्वादशाहान् द्वादश द्वादश प्राणायामान् धारयेत् । पातकवर्जेषु यच्चान्यदप्येवं युक्तं द्वादशार्धमासान्[8] द्वादश द्वादश प्राणायामान् धारयेत् । अथ पातकेषु संवत्सरं द्वादश द्वादश प्राणायामान् धारयेत् ।

योगियाज्ञवल्क्यः [ ८, ३४ ]

[9]द्विगुणं त्रिगुणं[9] कृत्वा नियतात्मा जितेन्द्रियः ।
प्राणायामैश्चतुर्भिस्तु मुच्यते ह्युपपातकात् ॥

तथा [ ८, ३६ ] प्राणायामशतं कार्यं सर्वपापानुत्तये ।
उपपातकयुक्तानामनादिष्टस्य चैव हि ॥

तथा [ ८, ३८-४० ]

ब्रह्महा च सुरापश्चागम्यागामी तथैव च ।
सुवर्णस्तेयकृच्चैव[10] गोघ्नो विस्रम्भघातकः[11] ॥

---

१ त—प्राणायामैर्विशुध्यति ।
२ क—ङ—अपि वा । ञ—प—अपि च ।
३ आदर्शपुस्तकेषु सप्ताहमिति न दृश्यते ।
४ आदर्शपुस्तकेषु °पेयान्नाद्यप्राशनेषु ।
५ क—लवणपरमान्नवर्जेषु ।
ख—त—न—प—लवणरसान्नवर्जेषु ।
ष—लवणपरान्नवर्जेषु ।
६ क—अर्धमासं वा । त—प—अर्धमास ।
७ आदर्शपुस्तकेषु द्वादशेति पदं नास्ति ।
८ आदर्शपुस्तकेषु द्विमासान् ।
९ मुद्रापिते योगियाज्ञवल्क्ये विरजं चतुर्गुणमिति पाठः ।
१० क—सुवर्णस्तेयचौरश्च ।
११ क—च—विश्वासघातकः ।
त—प—विश्वसघातकः ।

शरणागतघाती च कूटसाक्षी ह्यकार्यकृत् ।
एवमादिषु चान्येषु पापेष्वभिरतास्चिरम् ॥
प्राणायामशतं कृत्वा सूर्यस्योदयनं प्रति ।
निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥

विष्णुधर्मोत्तराग्निपुराणे [ वि ध १, १६५, ३० । वह्निपु १० (३१क) ]

श्रावण्यां पौर्णमास्यान्तु सोपवासो जितेन्द्रियः ।
प्राणायामशतं कृत्वा मुच्यते सर्वकिल्बिषैः ॥

अत्रिवसिष्ठौ [ व २६, ४-५ ]

प्राणायामैर्य आत्मानं नियम्यास्ते पुनः पुनः ।
दशद्वादशभिर्वापि चतुर्विंशात् परन्तपः[1] ॥
सव्याहृतिकप्रणवाः प्राणायामास्तु षोडश ।
अपि भ्रूणहनं मासात् पुनन्त्यहरहः कृताः ॥

विष्णुधर्मोत्तराग्निपुराणमनुयोगियाज्ञवल्क्यवृद्धापस्तम्बाः [ वि ध १, १६५, २३ । वह्निपु १० (३०ख) । मनु ११, २४८ । योगिया ८, २८ ]

सव्याहृतिकप्रणवा प्राणायामास्तु षोडश ।
अपि भ्रूणहनं मासात् पुनन्त्यहरहः कृताः[2] ॥

वृहद्विष्णुः [ विष्णुस्मृ ५५, १ ]

[3]स्रवन्तीमासाद्य स्नातः प्रत्यहं षोडश प्राणायामान् कृत्वैककालं हविष्याशी मासेन ब्रह्महा पूतो भवति । कर्मणोऽन्ते पयस्विनीं दद्यात् ।

वृद्धापस्तम्ब.*

श्वशृगालखरैर्दष्टो[4] ग्राम्यैः[5] क्रव्याद्भिरेव च ।
नराश्वोष्ट्रवराहैश्च प्राणायामेन शुध्यति ॥
उष्ट्रयानं समारुह्य खरयानञ्च कामतः ।
स्नात्वा तु विप्रो दिग्वासाः प्राणायामेन शुध्यति ॥

कात्यायनः— प्राणायामैश्च दुर्गन्धे । विशुद्धप्रतीति शेषः ।

---

* मनुसंहिता ( ११, २०१ ) द्रष्टव्या ।

---

१ ख—परं ततः ।

२ वह्निपुराणस्यासियाटिक्-सोसाइटि-स्थिते पुस्तके 'सव्याहृतिं सप्रणवां जप्त्वा मासांश्च षोडश । अपि भ्रुणहनः पापान्मुच्यन्तेऽहरहः कृतात् ॥' इति पाठः ।

३ घ—नदीमासाद्य ।

४ क—°दृष्टो । ख—°दंष्टा । घ—ग—°दुंष्टो । त—°खरैः स्पृष्टो ।

५ ख—अन्यैः ।

सुमन्तुः—  मद्यानुवृत्तौ[1]—गन्धघ्राणे प्राणायाम एकः ॥

गद्यव्यासः—  गन्धघ्राणे सुरायाः प्राणायामो घृतप्राशनं च[2] ॥

कूर्मपुराणम् [ उ ३३, ७३ ]

सुरां स्पृष्ट्वा द्विजः कुर्यात् प्राणायामत्रयं शुचिः ॥

पराशरशातातपौ [ परा ११, १८ ]

अज्ञानभुक्तसूतकान्नानुवृत्तौ

ब्राह्मणस्य यदा भुङ्क्ते प्राणायामेन शुध्यति[3] ॥

पराशरः—  ब्राह्मणान्नं[4] द्विजो[5] भुक्त्वा कृत्वा कर्म विगर्हितम् ।

प्राजापत्येन शुध्येत प्राणायामैश्च षोड़शैः ॥

कूर्मपुराणम् [ उ ३२, ५८ ]

अनस्थाश्चैव[6] हिंसायां प्राणायामेन शुध्यति ।

मनु-योगियाज्ञवल्क्यौ [ मनु ६, ६८ । योगिया ८, ३१ ]

अह्ना रात्र्या च यान् जन्तून् हिनस्त्यज्ञानतो यतिः ।

तेषां स्नात्वा विशुद्ध्यर्थं प्राणायामान् षड़ाचरेत् ॥

रहस्ये वृद्धयमः[7]

प्राणायामः परं ब्रह्म प्राणायामः परं तपः ।

तथा यतिधर्मे

मुनिरज्ञानतो जन्तून् यान् हिनस्ति दिवानिशम् ।

प्राणायामान् विशुद्ध्यर्थं तेषां स्नात्वा षड़ाचरेत् ॥

रहस्ये बृहद्यमः—चाण्डालीं पुक्कशीं मित्रकलत्रं स्नुषां[8] वा गत्वा[9] उपस्पृश्य वामदेव्येन त्रीन् प्राणायामान् कृत्वा तदेतस्माद् पूतो भवति ।

---

१ क—मन्वाद्यनुवृत्तौ । त—मलानुवृत्तौ । प—मत्यनुवृत्तौ ।

२ प—वा ।

३ मुम्बय्या राजकीयसंस्कृतग्रन्थमाला-प्रकाशितायां पराशरस्मृतौ ( २य भागस्य १म खण्डे ४१७श-पृष्ठे ) प्राणायामेन शुध्यतीति श्लोकांशः कस्यचिदादर्शपुस्तकस्य पाठ इति कृत्वा पादटिप्पण्यां निवेशितः । अपरार्कटीकायां ( ११८ पृः ) सन्दर्भोऽयं पराशरीयत्वेन वोद्धृतः ।

कर—शूद्रान्नं । त—वृषलान्नं ।

प—ब्राह्मणार्थं ।

५ क—कर—च—त—प—ब्राह्मणी ।

६ क—अनस्थां । ख—अनडुहां । मनुस्मृतिः ( १२।१४१ ) द्रष्टव्या ।

७ क—कर—बृहद्यमः । त-पुस्तके वृद्धयमवचनमिदं नास्ति । क—कर—च—ज-पुस्तकेषु प्राणायामः परं तप इत्येतावद्वचनार्धमस्ति ।

८ कर—नास्ति ।

९ कर—अप इत्यधिकम् ।

अत्र वामदेव्येन त्रीन् प्राणायामान् कृत्वेति पूरककुम्भकरेचकेषु प्रत्येक पठितेन[1] वारत्रयेण एकः प्राणायामः। एवंक्रमेण नव वारान् पठित्वा प्राणायामत्रयं करणीयमित्यर्थः।

तथा रेतोमूत्रपुरीषप्राशनं कृत्वा [2]लशुनपलाण्डुगृञ्जनकुम्भीकादीनामन्येषाञ्चाभक्ष्याणां[3] हंसग्रामकुक्कुटशूकरशृगालमांसभक्षणं कृत्वा कक्षामात्रमुदकमवतीर्य शुद्धवतीभिः प्राणायामं कृत्वा महाव्याहृतिभिरुरोगमुदकं पीत्वा तदेतस्मात् पापात् पूतो भवति॥

अत्र शुद्धवतीभिः प्राणायामं कृत्वेति पूरककुम्भकरेचकक्रमेण शुद्धवतीनामक मन्त्रत्रयं पठनीयमित्यर्थः।

शुद्धवतीमन्त्रस्य पूतदक्षऋषिरनुष्टुप्छन्द इन्द्रो देवता प्राणायामे[4] विनियोगः।

एतो न्विन्द्रं स्तवाम शुद्धं शुद्धेन साम्ना।
शुद्धैरुक्थैर्वावृध्वांसं शुद्ध आशीर्वान् ममत्तु॥
इन्द्र शुद्धो न आ गहि शुद्धः शुद्धाभिरूतिभिः।
शुद्धो रयिं निधारय शुद्धो ममद्धि सोम्यः॥
इन्द्र शुद्धो हि नो रयिं शुद्धो रत्नानि दाशुषे।
शुद्धो वृत्राणि जिघ्नसे शुद्धो वाजं सिषाससि॥

[ ऋ स ८, ९५, ७-९ ]

तथा रहस्ये बृहद्यमः[5]—ब्राह्मणोऽथ सुवर्णस्तेयं कृत्वा हिरण्यं शालायां प्रक्षिप्याप्सु निमज्ज्य ग्रीवामात्रमुदकमवतीर्य चतसृभिर्हिरण्यवर्णाभिः प्राणायामं कृत्वात्मानं प्रक्षाल्य तस्मात् पापात् पूतो भवति।

इति प्राणायाममाहात्म्यम्।

---

१ क२—पाठात्।
२ ङ—ज— गृञ्जनकुक्कुटादीना°।
प—°गृञ्जनकुकुम्भीकादीना°।
३ क२—हंसग्रामकुक्कुटशूकरशृगाल°।
४ क२—मार्जने।
५ ङ—बृहन्मनुः।

## अथ सप्रणवसव्याहृतिसशिरस्कगायत्रीजपफलम्

तथा च विष्णुधर्मोत्तरीय-प्रथमकाण्डे [ १, १६५, ६८ ]

सव्याहृतीकप्रणवा[१] जप्तव्या शिरसा सह ।
[२]प्रणवेन तथाभ्यस्ता[३] वाच्या व्याहृतयः पृथक् ॥

तथा [ विध १, १६५, ११-१६ ]

[४]सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
ये जपन्ति सदा तेषां न भयं विद्यते क्वचित् ॥
दशकृत्वः प्रजप्ता सा रात्र्यह्ना यत् कृतं लघु ।
तत् पापं प्रणुदत्याशु नात्र कार्या विचारणा ॥
शतजप्ता तु सा देवी पापोपशमनी स्मृता ।
सहस्रजप्ता सा देवी चोपपातकनाशिनी ॥
लक्षजप्येन च तथा महापातकनाशिनी ।
कोटिजप्येन राजेन्द्र यदिच्छति तदाप्नुयात् ॥
यक्षविद्याधरत्वं वा गन्धर्वत्वमथापि वा ।
देवत्वमथवा राज्यं भूलोके हतकण्टकम् ॥
दशसाहस्रजप्येन निष्कामः पुरुषोत्तम ।
विधिना राजशार्दूल प्राप्नोति परमं पदम् ॥
यथाकथञ्चिज्जप्तैषा देवी परमपावनी ।
सर्वकामप्रदा प्रोक्ता विधिना किं पुनर्नृप ॥ इति ।

ऋष्यशृङ्गः[५]

सर्वात्मना हि या देवी सर्वभूतानि संस्थिता ।
गायत्री मोक्षसेतुर्वै मोक्षस्थानमनुत्तमम्[६] ॥
षोडशाक्षरकं ब्रह्म [७]गायत्र्याश्च शिरः स्मृतम्[७] ।

---

१ क—सव्याहृतिः सप्रणवा ।
कर—ख—सव्याहृती सप्रणवा ।
२ त—प्राणायामे । प—प्रणवेषु ।
३ क—कर—त—तथा व्यस्ता ।
प—यथा व्यस्ता ।
४ गायत्रीव्याख्यानप्रकरणोद्धृता अग्निपुराणश्लोका [ वह्निपु १० अः (३०क) ] द्रष्टव्याः ।
५ कर—नास्ति ।
६ ङ—ज—न—प—°मलक्षणम् ।
७ क—कर—ख—प—गायत्री सशिरास्तथा ।
च—ङ—च—ज—त—गायत्री सशिराः स्मृता ।

अपि [1]पादमधीयीत [2]गायत्र्याः शिरसा तथा[2] ।
सर्वपापैः प्रमुच्येत[3] [4]ब्रह्म अध्यापयंस्तथा[4] ॥

[5]योगियाज्ञवल्क्यः [ ४, ४४ ]

षोड़शाक्षरकं ब्रह्म गायत्रीं स्वशिरोयुताम्[5] ।
सकृदावर्तयेद् यस्तु सर्वपापैः प्रमुच्यते ॥

तथा [ ४, ४१-४३ ]

एवं यस्तु विजानाति गायत्रीं ब्राह्मणस्तु सः ।
अन्यथा शूद्रधर्मा स्याद् वेदानामपि पारगः ॥
तस्मात् सर्वप्रयत्नेन ज्ञातव्या ब्राह्मणेन सा ।
व्याहृत्योङ्कारसहिता सशिरस्का यथार्थतः ॥
सशिराश्चैव गायत्री यैर्विप्रैरवधारिता ।
ते जन्मबन्धनिर्मुक्ताः परं ब्रह्म [6]विदन्ति च[6] ॥

अग्निपुराणम् [ वह्निपु १० अः (३०क) ]

सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
ये जपन्ति[7] सदा तेषां न भयं विद्यते क्वचित् ॥

योगियाज्ञवल्क्यः [ २, ६५ ]

आद्यास्तु व्याहृतीस्तिस्रो गायत्रीं स्वशिरोयुताम् ।[8]
ओङ्कारं विन्दते यस्तु स मुनिर्नेतरो जनः[9] ॥

[10]शङ्खः [ १२, १४-१६ ]

सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
ये जपन्ति सदा तेषां न भयं विद्यते क्वचित् ॥
शतजप्ता तु सा देवी दिनपापप्रणाशिनी ।
सहस्रजप्ता तु तथा पातकेभ्यः प्रमोचनी ॥
दशसाहस्रजप्येन सर्वकिल्बिषनाशिनी ।
लक्षजप्ता तु सा देवी महापातकनाशिनी ॥

---

१ क२—पादमधीता सा ।
२ क२—ख—घ—च—गायत्री सशिरास्तथा । ङ—ज—गायत्री शिरसा तथा ।
३ क२—घ—त—प—प्रमुच्यन्ते ।
४ क२—घ—ङ—च—ज—प—ब्रह्माध्यापयतस्तथा । न—ब्रह्मधासयतस्तथा । ख—ब्रह्माध्यापनमेव च ।
५ क२—नास्ति ।
६ योगिया—विशन्ति वै ।
७ घ—जानन्ति ।
८ क—क२—त—न—प—व—आद्या व्याहृतयः सप्त गायत्री सशिरास्तथा ।
९ प—द्विजः ।
१० क२—नास्ति ।

स्वरित एकाक्षर ओङ्कार ऋग्वेदे स्वरितोदात्त एकाक्षरो यजुर्वेदे स्वरितोदात्त एकाक्षरः साम्नि संक्षिप्तोदात्त एकाक्षरोऽथर्ववेदे। उदात्तो नात्र संशयः।[१]

यथा हि प्रबलो वह्निः कक्षं दहति सानिलः।
तथा कालाग्निरुद्रोऽसौ लोकान्[२] दहति चान्तकः॥

इति वचनमासाद्यम्[३]।

वेदाः साङ्गास्तु चत्वारोऽधीताः सर्वे च वाङ्मयाः।
गायत्रीं यो न जानाति वृथा तस्य परिश्रमः॥
गायत्रीं चैव वेदांश्च तुलया समतोलयत्।
वेदा एकत्र साङ्गास्तु गायत्री चैकतः स्मृता॥[४]

अस्याः[५] योऽधीती नार्थतत्त्वज्ञस्तस्य तद्धारणा वृथा।
भारवाही च भृतकः केवलं क्लेशभाग् भवेत्॥

तथा— ज्ञानं कर्म च संयुक्तमक्षय्यं[६] कथितं मया।
अधीतं श्रुतसंयुक्तं तथा श्रेष्ठं न केवलम्॥
स्थाणुरयं भारहारः[७] किलाभूदधीत्य वेदं न विवेद चार्थम्।
योऽर्थवित् सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा॥

[शङ्ख: १२, १७] सुवर्णस्तेयकृद् विप्रो ब्रह्महा गुरुतल्पगः।
सुरापश्च विशुध्यन्ति लक्षजापान्न संशयः॥

तथा [ शङ्ख १२, १८ ; २२-२८ ]

हुता देवी विशेषेण सर्वकल्मषनाशिनी।
सर्वकामप्रदा देवी वरदा भक्तवत्सला॥
घृतयुक्तैस्तिलैर्वह्निं हुत्वा तु सुसमाहितः।
गायत्र्या प्रयतः शुद्धः सर्वपापैः प्रमुच्यते॥
पापात्मा लक्षहोमेन पातकेभ्यः प्रमुच्यते।
अभीष्टं लोकमाप्नोति तथा पापविवर्जितः॥

---

१ गोपथब्राह्मणे ( पू १,२५ ) 'स्वरितोदात्त एकाक्षर ओङ्कार ऋग्वेदे त्रैस्वर्योदात्त एकाक्षर ओङ्कारो यजुर्वेदे दीर्घप्लुतोदात्त एकाक्षर ओङ्कारः सामवेदे ह्रस्वोदात्त एकाक्षर ओङ्कारोऽथर्ववेदे'इति तुल्यार्थोक्तिर्दृश्यते। योगियाज्ञवल्क्यस्मृतिः (२, ७८-७९) तथा वृद्धपराशरस्मृतिः ( चार ४० ) द्रष्टव्ये।

२ न—काल्यं।

३ क—च—वचनमसह्यम्। ज—न— मासाद्य।

४ याज्ञियाज्ञवल्क्या( ४, ८० ) द्रष्टव्यः।

५ केवलं क-च-पुस्तकयोः पाठोऽयं दृश्यते।

६ ङ—न—सयुक्तं मुक्तार्थे।

७ ङ—भारवाही।

गायत्री वेदजननी गायत्री पापनाशिनी ।
गायत्र्यास्तु परं नास्ति दिवि चेह च पावनम् ॥
हस्तत्राणप्रदा देवी पततां नरकार्णवे ।
तस्मात्तामभ्यसेन्नित्यं ब्राह्मणो हृदये शुचिः ॥
गायत्रीजप्यनिरतं हव्यकव्येषु योजयेत् ।
तस्मिन्न तिष्ठते पापमब्बिन्दुरिव पुष्करे ॥

शङ्खः [ १२, ३ ]

अस्तीत्यनुवृत्तौ[1]—न व्याहृतिभ्यः परं होमे ।

योगियाज्ञवल्क्यः [ ३, १०-११ ]

एतास्तु व्याहृतीः सप्त यः स्मरेत् प्राणसंयमे ।
उपासितं भवेत्तेन विश्वं भुवनसप्तकम् ॥
सर्वेषु चैव लोकेषु कामचारः स[2] जायते ।
एषा लोकवती ज्ञेया तनुराद्या प्रजापतेः ॥

बौधायन. [ बौ ध ४, ३, १-२ ]

प्रायश्चित्तानि वक्ष्यामोऽविख्यातानि[3] विशेषतः ।
समाहितानां युक्तानां प्रमादेषु कथं भवेत् ॥

ओंपूर्वाभिर्व्याहृतिभिः सर्वाभिः सर्वपातकेष्वाचामेत्। यत् प्रथममाचामति तेनर्ग्वेदं प्रीणाति यद्द्वितीयं तेन यजुर्वेदं यत्तृतीयं तेन सामवेदम्। यत् प्रथमं संमार्ष्टि[4] तेनाथर्ववेदं यद्द्वितीयं तेनेतिहासपुराणादीनि। यत् सव्यं पाणिं प्रोक्षति पादौ शिरो हृदयं चक्षुः कर्णौ नासिकां नाभिञ्चोपस्पृशति तेनौषधिवनस्पतीन्[5] सर्वांश्च देवान् प्रीणातयाप्नोति च। तस्मादाचमनादेव सर्वस्मात् पापात् प्रमुच्यते[6] ।

उपपातकानुवृत्तौ यमः

ओङ्काराद्या व्याहृतयः सहस्रमनुमन्त्रिताः ।
फलाहारस्तथाभ्यस्य तदह्नैव विशुध्यति ॥

---

१ ङ—अस्तीत्यनुवृत्तौ ।
२ क२—च ।
३ क२—व्याख्यातानि ।
४ घ—ङ—न—मार्ष्टि । काशी-संस्कृतग्रन्थमालायां मुद्रापिते बौधायनधर्मसूत्रे—परिमार्ष्टि । तत्र मुद्रापितेषु पाठेष्वन्यत्रापि क्वचित् क्वचिद्भेदा दृश्यन्ते । बौधायन-ग्रन्थांशः (४, ७, ४) तथा ब्राह्मणसर्वस्वम् ( ३१ पृ ) द्रः ।
५ घ—ङ—न—पुस्तकेष्वाकरग्रन्थे च °वनस्पतयः ।
६ क—ख—ङ—च—पूर्तो भवति ।

ओङ्कारयुक्तास्तिस्रो व्याहृतीः ओं भूर्भुवः स्वरिति सहस्रमनुमन्त्रिताः सहस्र जपित्वा अभ्यस्य पुनः पुनर्जपित्वा [1]सहस्रत्रयं जपित्वेत्यर्थः। ततः फलाहारस्तिष्ठन् तदह्नैव विशुद्धो भवतीति।

वसिष्ठः [ २३, २० ]

मनसा पापं ध्यात्वा ओम्पूर्वा भूराद्याः सत्यान्ता व्याहृतीर्जपेत्।

शातातपः

अनुदकमूत्रपुरीषकरणे [2]श्वकाकस्पर्शे सचेलस्नानं महाव्याहृतिभिश्चरेत्
महाव्याहृतिभिरिति भूर्भुवःस्वारिति तिसृभिरित्यर्थः।

बृहद्यमः

गोहत्यां स्त्रीहत्यां राजन्यवैश्यहत्यां न्यासापहारं कन्यादूषणं कृत्वा ग्रामात् प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्य प्रभूतेनेन्धनेनाग्निं प्रज्वाल्य गव्येन घृतेन व्याहृतिभिराहुतिसहस्रं जुहुयात्। गायत्र्या अष्टसहस्रमावर्त्यादित्य प्रेक्षमाणश्चतसृभि[3]र्हिरण्यवर्णाभिरात्मानं प्रोक्षयित्वा वामदेव्यं त्रिरावर्त्य तदेतस्मात पूतो भवति।

अत्र च सर्वत्राविशेषितव्याहृतिशब्देन भूर्भुवः स्वरिति तिस्र एव व्याहृतय उच्यन्ते। तत्र स्वगृह्योक्तकुशकण्डिकाविधानेन परिसमूहनादि पर्युक्षणान्तं कृत्वा आघारादि प्राजापत्यान्तं हुत्वा व्याहृतित्रयस्य प्रजापतिर्ऋषिरग्निवायुसूर्या देवता गायत्र्युष्णिगनुष्टुभश्छन्दांसि [4]अनादिष्टप्रायश्चित्तेषु प्राणायामे च विनियोगः। इदं भूर्भुवः स्वरिति प्रथमतो देवतोद्देशं कृत्वा ओं भूर्भुवः स्वः स्वाहा एवं क्रमेणाहुतिसहस्रं हुत्वा स्विष्टकृद्धोमं समापयेत्। ततोऽष्टाधिकसहस्रं गायत्रीं जपित्वा चतसृभिर्हिरण्यवर्णाभिरिति।

हिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः[5]।
या अग्निं गर्भं दधिरे सुवर्णास्ता न आपः शं स्योना भवन्तु॥
यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यन् जनानाम्।
या अग्निं गर्भं दधिरे सुवर्णास्ता न आपः शं स्योना भवन्तु॥

---

१ क१—सहस्रत्रयं जपित्वेति नास्ति।
ख—त—सहस्रं।

२ क२—श्वपाक°।

३ क—ङ— तिसृभि।

४ क१—अनादिष्ट अनाद्यि°।
घ—ङ—मनाम्नात°। त—अम्नात°।

५ अथर्ववेदे (१, ३३, १) एकाग्निकाण्डे (१, २, २) च—यास्वग्निः। तैत्तिरीय-संहितायान्तु (५, ६, १, १) यास्विन्द्र इति पाठः।

यासां देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति ।
या अग्निं गर्भं दधिरे सुवर्णास्ता न आपः शं स्योना भवन्तु ॥
शिवेन मा चक्षुषा पश्यताऽपः शिवया तन्वोप स्पृशत त्वचं मे ।
घृतश्चुतः शुचयो याः पावकास्ता न आपः शं स्योना भवन्तु ॥
वामदेव्यं त्रिरावर्त्त्येति ।
कया नश्चित्र आभुवदूती सदावृधः सखा ।
कया शचिष्ठया वृता ॥
इत्यादि भवास्तुतिभिरित्यन्तं कण्डिकात्रयं ( वा स ३६, ४-६ ) वामदेव्यम् ।
अत्र च ऋष्यादिकं व्याख्यानञ्च शान्तिप्रकरणे लिखितम् ।

## अथाचमनम्

तत्र प्राणायामानन्तरचमने बौधायनः
सूर्यश्च मा मन्युश्चेति प्रातः सपवित्रेण पाणिनेति ।

**सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्ताम् । यद्रात्र्या पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना । [1]अहस्तदवलुम्पतु यत् किञ्चिद्दुरितं मयि । इदमहमापोऽमृतयोनौ[2] सूर्ये ज्योतिषि[3] जुहोमि स्वाहा ॥ १७**

[ तैः आः १०, २५, १ ]

मा मां रक्षन्ताम् । के—सूर्यश्च मन्युश्च मन्युर्यज्ञः । मन्युपतयश्च यज्ञपतय इन्द्रादयः । केभ्यो रक्षन्ताम्—पापेभ्यः । किम्भूतेभ्यः—मन्युकृतेभ्यः अस्माङ्-यज्ञकृतेभ्यः । मन्युः क्रोधो वा । अत्र पक्षे क्रोधपतय इन्द्रियाणि क्रोधकृतेभ्यः पापेभ्यः[4] रक्षन्तामिति । किमुक्तं भवति—ममैतादृशः क्रोधो मा भवतु येनाऽहमकार्यं करोमीति । किञ्च यत् पापं रात्र्या अकार्षं कृतवानस्मि । केन केन—मनसा वाचा हस्ताभ्यां पद्भ्याम् उदरेण शिश्ना । निगदव्याख्यातमेव । तत् पापम् अहः दिवसः अवलुम्पतु नाशयतु । यत् किञ्चित् मयि मदाश्रितं दुरितं पापं तदिदम् आपः अहं सूर्ये जुहोमि । किम्भूते—ज्योतिषि हृत्पद्ममध्यस्थित-

---

१ तैत्तीरीयारण्यकेऽत्र रात्रिस्तदिति पाठः ।
एतद्विषयकी विचारो भूमिकायां द्रष्टव्य. ।
२ तैः आः— मह मामम्‍तयीनौ ।
३ क—क२—ख—न—परमात्मनि इत्यधिकम् ।
४ क२—क्रोधी इत्यधिकम् ।

प्रकाशरूपे।[1] पुनः किम्भूते—अमृतयोनौ [2]अविद्यमानमरणोत्पत्तिस्थाने नित्यत्वादित्यर्थः। स्वाहा तत् सुहुतं[3] भवतु। मेति त्वामौ द्वितीया या [पा ८, १, २३] इति द्वितीयैकवचने मादेशः। अत्र[3] मन्युर्दैन्ये क्रतौ क्रुधीत्यमरकोषः [ ३, ३, १५३ ] प्रमाणम्। शिम्रा इति शिम्रेनेति प्राप्ते सर्वे विधयश्छन्दसि विकल्प्यन्त इतीनादेश न भवति। आप इति यथा सर्वमापोमय जगदिति सकारान्त आपःशब्द स्तथायमपि[4]।

## अथ मार्जन-द्रुपदामन्त्राघमर्षणानि

तत्र आपोहिष्ठेत्यादितिसृभिर्मार्जनम्। एतच्च मन्त्रत्रयमुपरिगतप्रातःस्नान एव ( २४-२५ पृः ) व्याख्यातमिति तत्रैवानुसन्धेयम्।

ततो मार्जनान्तरं द्रुपदामन्त्रमघमर्षणमन्त्रञ्च प्रत्येकं त्रिरावर्त्य जलगण्डूषं नासिकाग्रे निधाय तज्जलं पूरकोच्छ्वासेनाभ्यन्तरं प्रवेश्य देहस्थसकलपापमादाय रेचकोच्छ्वासेन बहिर्निर्गतमिति विचिन्त्य[5] भूमावास्फाल्य[6] त्यजेत्।[7]

छन्दोगपरिशिष्टे कात्यायनः [ २, १, ८ ]

> करेणोद्धृत्य सलिलं घ्राणमासाद्य तत्र च।
> जपेदनायतासुर्वा त्रिः सकृद् वाऽघमर्षणम्॥

अनायतासुर्वेति वाशब्ददर्शनाच्छ्वासं संयम्यासंयम्य[8] वेत्यर्थः।

योगियाज्ञवल्क्यः [ ७, ४८-५० ]

> द्रुपदां तु[9] त्रिरावर्त्य तथा चैवाघमर्षणम्।
> [10]सोपांशु प्रणवं वापि पाता ह्यापो ह्यघापहाः[10]॥

तथा [ ७, १७८-८० ]

> कोकिलो राजपुत्रस्तु द्रुपदाया ऋषिः स्मृतः।
> अनुष्टुप् च भवेच्छन्द आपश्चैव तु देवतम्॥

---

१ ख—परमात्मनि परमात्मस्वरूपे इत्यधिकम्।
२ ख—चित्स्वरूपे पानीययोनौ तत् पापं जुहोमि स्वाहा। ततश्चाहुतं मम।
३ क२—इतः पूर्वं मनुर्यज्ञ इत्यधिकम्।
४ क२—नपुंसकम् इत्यधिकम्।
५ क२—नास्ति।
६ क२—वास्फालयेत्।
७ क२—नास्ति।
८ क२—संयम्यानायम्य।
९ योगिया—द्रुपदां वा।
१० योगिया—सोपांशु प्रणवेनापि आपः पीता अघापहाः।

सौत्रामण्यामवभृथस्नाने[1] च[2] विनियोजनम्।

तत्र द्रुपदामन्त्रो यथा

द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव।
पूतं पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः॥ १८

[ वा स २०, २० ]

आपो जलानि मा माम् एनसः पापात् शुन्धन्तु शोधयन्तु पवित्रीकुर्वन्तु। अत्र दृष्टान्तमाह—यथा स्विन्नो घर्मोपहतः पुरुषः द्रुपदात् वृक्षमूलात् वृक्षमूलं प्राप्य मुमुचानस्त्यक्तवान्। किं त्यक्तवान्—अर्थवशात् स्वेदमिव घर्मजलं त्यक्तवान्। तथा माम् आप एनसः शुन्धन्तु। द्वितीयं दृष्टान्तमाह—यथा स्नातः पुरुषः मलात् कायमलात् शुद्धो भवति तथा आप एनसो मां शोधयन्तु। तृतीयं दृष्टान्तमाह—यथा आज्यं घृतं पवित्रेण प्रादेशपरिमितसाग्रकुशपत्रद्वयेनोत्पवनेन पूतं भवति तथा मामापः पवित्रीकुर्वन्तु। द्रुपदादिति ल्यब्लोपे पञ्चमी वक्तव्या। मुमुचान इति मुच्लृ मोचणे इत्यस्य लिटः कानज् वेति [ पा ३, २, १०६ ] कानचो रूपम्। शुन्धन्त्विति शुन्ध शुद्धावित्यस्य धातो रूपम्। तदयं मन्त्रस्य वाक्यार्थः —यथा घर्मोपहतस्य वृक्षच्छायाश्रयणात् घर्मापगमो भवति यथा वा स्नानात् देहमलापगमः स्यात् यथा वा पवित्रेणाज्यं पवित्रीक्रियते तथा आपो मां पवित्रीकुर्वन्तु।

द्रुपदामन्त्रमाहात्म्यमघमर्षणमन्त्रस्य च व्याख्या माहात्म्यञ्च मध्याह्नस्नान एव लिखितमिति तत्रैवानुसन्धेयम्।

## अथ सूर्योपस्थानम्

तत्र छन्दोगपरिशिष्टे कात्यायनः [ २, १, १०—१३ ]

उत्थायार्कं प्रति प्रोहेत् त्रिकेणाञ्जलिनाम्भसः।
उच्चित्रमृग्द्वयेनैव उपतिष्ठेदनन्तरम्॥
सन्ध्याद्वयेऽप्युपस्थानमेवमाहुर्मनीषिणः।
[3]मध्येऽह्न उदये चैव विभ्राडादीच्छया जपेत्[4]॥

---

१ यीगिया—सौत्रामण्यवभृथके स्नाने। का२—सौत्रामण्यावभृथे स्नानेन।

२ यागिया—तद।

३ क—ङ—त—न—मध्याह्ने। घ—मध्येऽर्कं।

४ क—घ—च—प—भवेत्।

[1]तदसंसक्तपार्ष्णिर्वा एकपादर्धपादपि ।
जपेत् कृताञ्जलिर्वापि ऊर्ध्वबाहुरथापि वा ॥
यत्र स्यात् कृच्छ्रभूयस्त्वं श्रेयसोऽपि मनीषिणः ।
भूयस्त्वं ब्रुवते तत्र कृच्छ्राच्छ्रेयो ह्यवाप्यते ॥

योगियाज्ञवल्क्यः [ १०, ३ ; ५-६ ]

गायत्र्यास्तु जपं कृत्वा पूर्वमेव यथाविधि ।
उपस्थानं स्वकैर्मन्त्रैरादित्यस्य तु कारयेत् ॥
उदु त्यं चित्रं देवानामुद्वयं तमसः परि ।
तच्चक्षुर्देव इति च एकचक्रेति वै ऋचा ॥
उदगादित्ययं मन्त्र आकृष्णेनेति वै ऋचा ।
हृष्टेन संप्रयुञ्जीत शक्त्यान्यानि जपेत् सदा ॥

अत्रिः

उदुत्यं जातवेदसमिति सप्तकृत्व आदित्योपस्थानादिह कृतैः पूर्वकृतैश्च पापैर्मुच्यते ।

तत्रोदुत्यमित्याद्येकैव कण्डिका सप्तधा पठितव्या ।

हारीतः

आकृष्णेनेत्यादित्यमुपतिष्ठन् सर्वपूतात्मा भवति ।

व्यासः

उदुत्यं जातवेदेति ऋषिः प्रस्कण्व उच्यते ।
छन्दो गायत्रमेवास्य सूर्यो दैवतमेव च ॥
अग्निष्टोम उपस्थाने विनियोगः प्रकीर्तितः ।
चित्रं देवेति च ऋच ऋषिः कौत्स उदाहृतः ॥
त्रिष्टुप् छन्दो दैवतञ्च सूर्यो ह्यस्याः प्रकीर्तितः ।
अग्निष्टोम उपस्थाने विनियोगस्तथैव च ॥

तत्र उत्थाय गायत्र्या जलाञ्जलित्रयं प्रक्षिप्य ऊर्ध्वबाहुः सूर्यमुपतिष्ठेत् ।

उदुत्यमन्त्रस्य प्रस्कण्व ऋषिर्गायत्रीच्छन्दः सूर्यो देवताऽग्निष्टोमे सूर्योपस्थाने विनियोगः ।

**उदु त्यं जातवेदसं देवं वहन्ति केतवः ।**
**दृशे विश्वाय सूर्यम् ॥ १९**

[ ऋ स १, ५०, १ । वा स १, ४१ ]

---

१ क—ग—तदसंयुक्त ।

त्यं तं सूर्यं देवं केतवो रश्मयः उद्वहन्ति ऊर्ध्वं वहन्ति। किम्भूतम्—जातवेदसं अग्नितेजोमयमित्यर्थः। किमर्थमुद्वहन्ति—दृशे दर्शनाय। कस्य—विश्वाय विश्वस्य। अयं वाक्यार्थः—तेजःस्वरूपं सूर्यं देवं विश्वप्रकाशनाय रश्मय ऊर्ध्वं वहन्तीति आदित्यस्वरूपोत्कीर्तनमिदम्। उदु त्यमित्यत्र मध्यवर्ती उकारः स्तोभार्थः[1]। विश्वायेति षष्ठीस्थाने चतुर्थी।

यमिनं रश्मय उद्वहन्ति कीदृशोऽसावित्याकाङ्क्षायामाह चित्र देवानामिति। कौत्स ऋषिस्त्रिष्टुप् छन्दः सूर्यो देवताऽग्निष्टोमे सूर्योपस्थाने विनियोगः।

**चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः।**
**आ प्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥ २०**

[ ऋ स, १, ११५; १। वा स ७, ४२ ]

असौ सूर्य उदगात् उदितोऽभवत्। किम्भूतः—मित्रस्य वरुणस्य अग्नेः त्रयाणां देवानां चक्षुः। पुनः किम्भूतः—देवानामनीकं मित्रादिव्यतिरिक्ता-नामन्येषामनीकं समूहः। कथमुदगात्—चित्रमाश्चर्यं यथा स्यात्। उदितश्च द्यावापृथिवी अन्तरीक्षं स्वर्गमर्त्याकाशं आप्राः आपूरितवान् स्वस्य रश्मिजालेनेति भावः। पुनः किम्भूतः—जगतः जङ्गमस्य तस्थुषः स्थावरस्य आत्मा। स्थावर-जङ्गमात्मकसकलसंसारमयोऽयमेव सूर्य इत्यर्थः। आप्रा आङ्पूर्वस्य प्रा पूरण इत्यस्य लङः प्रथमैकवचनस्थाने तिङां तिङो भवन्तीति मध्यमपुरुषैकवचनम्।

तच्चक्षुः किम्भूतमित्याकाङ्क्षायां पुनराह

तच्चक्षुरित्यस्य दध्यङ्ङाथर्वणऋषिः सूर्यो देवता पुरउष्णिक्छन्दो महा-वीराद्यन्तयोः शान्तिकरणे विनियोगः।

**तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्।**
**पश्येम शरदः शतं जीवेम शरदः शतं शृणुयाम शरदः शतम्[2] ॥ २१**

[ का स तथा वा स ३६, २४ ]

तत् पूर्वोक्तं चक्षुः चक्षुरिव प्रकाशकत्वादादित्यमण्डलमित्यर्थः। किम्भूतम्—देवहितं देवानां समीहितम्। पुनः किम्भूतम्—शुक्र शुक्लं निर्मलम्। पुनः किम्भूतम्—पुरस्तात् प्राच्यां दिशि उच्चरत् उद्गच्छत्[3]। तदेतस्य

१ ख—सम्बोधनार्थः। ङ—शोभार्थः। ग—उभयार्थः।

२ काण्व-वाजसनेयिसंहितायामेतावानेव मन्त्रभागो लभ्यते। माध्यन्दिनीयसंहितायां त्वधिकः।

३ क—उद्यत् उद्गच्छत्। ग—न—उद्यत्।

उपस्थानं कृत्वा वयं शरदः शतं शतं वर्षाणि पश्येम। तथा शरदः शतं जीवेम तथा शरदः शतं शृणुयाम।[१] सोऽयं सर्ववेदमयः सर्वदेवमयश्चादित्यः प्रत्यहं प्राच्यामुदेति। तस्य प्रसादेन वयमविकलेन्द्रियाः शतं वर्षाणि जीवेमेत्याशंसा।

उद्वयमिति मन्त्रस्य प्रस्कण्व ऋषिः[२] सूर्यो देवता अनुष्टुप् छन्दः सौत्रामण्य-वभृथे विनियोगः।

**उद्वयं तमसस्परि स्वः पश्यन्त उत्तरम्।**

**देवं देवत्रा[३] सूर्यमगन्म ज्योतिरुत्तमम्॥ २२**

[ ऋ स १, ५०, १०। वा स २०, २१ ]

उदित्ययमुपसर्गः अगन्म इत्यनेन क्रियापदेन सह सम्बध्यते। वयं सूर्यं देवम् उदगन्म उद्गच्छाम। किम्भूता वयम्—परिपश्यन्तः सर्वतोभावेन पश्यन्तः। किं पश्यन्तः—स्वः स्वर्गलोकम्। किम्भूतं—तमसः अप्रकाशरूपात् भूर्लोकात्। उत्तरम् उन्नततरम् ऊर्ध्वस्थितमित्यर्थः। अपि किम्भूता वयम्—देवत्राः देवेन सूर्येण त्राणं येषां ते देवत्राः। सूर्यं किम्भूतम्—ज्योतिः ज्योतिस्वरूपम्। उत्तमम् सर्वज्योतिषामग्न्यादीनामुत्कृष्टम्। अयमत्र वाक्यार्थः—वय सूर्येण रक्षिताः भूर्लोकस्योपरिस्थितं स्वर्गलोकं पश्यन्तः तमतिक्रम्य परंज्योतिःस्वरूपे[४] सूर्ये सङ्गता भवाम इति सूर्ये प्रार्थना। व्यत्ययो बहुलमिति [ पा ३, १, ८५ ] बहुलवचनात् गम्लृ धातोर्वर्तमाने लङ उत्तमपुरुषबहुवचनम्। बहुलं छन्दसीति शपो लुक्। बहुलवचनात् मकारस्य नकारः। अगन्म इति सिद्धम्।

स्वयम्भूरित्यस्य सूर्य ऋषिः सूर्यो देवता। यजुष्टाच्छन्दो नास्ति। सूर्योप-स्थाने विनियोगः।

**स्वयम्भूरसि श्रेष्ठो रश्मिर्वर्चोदा असि वर्चो मे देहि। २३**

[ वा स २, २६ ]

हे आदित्यरश्मे त्वं स्वयम्भूरसि केनापि न कृतोऽसि स्वयमेव भूतोऽसीत्यर्थः। किञ्च श्रेष्ठो रश्मिरसि[५] श्रेष्ठः प्रशस्यतमः। अपि च वर्चोदा असि वर्चस्तेजस्तद्

---

१ इतः परं त-पुस्तके महीधरकृतौ माध्यन्दिनीय-मन्त्रव्याख्याशो योजितः।

२ च—ब्रह्मऋषि।

३ आकरग्रन्थेषु देवत्रेति पाठः।

४ ङ—परज्योतिःस्वरूपे।

५ ख—ज्योतिरसीत्यधिकम्।

द्वासीत्यर्थः। यतस्त्वमेवम्भूतः अतो[1] मे मह्यं वर्चो देहि ब्राह्मं[2] तेजो देहीत्यर्थः। आदित्यस्य सप्त रश्मयः। तत्र चतुर्दिक्षु चत्वार ऊर्ध्वाधोगामिनौ द्वौ मध्यवर्ती एकः। स च हिरण्यगर्भः सर्वरश्मिश्रेष्ठः। स एवात्र सम्बोध्यते। अयं वाक्यार्थः—यस्य स्वयम्भूः श्रेष्ठस्तेजोदाता च रश्मिस्त्वं[3] लोकैरभ्यर्थ्यसे[4] स परमेश्वरः सविता अस्माकञ्च प्रीतो भवत्विति। स्वयम्भूरित्यादिभिरादित्यं स्तुत्वा वर्चो मे देहीति तस्मिन् प्रार्थना।

## अथ गायत्रीजपः

गायत्रीं परिकीर्तयन्ति मुनयो वेदस्य यां मातरं
गायत्र्याः शतधा जपेन दुरितं यस्याः समुच्छिद्यते।
सन्तः संवृतमत्सरेण मनसा तस्याः प्रमाणाङ्किता
धर्माध्यक्ष-हलायुधेन रचिता व्याख्येयमाकर्ण्यताम्॥

तत्र स्नानानन्तरं बौधायनः [ बौ ध २, ८, १२ ]

दर्भेष्वासीनो दर्भान् धारयमाणः प्राङ्मुखः सावित्रीं सहस्रकृत्व आवर्तयेच्छत-कृत्वोऽपरिमितकृत्वो वा।

शङ्खः [१२, ४]

कुशशय्यामासीनः[5] कुशोत्तरीयवान्[6] कुशपवित्रपाणिः प्राङ्मुखः[6] सूर्याभिमुखो वा अक्षमालामादाय देवताध्यायी[6] जपं कुर्यात्।

तथा [१२, ५-६]

सुवर्णमणिमुक्तास्फटिकपद्माक्षरुद्राक्षपुत्रञ्जीवकानामन्यतमेनाक्षमालिकां कुर्यात् कुशग्रन्थिकृतां हस्तोपयामैर्वा[7] गणयेत्।
हस्तोपयामैरङ्गुलिपर्वभिरित्यर्थः।

---

१ क—यतस्त्वं।
२ क—ब्राह्मणं। ङ—पुस्तकेऽत्र रिक्तं स्थानं कस्यापि पदस्य पतितत्वं सूचयति।
३ क—रश्मिस्तेजोऽर्थं। त—रश्मिस्तेजो। न—तेजोरश्मिस्तेजोऽर्थं।
४ क—त—न—°रभ्यर्थ्यते।
५ क—कुशशय्यायामासीनः। ङ—ह—कुश-शय्यासमासीनः। प—कुशासनः।
६ मुद्रितायां शङ्ख-स्मृतौ 'कुशोत्तरायां वा' इति 'उदङ्मुखः' इति 'देवतां ध्यायन्' इति पाठाः।
७ क—हस्तोपमैः°। ङ—त—हस्तोपयमैः°। प—हस्तमयैः°।

योगियाज्ञवल्क्यः [ ४, ३० ]

प्रणवो भूर्भुवः स्वश्च अङ्गानि हृदयादयः ।
त्रिरावर्त्य ततः पश्चादार्षं छन्दश्च दैवतम् ॥
विनियोगं तथा रूपं ध्यातव्यं क्रमशस्तु वै ।

त्रिरावर्त्येति— प्रणवादि भूर्भुवःस्वरित्यक्षरचतुष्टयं हृदयशिरःशिखासु स्थानत्रयेषु एकैकवारन्यासेन त्रिरावर्तितं कर्तव्यमित्यर्थः ।

तथा [ ४, २७ ; २८ , ३० ]

श्वेतवर्णा समुद्दिष्टा कौशेयवसना तथा ।
अक्षसूत्रधरा देवी पद्मासनगता शुभा ॥
आदित्यमण्डलान्तःस्था ब्रह्मलोकस्थिताऽथवा ।
तत्रावाह्य जपित्वा च नमस्कारैर्विसर्जयेत् ॥

तथा [ ४, ४ ] सविता देवता ह्यस्या मुखमग्निस्तदित्यृचः ।
विश्वामित्र ऋषिश्छन्दो गायत्रं तु[1] विधीयते ॥

तथा [ ४, ५ ] विश्वस्य जगतो मित्रं विश्वामित्रः प्रजापतिः ।
[2]विनियोग उपनये[2] प्राणायामे जपे तथा ॥ इति ।

प्राणायामेऽप्यस्याश्चतुर्विंशत्यक्षराया गायत्र्या अन्तर्भावो विद्यते । न त्वनयैव चतुर्विंशत्यक्षरया प्राणायामविधानम् ।

व्यासः— विश्वामित्र ऋषिश्छन्दो गायत्री सविता तथा ।
देवता विनियोगश्च गायत्र्या जप उच्यते ॥

योगियाज्ञवल्क्यः [ ४, २८ ]

आवाह्य यजुषानेन तेजोऽसीति विधानतः ।
एतद्‌यजुः पुरा दृष्टं देवैर्दर्शनकाङ्क्षिभिः ॥

विष्णुधर्मोत्तरम् [ १, १६५, ७१-७३ ]

कर्मेन्द्रियाणि पञ्चैव पञ्च बुद्धीन्द्रियाणि च ।
पञ्च पञ्चेन्द्रियार्थाश्च भूतानाञ्चैव पञ्चकम् ॥
मनोबुद्धिस्तथैवात्मा अव्यक्तञ्च यदूत्तमम्[3] ।
चतुर्विंशत्यथैतानि गायत्र्या अक्षराणि च ॥
प्रणवं पुरुषं विद्धि सर्वगं पञ्चविंशकम् ॥

---

१ क—च—गायत्र्यास्तु । त—गायत्र्याश्च ।

२ आदर्शपुस्तकेषु विनियोगोपनयने ।

३ क—च—त—प—यदुत्तमम् ।
ङ—यदुत्तरम् । प्रकृते तु यदुक्तश्च स्त्री क्लीबोऽत्र यदूत्तमशब्देन सम्बोध्यते ।

योगियाज्ञवल्क्यः [ ४, ६३-७० ]

अक्षराणान्तु दैवत्यं संप्रवक्ष्याम्यतः परम्।
आग्नेयं प्रथमं ज्ञेयं वायव्यं च द्वितीयकम्॥
तृतीयं सूर्यदैवत्यं चतुर्थं वैद्युतं तथा।
पञ्चमं यमदैवत्यं वारुणं षष्ठमुच्यते॥
बार्हस्पत्यं सप्तमन्तु पार्जन्यं चाष्टमं विदुः।
ऐन्द्रन्तु नवमं ज्ञेयं गान्धर्वं दशमं तथा॥
पौष्णमेकादशं प्रोक्तं [1]द्वादशं मैत्रवारुणम्[1]।
त्वाष्ट्रं त्रयोदशं ज्ञेयं वासवं च चतुर्दशम्॥
मारुतं पञ्चदशकं सौम्यं षोड़शकं स्मृतम्।
सप्तदश त्वाङ्गिरसं वैश्वदेवमतः परम्॥
आश्विनं चैकोनविंशं प्राजापत्यन्तु विंशकम्।
सर्वदेवमयं प्रोक्तमेकविंशमतः परम्॥
रौद्रं द्वाविंशकं प्रोक्तं त्रयोविंशन्तु ब्राह्मकम्।
वैष्णवं च चतुर्विंशमेता अक्षरदेवताः॥
जप्यकाले तु संचिन्त्य तासु सायुज्यतां जपेत्॥

नित्यजपविधौ योगियाज्ञवल्क्यः [ ४, २६ ]

ओङ्कारं पूर्वमुच्चार्य भूर्भुवः [2]स्वस्तथैव च[2]।
गायत्री[3] प्रणवश्चान्ते [4]जपो ह्येष उदाहृतः[4]॥

सूर्योपस्थानानन्तरं नित्यजपविधौ

व्यासः— प्रणवव्याहृतियुतां गायत्रीं च जपेत्ततः।
समाहितमनास्तूष्णीं मनसा वा विचिन्तयेत्॥

तथा— दशभिर्जन्मजनितं शतेन तु पुराकृतम्।
त्रियुगं[5] तु सहस्रेण गायत्री हन्ति किल्बिषम्[6]॥

योगियाज्ञवल्क्यः[7]

प्रणवाद्यन्तसम्बद्धा[8] भूर्भुवः स्वस्तथैव च।
जप्य इति।

---

१ क—मैत्रावरुण। ख—मैत्रन्तु द्वादशं स्मृतम्। प—मैत्रावरुणं ततः परम्।
२ न—स्वस्ततः परम्। गुणविष्णुः—स्वरनन्तरम्।
३ प—गायत्र्याः।
४ क—जप्ये ह्येवमुदाहृता।
५ त—त्रिजन्मज। न—त्रियुगं तु।
६ क—दुष्कृतम्।
७ छ—योगियाज्ञवल्क्य इति नास्ति।
८ प—प्रणवाद्याः समारभ्य। त—व—प्रणवाद्य यत्र हंरब्धा।

कूर्मपुराणम् [ कू पू उ १४, ५२ ]

ओङ्कारमादितः कृत्वा व्याहृतीस्तदनन्तरम् ।
ततोऽधीयीत सावित्रीमेकाग्रः श्रद्धयाऽन्वितः ॥

तथा [ कू पू उ १४, ५० ]

सहस्रपरमां देवीं शतमध्यां दशावराम् ।
गायत्रीं वै जपेन्नित्यं जपयज्ञः प्रकीर्तितः ॥

गायत्र्या विश्वामित्र ऋषिर्गायत्री छन्दः सविता देवता उपनयने प्राणायामे च जपे विनियोगः ।

**ओं भूर्भुवः स्वस्तत् सवितुर्वरेण्यं भर्गो देवस्य धीमहि ।**
**धियो यो नः प्रचोदयात् ओम् ॥ २४**

[ ऋ स ३, ६२, १० । वा स ३६, ३ ]

तत् तस्य सवितुः तं भर्गस्तेजः धीमहि चिन्तयामः । अत्र यद्यपि तमितिपदं भर्गविशेषणं नास्ति तथापि य इति यच्छब्दप्रयोगादेव तमिति तच्छब्दो लभ्यते । तथा च गायत्रीव्याकार[२] एव

योगियाज्ञवल्क्यः [ ८, ४१ ]

तच्छब्देन तु यच्छब्दो बोद्धव्यः सततं बुधैः ।
उदाहृते तु यच्छब्दे तच्छब्दः स्यादुदाहृतः ॥

किम्भूतस्य तस्य—सवितुः सर्वभूतानां प्रसवितुरित्यर्थः ।

तथा च योगियाज्ञवल्क्यः [ ८, ५५ ]

सविता सर्वभूतानां सर्वभावान् प्रसूयते ।
सवनात् पावनाच्चैव सविता तेन चोच्यते ॥

पुनः किम्भूतस्य—देवस्य दीप्तिक्रीडादियुक्तस्य ।

---

१ च—पुस्तके इतः परं 'निर्वाणतन्त्रे—

धि-नयोर्मध्यभागे च यकारद्वयमेव च ।
तत्र तत्र महादेवि अनन्तश्रुतिरेव च ॥
इति जप्त्वा महेशानि मुक्तो भवति तत्क्षणात् ।
अन्त्ययकारयोः स्थाने योकार इति यः पठेत् ।
स चाण्डाल इति (वि)ख्यातो ब्रह्महत्या दिने दिने ।'
इत्यधिकम् ।

२ ख—व्याख्यायां । त—व्याकरण । न—व्याख्यान ।

तथा च योगियाज्ञवल्क्यः [ ८, ५४ ]

दीप्यते क्रीडते यस्माद्रोचते द्योतते दिवि ।
तस्माद्देव इति प्रोक्तः स्तूयते सर्वदैवतैः ॥ इति ।

किम्भूतः—यो भर्गो नोऽस्माकं धियो बुद्धीः प्रचोदयात् प्रेरयति धर्मार्थकाममोक्षेष्वस्माकं बुद्धीर्यो भर्गो नियोजयतीत्यर्थः ॥

तथा च योगियाज्ञवल्क्यः [ ८, ४३ ]

चिन्तयामो वयं भर्गं धियो यो नः प्रचोदयात् ।
धर्मार्थकाममोक्षेषु बुद्धिवृत्तीः पुनः पुनः ॥ इति ।

तदिह भर्गशब्देन बहुविधमाहात्म्ययुक्तः सवितृमण्डलमध्यगतादित्यदेवतास्वरूपः पुरुष उच्यते ।

तथा च योगियाज्ञवल्क्यः [ ८, ५२-५३ ]

भ्रजिः पाके भवेद्धातुर्यस्मात् पाचयते ह्यसौ ।
भ्राजते दीप्यते यस्माज्जगच्चान्ते हरत्यपि ॥
कालाग्निरूपमास्थाय सप्तार्चिः सप्तरश्मिभिः ।
भ्राजते तत्स्वरूपेण तस्माद्भर्गः स उच्यते ॥

तथा [ ८, ४५ ] भेति भासयते लोकान् रेति रञ्जयते प्रजाः ।
गेति गच्छत्यजस्रं वै भरगाद् भर्ग उच्यते ॥

अयमेव तु भर्गो बहिराकाशे सूर्यमण्डलान्तःस्थोऽपि सकलप्राणिनां हृदयमध्ये जीवभूतः प्रतिवसति ।

तथा च योगियाज्ञवल्क्यः [ ८, २१ ]

[1]आदित्यान्तर्गतं यच्च[1] ज्योतिषां ज्योतिरुत्तमम् ।
हृदये सर्वभूतानां जीवभूतः[2] स तिष्ठति ॥

तथा [ ८, २४-२५ ]

हृद्व्योम्नि तपति ह्येष बाह्ये सूर्यः स चान्तरे ।
अग्नौ वा धूमको ह्येष ज्योतिश्चित्रतरं[3] च यत् ॥
हृद्याकाशे च यो जीवः साधकैरुपवर्ण्यते ।
स एवादित्यरूपेण बहिर्नभसि राजते ॥

अत्र यद्यपि प्राणिनां हृदि जीवरूपतया य एष भर्गस्तिष्ठति स एवाकाशे आदित्यमध्ये पुरुषरूपतया विद्यते अतोऽनयोर्भेदो नास्त्येव । तथापि धियो यो नः

---

१ योगिया—ब्राह्मणः परमं ब्रह्म ।
२ ङ—जीवरूपः ।
३ त—व—चित्रकरं ।

प्रचोदयादिति प्राणिनां बुद्धिप्रेरको यो हृदयवर्ती भर्गः स एव चिन्तनीयः। अयन्तु विशेषः—सूर्यमण्डलवर्तिभर्गेण सहाद्वैतेन[1] एकीभूतश्चिन्तनीय इति। पुनः किम्भूतं भर्गम्—वरेण्यं वरणीयम् प्रार्थनीयं जन्ममृत्युदुःखादिनाशाय ध्यानेनोपासनीय-मित्यर्थः।

तथा च योगियाज्ञवल्क्यः [ ८, ५७-५८ ]

वरेण्यं वरणीयञ्च जन्मसंसारभीरुभिः।
आदित्यान्तर्गतं यच्च भर्गाख्यं वै मुमुक्षुभिः॥
जन्ममृत्योर्विनाशाय दुःखस्य त्रिविधस्य च।
ध्यानेन पुरुषो यस्तु द्रष्टव्यः सूर्यमण्डले॥ इति।

पुनः किम्भूतोऽसौ भर्गः—भूर्भुवः स्वरिति भूर्लोकान्तरिक्षलोकस्वर्लोकस्वरूपोऽपि स एवादित्यदेवतात्मको भर्ग इत्यर्थः।

तथा च भविष्यपुराणम् [ ब्राह्म ४१, २१-२४ ]

वासुदेव उवाच

प्रत्यक्षदेवता सूर्यो जगच्चक्षुर्दिवाकरः।
तस्मादभ्यधिका काचिद्देवता नास्ति शाश्वती॥
तस्मादिदं जगज्जातं लयं यास्यति तत्र च।
त्रुट्यादिलक्षणः कालः स्मृतः साक्षाद्दिवाकरः॥
ग्रहनक्षत्रयोगाश्च राशयः करणानि च।
आदित्या वसवो रुद्रा अश्विनौ वायवोऽनलः॥
शक्रः प्रजापतिः सर्वे[2] भूर्भुवः[3]स्वर्दिशस्तथा॥ इति।

तथा त्रैलोक्यमिदमादित्यदेवतायाः[4] एव विवर्तत इति प्रतिपादने योगियाज्ञवल्क्यः [ ८, ६५-६८ ]

हैरण्यं मण्डलं दीप्तं तपोज्ञानसमुद्भवम्।
एकं द्वादशधा भिन्नमदितिस्तमजोजनत्॥
यस्योल्बादुत्थितो मेरू रुधिरात् सप्त सिन्धवः।
पर्वताश्च जरायूत्था नद्यो धमनिसम्भवाः।
द्यौश्चापि पृथिवी चैव कपाले द्वे व्यवस्थिते।
मध्योऽन्तरिक्षमभवत् त्रैलोक्यस्यैष[5] सम्भवः॥

---

१ ङ—सहाद्वयेन।
२ ख—ग—शर्वौ।
३ घ—स्वं दिशस्तथा।
४ क—°देवता।
५ क—ख—ङ—च—°स्यैव।

एते ह्यण्डकपाले द्वे अपां मध्ये व्यवस्थिते ।
एकं धात्री समभवद् द्वितीयं नन्दनं वनम् ॥
तन्मध्याद् यः शिशुर्जातो मार्तण्डः सविता तु सः ॥ इति ।

इत्थं चराचरात्मकत्रैलोक्यमेव भर्गस्वरूपम् । तस्माद् भर्गात् पृथग्भूतं किञ्चिदपि न सम्भवतीति भर्गमाहात्म्यमेव व्याहृतित्रयसमेतगायत्र्या प्रतिपादितम् ।

अत्र च ओङ्काररहितब्रह्मोच्चारणे प्रत्यवायदर्शनात् आदावन्ते च ओङ्कार-प्रयोगः । यथाह मनुः [ २, ७४ ]

ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा ।
स्रवत्यनोङ्कृतं पूर्वं परस्ताच्च विशीर्यते ॥ इति

अस्यास्तु व्याहृतित्रयसंयुक्तगायत्र्या अयं वाक्यार्थः—सवितुर्देवस्य भर्गाख्य-परब्रह्मस्वरूपितेजश्चिन्तनार्थं मम हृत्पद्मस्थितेनैव भर्गाख्यतेजसा [1]प्रेर्यमाणस्तदेव भर्गाख्यं भूर्लोकान्तरिक्षलोकस्वर्लोकादिब्रह्माण्डोदरवर्तिसचराचरत्रैलोक्यस्वरूपं मम हृदयमध्ये बाह्ये च सूर्यमण्डलमध्यवर्तितेजसा सहैकीभूतं[2] परब्रह्मस्वरूपं ज्योति-रहमिति चिन्तयन् जपं कुर्यादिति ।

इति जपगायत्रीव्याख्या ॥

## अथ गायत्रीमाहात्म्यम्

तदेवंस्वरूपाया गायत्र्याः सम्यगर्थज्ञानपूर्वकजपमात्रेण कथं महापातकोप-पातकान्यन्यानि च सप्तजन्मकृतानि पापानि न नाशमुपयास्यन्ति । एतस्याः सम्यगर्थचिन्तनेन वा कथमपवर्गसिद्धिर्न भविष्यति । तथा चास्यास्तु बहुविध-माहात्म्योपवर्णने नानामुनिवचनानि ।—

तत्र गायत्रीस्वरूपाख्याने मनुः [ २, ७६-७८ ]

अकारञ्चाप्युकारञ्च मकारञ्च प्रजापतिः ।
वेदत्रयान्निरदुहद्भूर्भुवः स्वरितीति च ॥
त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत् ।
तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः ॥
एतदक्षरमेताञ्च जपन् व्याहृतिपूर्विकाम् ।
सन्ध्ययोर्वेदविद्विप्रो वेदपुण्येन युज्यते ॥

---

१ क—ख—च—त—पूर्वम.ण° । घ—प्रेर्यमाण° । २ क—ङ—च—सहैकीभूय ।

योगियाज्ञवल्क्यः [ ४, ११ ]

तपसा सुसमृद्धस्य आदिसर्गात् स्वयम्भुवः ।
ओङ्कारपूर्वा गायत्री निर्जगाम ततो मुखात् ॥

कूर्मपुराणम् [ उ १४, ५३-५४ ]

पुराकल्पे समुत्पन्ना भूर्भुवः स्वः सनातनाः ।
महाव्याहृतयस्तिस्रः सर्वासुरनिवर्हणाः ॥
प्रधानं पुरुषः कालो ब्रह्मविष्णुमहेश्वराः ।
सत्त्वं रजस्तमस्तिस्रः क्रमाद् व्याहृतयः स्मृताः[१] ॥

मनु-यम-वृहद्विष्णवः [ मनु २, ८१ । विष्णु ५५, १५ ]

ओङ्कारपूर्विकास्तिस्रो महाव्याहृतयोऽव्ययाः ।
त्रिपदा चैव गायत्री विज्ञेयं ब्रह्मणो मुखम् ॥

कूर्मपुराणम् [ उ १४, ५५ ]

ओङ्कारस्तत् परंब्रह्म सावित्री स्यात्तदक्षरम्[२] ।
एष मन्त्रो महायोगः सारात् सार उदाहृतः ॥

छन्दोगगृह्यपरिशिष्टम्

सर्वेषामेव वेदानां गुह्योपनिषदस्तथा ।
सारभूता तु गायत्री[३] ।

योगियाज्ञवल्क्य-कूर्मपुराणे [ योगिया ४, ८० । कू पु उ १४, ५१ ]

गायत्रीञ्चैव वेदांश्च तुलया समतोलयत् ।
वेदा एकत्र साङ्गास्तु गायत्री चैकतः स्मृता ॥

योगियाज्ञवल्क्यः [ ४, ७७ ]

सारभूतास्तु वेदानां गुह्योपनिषदो मताः ।
ताभ्यः सारातु गायत्री तिस्रो व्याहृतयस्तत ॥

तथा

गायत्र्याः पादमर्धञ्च ऋचोऽर्धमृच एव वा ।
[ ४, ५५ ] ब्रह्महत्यां सुरापानं सुवर्णस्तेयमेव च ।
गुरुदारागमं चैव जप्येनैव पुनाति सा ॥

---

१ क—°व्याहृतयो मताः ।
२ च—°दव्ययम् ।
३ इतः परमधिकं यथा—क—ब्राह्मणस्य च सर्वदा ।
घ—तिस्रो व्याहृतयस्तथा । त—निर्गता ब्रह्मणो मुखात् ।

बृहद्यमः — गायत्र्याः पादमर्धं वा ऋचमर्धार्धमेव वा ॥[1]
ब्रह्महत्यां सुरापानं सुवर्णस्तेयमेव च ।
गुरुदाराभिगमनं [2]यच्चान्यद् दुष्कृतं कृतम्[2] ।
सर्वमेव पुनातीति चाह वैवस्वतो यमः ॥

तथा— ओङ्कारपूर्विकास्तिस्रः सावित्री यश्च विन्दति ।
चरितब्रह्मचर्यश्च स वै श्रोत्रिय उच्यते ॥

अग्निपुराणम् [ वह्निपु १०(३०क) ]
दशसाहस्रजप्येन निष्कामः पुरुषो यदि ।
विधिना नियतं[3] ध्यायेत् प्राप्नोति परमं पदम् ॥

तथा [ १० (३०क) ]
यज्ञदानरतो विद्वान् साङ्गवेदस्य पाठकः[4] ।
गायत्रीध्यानपूतस्य कलां नार्हति षोड़शीम् ॥

योगियाज्ञवल्क्यः [ ४, ७०-७१ ]
एतया ज्ञातया सर्वं वाङ्मयं विदितं भवेत् ।
उपासितं भवेत्तेन विश्वं भुवनसप्तकम् ॥
अज्ञात्वा चैव गायत्रीं ब्राह्मण्यादेव हीयते ।
अपवादेन संयुक्तो भवेच्छ्रुतिनिदर्शनम् ॥

कूर्मपुराणम् [ उ १४, ५७ ]
गायत्री वेदजननी गायत्री लोकपावनी ॥

[ उ १४, ६१ ] न गायत्र्याः परं जप्यमेतद्विज्ञानमुच्यते ॥

मनु-यम-विष्णुधर्मोत्तराणि [ मनु २, ११८ । वि ध १, १६५, ७५ ]
सावित्रीमात्रसारोऽपि वरं विप्रः सुयन्त्रितः ।
नायन्त्रितस्त्रिवेदोऽपि सर्वाशी सर्वविक्रयी ॥

बृहद्विष्णुः [ विष्णु ५५, ११ ]
[5]एतयर्चा विसंयुक्ताः[5] काले च क्रियया स्वया ।
विप्रक्षत्रियविड्योनिर्गर्हणां याति साधुषु ॥

---

१ अनन्तरपूर्वोदाहृते ( ७२ पृ: ) समार्थके वचने प्रथमश्लोकार्धस्य मुद्रापिते योगियाज्ञवल्क्यीयः पाठः —'पादार्धं पादमर्धं वा समस्तामृचमेव वा' इति ।

२ क—यच्चान्यदपि दुष्कृतम् ।

३ ङ—नियती । त—पि च तं ।

४ क—पारगः ।

५ मुद्रितविष्णौ (ed. Jolly) 'एतत्त्रयविसंयुक्ताः' तथा—'विप्रक्षत्रियविड्जाति' ।

योगियाज्ञवल्क्यः [ ८, ४० ]

[1]सावित्रीश्चैव मन्त्रार्थं[1] ज्ञात्वा चैव यथार्थतः ।
तस्यां यदुक्तं चोपास्य ब्रह्मभूयाय कल्पते ॥

कूर्मपुराणम् [ कू पु उ १४, ५६ ]

योऽधीतेऽहन्यहन्येतां गायत्रीं वेदमातरम् ।
विज्ञायार्थं ब्रह्मचारी स याति परमां गतिम् ॥

योगियाज्ञवल्क्यः [ ४, ७६-७८ ]

[2]वेदाः साङ्गास्तु चत्वारोऽधीताः सर्वे च वाङ्मयाः[2] ।
गायत्रीं यो न जानाति वृथा तस्य परिश्रमः ॥
गायत्रीमात्रसन्तुष्टः श्रेयान् विप्रः सुयन्त्रितः ।
नायन्त्रितस्त्रिवेदी च सर्वाशी सर्वविक्रयी ॥

मनु-योगियाज्ञवल्क्यौ [ मनु २, ८। योगिया ४, ७३ ]

एतयर्चा विसंयुक्तः काले च क्रियया स्वया ।
विप्रक्षत्रियविड्योनिर्गर्हणां याति साधुषु ॥[3]

## अथ गायत्रीजपफलम्

तत्र बृहद्यमः

गायत्रीजापनिरता [4]गच्छन्त्यमृततां द्विजाः ॥

अग्निपुराणम् [ वह्निपु १० (३३क) ]

गायत्रीं जपते यस्तु द्वे सन्ध्ये[5] ब्राह्मणः सदा ।
अर्थी प्रतिग्रही वापि स गच्छेत् परमां गतिम् ॥

तथा [ वह्निपु १० (३२क) ]

गायत्रीं जपते यस्तु कल्यमुत्थाय[6] वै द्विजः ।
[7]लिप्यते न स पापेन[7] पद्मपत्रमिवाम्भसा ॥

---

१ मुद्रित-योगि—'सावित्र्यार्थं व माहात्म्यं'।

२ मुद्रिते योगियाज्ञवल्क्ये प्रथमपङ्क्तिर्न विद्यते ।

३ श्लोकोऽयं—बृहद्विष्णु-वचनरूपेण प्रागुद्धृतम् । मुद्रितयोगियाज्ञवल्क्ये तु पाठौ चाद्यन्तयोरत्यन्त-भग्नाः: 'एतया चापि संयुक्तः' तथा 'गर्हणां पतितसाधुषु' इति ।

४ ख—प्रयान्ति ब्रह्मणः पदम् ।
घ—गच्छन्त्यमृतवद्द्विजाः ।

५ ख—घ—ङ—त—न—काले । वह्निपुराणे द्विकालं ।

६ वह्निपु—कल्य उत्थाय ।

७ वह्निपु—स लिप्यति न पापेन ।

अग्निपुराण एव गायत्रीं प्रति ब्रह्मवाक्यम् [ वह्निपु ११ (३४क) ]

कुर्वन्तोऽपीह पापानि ये त्वां ध्यायन्ति पावनि ।
उभे सन्ध्ये न तेषां हि विद्यते देवि पातकम् ॥

तथा [ वह्निपु १० (३१क) ]

गायत्र्याश्च समं नास्ति दिवि चेह च पावनम् ।
यथा कथञ्चिज्जप्तैषा[1] देवी परमपावनी ।
सर्वकामप्रदा प्रोक्ता पृथक् कर्मसु निष्ठिता ॥

वसिष्ठः [ २६, १८ ]

विद्यातपोभ्यां संयुक्तं ब्राह्मणं जपनित्यकम् ।
सदापि पापकर्माणमेनो न प्रतियुज्यते[2] ॥

[ २६, १२ ] यथाऽग्निर्वायुनोद्धूतो हविषा चैव दीप्यते ।
एवं जप्यपरो नित्यं मन्त्रयुक्तः सदा द्विजः ॥

विष्णुधर्मोत्तरम् [ १, १६५, ७६-७७ ]

गायत्रीं जपते यस्तु कल्यमुत्थाय वै द्विजः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥
कामकामो लभेत् कामं गतिकामस्तु सद्गतिम् ।
अकामस्तदवाप्नोति यद् विष्णोः परमं पदम् ॥

बृहद्यमः— न तथा वेदजप्येन पापं निर्दहति द्विजः ।
यथा सावित्रीजप्येन सर्वपापैः प्रमुच्यते ॥

विष्णुधर्मोत्तरम्

गायत्रीं जपते यस्तु द्वौ कालौ ब्राह्मणः सदा ।
त्वया राजन् स विज्ञेयः पंक्तिपावनपावनः ॥

मनु-बृहद्विष्णू [ मनु २, ८२ । विष्णु ५५, १५ ]

योऽधीतेऽहन्यहन्येतां त्रीणि पर्वाण्यतन्द्रितः[3] ।
स ब्रह्म परमभ्येति वायुभूतः खमूर्तिमान ॥

बृहद्यमः— सहस्रपरमां देवीं शतमध्यां दशावराम् ।
गायत्रीन्तु जपेन्नित्यं सर्वपापप्रणाशिनीम् ॥

---

१ ङ—जप्यैषा ।

२ क—ङ—च—प्रतियुज्यते ।
ख—प्रतिभुज्यते । ज—प्रतियुज्यति ।

३ क—च—त—वर्षाण्यतन्द्रितः ।

व्यास-गोभिलीये [ गोभिस्नान परि ६ ][1]

दशभिर्जन्मजनितं शतेन तु पुराकृतम् ।
त्रियुगं तु[2] सहस्रेण गायत्री हन्ति किल्बिषम्[3] ॥

अग्निपुराणम् [ वह्नि पु १०(३०ख) ][4]

दशकृत्वः प्रजप्ता सा रात्र्याह्ना यत् कृतं लघु ।
तत् पापं प्रणुदत्याशु नात्र कार्या विचारणा ॥
शतजप्ता तु सा देवी सर्वपापप्रणाशिनी ।
सहस्रजप्ता सा देवी महापातकनाशिनी ॥ [ अग्नि २१५, १३ ]
लक्षजप्येन साप्येवं सप्तजन्मोत्थपातकम् ।
कोटिजप्येन विप्रर्षे यदिच्छति तदाप्नुयात् ॥
यक्षविद्याधरत्वं वा गन्धर्वत्वमथापि वा ।
देवत्वमथ विप्रत्वं भूयान्निहतकण्टकम् ॥

योगियाज्ञवल्क्यः [ ४, ५०-५२ ]

सप्तावृत्तापुनाद्देहं दशभिः प्रापयेद्दिवम् ।
विंशावृत्ता तु सा देवी नयते चेश्वरालयम् ॥
अष्टोत्तरशतं जप्ता तारयेज्जन्मसागरात् ।
तीर्णा न पश्यति प्रायो जन्म मृत्युं हि दारुणम् ॥
गायत्रीश्च जपेद् यो हि सोमवद्राजते हि सः ।

अत्रि-वृद्धापस्तम्बौ [ गोभि स्नान परि ७ ]

सहस्रपरमां देवीं शतमध्यां दशावराम् ।
गायत्रीन्तु जपन् विप्रो न पापेन विलिप्यते ॥

कूर्मपुराणम् [ कू पु उ १४, ५० ]

सहस्रपरमां देवीं शतमध्यां दशावराम् ।
गायत्रीं वै जपेन्नित्यं जपयज्ञः प्रकीर्तितः ॥

योगियाज्ञवल्क्य [ १०, ७ ]

दशविंशशतं वापि गायत्र्याः परिकीर्तयेत् ।
अहोरात्रकृताच्चैव पापात् संमुच्यते हि सः ॥

---

१ स्मृतिचन्द्रिकायामाह्निककाण्डे (३७९ पृः) व्यासीयत्वेनोद्धृतमिदं वचनम् ।

२ क—न—त्रियुगं तु । स—त्रिजन्मोत्थं ।

३ क—दुष्कृतम् । ङ—पातकम् ।

४ गायत्रीजपफल-प्रकरणोद्धृताः (५८ पृः) विष्णुधर्मोत्तरीयश्लोकाः प्रायेणाभिन्नाः ।

तथा [ ४, ४५ ]

सोङ्कारचतुरावृत्तां विज्ञेया सा शताक्षरा।
शताक्षरां समावर्त्य सर्ववेदफलं लभेत्॥

गोभिलीयम्[1] [ गोभि स्नान परि ३—५ ]

कदाचिदपि नो विद्वान् गायत्रीमुदके जपेत्।
गायत्र्यग्निमुखी प्रोक्ता तस्मादुत्थाय तां जपेत्॥
यज्जले शुष्कवस्त्रेण स्थले चैवार्द्रवाससा।
जपो होमस्तथा दानं तत् सर्वं निष्फलं भवेत्॥
गृहेषु तत् समं जप्यं गोष्ठे शतगुणं भवेत्।
नद्यां शतसहस्रन्तु अनन्तं चाग्निसन्निधौ[2]॥

योगियाज्ञवल्क्यः [ ४, २-३ ]

आर्षं छन्दश्च दैवत्यं विनियोगश्च ब्राह्मणम्।
शिरश्चाक्षरदैवत्यमाह्वानञ्च विसर्जनम्॥
ध्यानं जपप्रयोगश्च येषु कर्मसु यादृशम्।
ज्ञातव्यं ब्राह्मणैर्यत्नाद् ब्राह्मण्यं येन वै भवेत्॥

तथा [ ४, ८१ ]

एषा हि त्रिपदा देवी शब्दब्रह्ममयी शुभा[3]।
तपसा महता दृष्टा विश्वामित्रेण धीमता॥

## अथाक्षमाला

तत्र व्यासः— [4]हिरण्यगर्भमणिभिर्जप्तं शतगुणं भवेत्।
सहस्रगुणमिन्द्राक्षे रुद्राक्षैरयुतं भवेत्॥
नियुतं प्रयुतं वा स्यात् पद्माक्षैस्तु न संशयः।
पुत्रञ्जीवकजप्तस्य परिसंख्या न विद्यते॥

योगियाज्ञवल्क्यः [ ७,१३७-१३८ ]

स्फटिकेन्द्राक्षरुद्राक्षपुत्रञ्जीवसमुद्भवैः।
अक्षमाला तु कर्तव्या प्रशस्ता ह्युत्तरोत्तरा॥

---

१ ख—तैत्तिरीये।
२ क—च—शिवसन्निधौ। मुद्रा—देवसन्निधौ।
३ घ—सत्त्वब्रह्ममयी।
४ घ—ङ—न—हिरण्यदर्भ।

[1]कोव्याद्या तु भवेद्वृद्धिरनन्ता चात्र संख्यया[1]।
अभावे चाक्षमालानां कुशग्रन्थ्याथ पाणिना ॥

## अथ काम्यजपः

तत्रात्रि-बृहदापस्तम्बौ

सावित्र्यास्तु परं नास्ति शोधनं पापकर्मणाम् ॥

वसिष्ठः— सावित्र्यास्तु परं नास्ति पावनं परमं स्मृतम् ॥

योगियाज्ञवल्क्यः [ ४, ६१-६२ ]

गोघ्नः पितृघ्नो मातृघ्नो भ्रूणहा गुरुतल्पगः।
ब्राह्मणस्वर्णहारी च यश्च विप्रः सुरां पिबेत् ॥
गायत्र्याः शतसाहस्रात् पूतो भवति मानवः ॥

तथा [ ४, ५७ ]

वायुभक्षो दिवा तिष्ठन् रात्रिं [2]नीत्वाप्सु सूर्यदृक्[3]।
जप्त्वा सहस्रं गायत्र्याः [4]शुध्येद्ब्रह्मवधादृते ॥

गौतमः [ गौ ध २४, १२ ]

महापातकचतुष्टयरहस्यप्रायश्चित्ते गायत्रीं[5] वा सहस्रकृत्व आवर्तयेत् पुनीते हैवात्मानम्।

अत्र यद्यपि यावन्ति सहस्राणि जप्तव्यानि तानि स्फुटतरं न प्रतिपादितानि तथापि रहस्यकृतस्यापि महापातकस्य गौरवात्[6] मासैकं यावत् प्रतिदिनमेव सहस्रमेकं जप्तव्यम्। एतच्च मनु-विष्णु-योगियाज्ञवल्क्यैः स्फुटमेवाभिहितम्।

यथा [ मनु २, ७९। विष्णु ५५, १०। योगिया ४, ४८ ]

सहस्रकृत्वस्त्वभ्यस्य बहिरेतत्त्रिकं द्विजः।
महतोऽप्येनसो मासात्त्वचेवाहिर्विमुच्यते[7] ॥ इति।

पूतो भवतीत्यधिकारे विष्णुः [ ५५, ३ ]

सहस्रजप्येन सुवर्णस्तेयकृत्[8] ॥

---

१ ङ—कोव्या या। प—कोटिधा। मु- योगिया— 'कोव्या स्यात्' तथा—'चात्र संज्ञया'।

२ क—त्वाप्सु।

३ ३—चार्कदृक्।

४ घ—प—शुचिर्ब्रह्म°। ङ—शुद्धो ब्रह्म°।

५ मुद्रापिते गौतमधर्मसूत्रे सावित्रीमिति पाठः।

६ ङ—पातकस्यशौत्।

७ क—च—मासात्त्वचिराद्धि वि°।

८ ङ—सुवर्णस्तेयकर्मकृत्।

योगियाज्ञवल्क्यः [ ४, ८२ ]

संवत्सरं वा षण्मासान् यो जपेद् विधिवद्द्विजः ।
सोऽचिरात् सर्वतः कामान् प्राप्न यान्नात्र संशय. ॥

तथा [ ४, ५८ ]

शतेन गायत्र्या स्नायात् शतमन्तर्जले जपेत् ।
अपः शतेन पीत्वा तु सर्वपापैः प्रमुच्यते ॥

शतमन्तर्जले जपेदिति जलनिमग्नेन शतगायत्रीजपस्य कर्तुमशक्यत्वात् कण्ठमात्रमुदकमवतीर्य जपेदिति बोद्धव्यम् ।

गद्यव्यासः— सावित्र्या वा तिलानग्नौ हुत्वा सर्वपापेभ्यो मुच्यते ।

विष्णुधर्मोत्तराग्निपुराणे [ वि ध १, १६५, २३ । वह्निपु १०(२१क) ]

हुता च वरदा देवी सर्वकामफलप्रदा ।
[1]गायत्र्या च[1] तिलैर्होमः सर्वपातकनाशनः ॥

वृद्धापस्तम्बः— सर्वेषामेव पापानां सङ्करे समुपस्थिते ।
दशसहस्रमभ्यस्ता गायत्री पावनं परम् ॥

[2]योगियाज्ञवल्क्यः [ ४, ५३ ]

सर्वेषामेव पापानां सङ्करे समुपस्थिते ।
दशसाहस्रिकोऽभ्यासो गायत्र्याः [3]शोधनं परम् ॥

वसिष्ठः [ २६, १४ ]

सहस्रपरमां देवीं शतमध्यां दशावराम् ।
शुद्धिकामः प्रयुञ्जीत सर्वपापेष्वपि स्थितः ॥

शङ्खः—सावित्र्या वा तिलानग्नौ जुहुयात् तैरेव पावनं कुर्यादेवमग्निः सर्वपापान्यपनुदति ।

कूर्मपुराणम् [ कू उ २३, ६२ ]

उच्छिष्टो यद्यनाचान्तश्चाण्डालादीन् स्पृशेद् द्विजः ।
प्रमादाद् वै जपेत् स्नात्वा गायत्र्यष्टसहस्रकम् ॥

पराशरः [ ११, १७-१८ ]

अज्ञानाद्भुञ्जते विप्राः सूतके मृतकेऽपि वा ।
प्रायश्चित्तं कथं तेषां वर्णे वर्णे विनिर्दिशेत् ॥

---

१ वह्निपुराणे—गायत्र्याश्च । ३ क—च—पावनं
२ प—पुस्तके वचनमिदं नास्ति ।

गायत्रग्रष्टसहस्रेण शुध्यन्ति शूद्रसूतके ।
वैश्ये पञ्चशतेनैव क्षत्रिये द्विशतेन च ॥

शातातपः— अज्ञानाद्भुञ्जते विप्राः सूतके मृतकेऽपि वा ।
गायत्रग्रष्टसहस्रेण शुध्यन्ति शूद्रसूतके ॥
वैश्यस्य सूतके[1] भुक्त्वा गायत्र्याः पञ्चभिः शतैः ॥
सूतके क्षत्रियस्यैव द्विशतो जप उच्यते ॥

ब्रह्मचारिणमुद्दिश्य कूर्मपुराणम् [ कू उ ३२, ४१-४३ ]
सप्तरात्रमकृत्वा तु भैक्ष्यचर्याग्निपूजनम् ।
रेतसश्च समुत्सर्गे[2] प्रायश्चित्तं समाचरेत् ॥
[3]ओङ्कारपूर्विकाभिस्तु महाव्याहृतिभिः[3] सदा ।
संवत्सरन्तु जुह्वानो नक्तं भिक्षाशनः शुचिः ॥
सावित्रीञ्च जपेच्चैवं नित्यं क्रोधविवर्जितः ।
नदीतीरेषु तीर्थेषु तस्मात् पापात् प्रमुच्यते[4] ॥

ब्रह्मचारिधर्मे संवर्तः [ सं २२ द्रः ]
सन्ध्याञ्चैवाग्निकार्यञ्च प्रमादान्न करोति यः ।
गायत्रग्रष्टसहस्रन्तु जपेत् स्नात्वा समाहितः ॥

ब्रह्मचार्यधिकारे कूर्मपुराणम् [ कू उ ३३, ५५ ]
अकृत्वा समिदाधानं शुचिः स्नात्वा समाहितः ।
गायत्रग्रष्टसहस्रस्य जपं कृत्वा विशुध्यति ॥

आपस्तम्बः [ आप स्मृ ५, ५ ]
ब्राह्मणस्य यदोच्छिष्टमश्नात्यज्ञानतो द्विजः ।
अहोरात्रन्तु गायत्र्या जपं कृत्वा विशुध्यति ॥

वृद्धापस्तम्बः— यस्तु भुङ्क्ते एकपङ्क्त्या [5]कुत्सितानामजानताम् ।
गायत्रग्रष्टसहस्रेण पञ्चगव्येन शुध्यति ॥

संवर्तः [१४ द्रः] स्नाने तु यदि संप्राप्ते भक्षयेद् यदि वा पिबेत् ।
गायत्रग्रष्टसहस्रन्तु जपेत् स्नात्वा समाहितः ॥

स्नाने तु यदि संप्राप्ते इति स्नानापहरणीयपापे सति यद्यस्नात्वा भुङ्क्ते पिबति वा तदेवं प्रायश्चित्तं बोद्धव्यम् ।

---

१ क—च—मृतके । ३ क—च—त—न—व—ओङ्कारपूर्विकास्तिस्रो महाव्याहृतयः ।
२ क—ख—घ—ङ—च—समुत्सर्गे । त—समुत्सर्गात् । ४ क—ङ—च—विमुच्यते ।
५ क—च—दूषितानां ।

कूर्मपुराणम् [ कू उ ३३, ८० ]

अनुग्रहेच्छया शूद्रं प्रेतीभूतं द्विजोत्तमः।

गायत्र्यष्टसहस्रस्य जपं कुर्यान्नदीषु च॥

तथा [ कू उ ३३, ७८ ]

बुद्धिपूर्वं त्वभ्युदिते जपेदन्तर्जले द्विजः।

गायत्र्यष्टसहस्रन्तु त्र्यहञ्चोपवसेद् व्रती॥

सूर्याभ्युदितनिर्मुक्तप्रायश्चित्ताधिकारे गायत्र्यनुवृत्तौ मनुः [ २, २२० ]

जपन्नुपवसेद्दिनम्।

अत्रिः— अशान्तमनसः शान्तमनसो वा गायत्र्यानुशोचनात्[1] शुद्धिरिति।

ब्रह्मचारिधर्मे संवर्तः [ संवर्तस्मृतिः १४ द्रः ]

अनाचान्तः पिबेद् यस्तु यदि वा भक्षयेद् द्विजः।

शतानि त्रीणि गायत्र्याः प्रायश्चित्तं विशोधनम्॥

प्रायश्चित्तप्रकरणे कूर्मपुराणम् [ उ ३३, ७५ ]

स्नात्वा जपेद् वा सावित्रीं[2] श्वभिर्दष्टो द्विजोत्तमः॥

शङ्खलिखितौ

स्वैरिण्यां च वृषल्याञ्च[3] प्रसृतो[4] गायत्रीमेव जपेत्।

योगियाज्ञवल्क्य-विश्वामित्रौ [ योगिया ४, ५६ ]

यत्र यत्र च सङ्कीर्णमात्मानं मन्यते द्विजः।

तत्र तत्र तिलैर्होमो गायत्र्या [5]जप एव वा[5]॥

रहस्यप्रायश्चित्ते बृहद्यमः

अपेयं पीत्वाऽभक्ष्यं भक्षयित्वोपस्पृश्यर्षभेण त्रीन् प्राणायामान् कृत्वा गायत्र्यष्टशतमावर्त्य तस्मात् पापात् पूतो भवति।

ऋषभस्य परमेष्ठी ऋषिस्त्रिष्टुप् छन्दो यज्ञपुरुषो देवता चयनयागे यजमानवाचने च विनियोगः।

**चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासोऽस्य।**

**त्रिधा बद्धो वृषभो रोरवीति महादेवो मर्त्याँ आ विवेश॥ २५**

[ ऋ स ४, ५८, ३। वा स १७, ९१। का स १९, ५ ]

---

१ ख—गायत्र्यर्थशोधनात्।

२ क—च—गायत्री।

३ ङ—च—वृषल्याञ्चेति नास्ति।

४ क—ख—त—न—व—प्रसूतो।

५ त-पुस्तके मुद्रापिते योगियाज्ञवल्क्ये। च—जपनं तथा।

वृषभो रोरवीति अत्यर्थं शब्दं करोति। अस्य वृषभस्य चत्वारि शृङ्गा ब्रह्मोद्गातृहोत्रध्वर्यवोऽस्य चत्वारि शृङ्गाणि। अस्य च त्रयः पादाः ऋक्-साम-यजुरेतद् वेदत्रयमस्य पादत्रयम्। अस्य द्वे शीर्षे हविर्धानमहावीरौ अस्य शिरोद्वयम्। अस्य सप्त हस्तासः होता मैत्रावरुणो ब्राह्मणाच्छंसी ग्रावस्तुत् अच्छावाको नेष्टा पोता एते सप्त होतार एवास्य क्रियाकारित्वेन हस्ताः सप्त इत्यर्थः। पुनः किम्भूतो वृषभः—त्रिधा बद्धः [1]प्रातःसवन-मध्याह्नसवन-तृतीयसवनैर्बन्धैस्त्रिभिर्बद्धः। अयमेव वृषभो धर्मस्वरूपो महादेवः हिरण्यगर्भमूर्तिर्मर्त्यान् मनुष्यान् आविवेश प्रविष्टवान् धर्मस्वरूपतया मनुष्येषु प्रविष्ट इत्यभिप्रायः। शृङ्गा इति शेश्छन्दसि बहुलमिति (पा ६, १, ७०) शेर्लोपः। हस्तास इति आज्जसेरसुगिति (पा ७, १, ५०) असुगागमः।

## अथ जपयज्ञः

तत्र मनु-बृहद्विष्णु-वसिष्ठ-योगियाज्ञवल्क्याः

[मनु २, ८५-८७। विष्णु ५५, १९-२१ ।वसि २६,१०-१२। योगिया १०, १३-१५]

विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः।
उपांशुः स्याच्छतगुणः साहस्रो मानसः स्मृतः॥
ये पाकयज्ञाश्चत्वारो विधियज्ञसमन्विताः।
सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोड़शीम्॥
जप्येनैव तु संसिध्येद् ब्राह्मणो नात्र संशयः।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते॥

[ योगिया ७, १२९-३० इत्यपि द्रः ]

अत्रिव्यासबृहद्यापस्तम्बाः [ अत्रि २, १० ]

विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः।
उपांशुः स्याच्छतगुणः साहस्रो मानसः स्मृतः॥

तथा यथा चाप्यायते धेनुस्तृणैरमृतसम्भवैः।
एवं जपैश्च होमैश्च पुनराप्यायते द्विजः॥

तथा नास्ति मातृसमा च्छाया न जप्यात् पावनं परम्[2]॥
जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः॥
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते॥

---

१ क—ङ—च—पुस्तकेषु अपराह्णसवन इति ख—पुस्तके च सायंसवन इत्यधिकम्।

२ क—मृतम्।

तथा [ अत्रि २, १६ द्रः ]

विद्यातपोभ्यां संयुक्तो ब्राह्मणो जपनित्यकः ।
सततं प्रतिगृह्णानः पापं दहति तेजसा ॥

## अथ सामान्यजप इतिकर्तव्यता

तत्र योगियाज्ञवल्क्यः [ ७, १२८ ; १३१-१३२ ]

जपस्येह विधिं वक्ष्ये यथा कार्यं विधानतः ।
न [1]च क्रमन्नापि[1] हसन्न पार्श्वमवलोकयन् ॥
नापाश्रितो न जल्पंश्च न प्रावृतशिरास्तथा ।
न पदा पादमाक्रम्य न चैव हि तथा करौ ॥
एवंविधं जपं कुर्यान्न च संश्रावयन् जपेत् ।
[2]तिष्ठंश्चेन्नीक्षमाणोऽर्कमासीनः प्राङ्मुखो जपेत् ॥

तथा [ ७, १३५ ]

प्राङ्मुखेषु[3] कुशेष्वेवमासीनश्चासने शुभे[4] ॥

तथा [ ७, १३८-१४१ ]

जपस्त्वेवं हि कर्तव्य एकाग्रमनसाऽपि तु ॥
ध्यायेच्च मनसा मन्त्रान् जिह्वौष्ठौ न विचालयेत् ।
न कम्पयेच्छिरोग्रीवं दन्तान्नैव प्रकाशयेत् ॥
यक्षराक्षसभूतानि सिद्धा विद्याधरा गणाः[5] ।
हरन्ति प्रसभं यस्मात्तस्माद् गुह्यं[6] समाचरेत् ॥

अग्निपुराणम् [ वह्निपु ५ (१३क) ]

[7]नोच्चैर्जपं बुधः कुर्यान्नीचैः[7] कुर्यादतन्द्रितः ।
समाहितमनास्तूष्णीं मनसा वाऽपि चिन्तयेत् ॥

अत्रिः [ २, ११ द्रः ]

ध्वनिर्वौष्ठविकारेण निश्वासोपांशुलक्षणः ।
निर्विकारेण वक्त्रेण मनसा मानसः स्मृतः ॥

---

१ क—चंक्रमन्नापि ।
२ क—उत्तिष्ठन्नीक्षमाणोऽर्कं ।
३ न—योगिया—प्रागग्रेषु । च—प—प्राङ्मूलेषु ।
४ ख—न—जपेत् । च—ऽन्तरे ।
५ क—न—सिद्धविद्याधरास्तथा । त—सिद्धविद्याधराङ्गनाः । प—सिद्धविद्याधरा गणाः ।
६ योगिया—गुप्तं ।
७ वह्निपुराणे—नोच्चैर्जपं च स कुर्याद्बुधः ।

योगियाज्ञवल्क्यः [ ७, १४२-१४४ ]

जलान्ते वाऽग्न्यगारे[1] वा जपेद्देवालयेऽपि वा ।
[2]पुण्यतीर्थे गवां गोष्ठे[2] सिद्धक्षेत्रेऽथवा गृहे[3] ॥
गृहे ह्येकगुणं जप्यं नद्यान्तु त्रिगुणं[4] स्मृतम् ।
गवां गोष्ठे दशगुणमग्न्यागारे शताधिकम्[5] ॥
सिद्धक्षेत्रेषु तीर्थेषु देवतायाश्च सन्निधौ ।
सहस्रं शतकोटीनामनन्तं विष्णुसन्निधौ ॥

तथा [ ७, ४२-४३ ]

न छिन्नवासाः स्थलगो जपादीनाचरेद्द्विजः ।
वस्त्रनिश्च्योतनं प्रेता अपवार्य[6] पिबन्ति हि[7] ॥
व्रताहृते नार्द्रवासा नैकवासाः समाचरेत् ।
न जीर्णेन [8]न नीलेन[8] परिक्लिष्टेन[9] वा जपेत् ।

तथा [ ७, १४८ ]

यदि वाग्यमलोपः स्याज्जपादिषु कथञ्चन ।
व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययम् ॥

तथा [ ७, १४३-१४७ ]

शाकयावकभैक्ष्याणि पयो मूलफलानि च ।
दधि सर्पिस्तथा[10] ह्यापः प्रशस्तं ह्युत्तरोत्तरम् ॥
चरवो[11] ह्युपवासश्च[12] भैक्ष्यं नक्तमयाचितम् ।
बिसशृङ्गाटशालूकहविष्यान्नानि यानि तु[13] ।
एतान्यत्र[14] व्रतान्याहुः शस्तानि जपकर्मणि ॥
एतेष्वेवावसक्तस्तु यद्यागच्छेद्द्विजोत्तमः ।
अभिवाद्य ततो विप्रं योगक्षेमञ्च कीर्तयेत् ॥

---

१ क— अग्न्यागारे जलान्ते वा ।
२ योगिया—गवां गोष्ठे पुण्यतीर्थे ।
३ प—पृथक् ।
४ योगिया—द्विगुणं ।
५ योगिया—दशाधिकम् ।
६ त—न—व—अवधार्य । प—अपवर्ज्यां ।
योगिया—परिचार्य ।
७ क—वै ।
८ क—मलिनेन ।
९ क—परिक्लिन्नेन । त—परिच्छिन्नेन ।
१० न—°र्सर्पिरथो ।
११ क—चरेद्वा । घ—चतुर्थी ।
ङ—न—न चैवा । प—चरवो ।
१२ क—ह्युपवासश्च ।
१३ श्लोकार्धमिदं ङ—न—प—पुस्तकेषु न दृश्यते ।
१४ क—योगिया—एतान्येव ।

स्त्रीशूद्रपतितांश्चैव पाषण्डांश्च रजस्वलाम् ।
[1]स्नानकाले न सम्भाषेज्जपहोमादिकेषु च[1] ॥

तथा [ ७, १४८ द्व: ]

[2]तूष्णीमेवावगाहेत चाण्डालपतितेक्षणात् ।
दृष्ट्वा चेदाशुचिं किञ्चिदाचामेत् प्रयतोऽपि सन् ।
तेषां सम्भाषणं[3] कृत्वा स्नानमेव समाचरेत् ॥

[ ७, १५० ] आचम्य प्रयतो नित्यं जपेदशुचिदर्शने ।
सौरान् मन्त्रान् यथोत्साहं[4] पावमानीश्च शक्तितः ॥

तथा [ ४, ४० ] प्रयोजयेदित्यनुवृत्तौ

प्रणवव्याहृतिभ्यान्तु स्वाहान्ता होमकर्मणि ।
प्रतिकूलं प्रयोक्तव्या हुङ्कारान्ताऽभिचारिके ॥

इति गायत्रीमाहात्म्ये जपानुष्ठानानि ॥

ततो गायत्रीजपानन्तरं

सूर्यस्येत्यावर्तयेदिति[5]

हारीतवचनात् दक्षिणावर्तेन परिवृत्योपविशेदनेन मन्त्रेण ।

तत्र सूर्य ऋषिः सूर्यो देवता । यजुष्ट्वाच्छन्दो नास्ति । सूर्योपस्थाने विनियोगः ।

## सूर्यस्यावृतमन्वावर्ते ॥ २६

[ वा स २, २६ ]

सूर्यस्यावृतम् आवर्तनम् अहमन्वावर्ते । यथा सूर्य आवर्तमानो जगत् प्रदक्षिणं करोति अहमपि तदेवानुकुर्वन्[6] पृथिव्याः प्रदक्षिणकरणफलं प्राप्नोमीति वाक्यार्थः । अत्र वर्ते इत्युत्तमपुरुषैकवचनदर्शनात् अहमित्यध्याक्रियते ।

इत्यावसथिकमहाधर्माधिकृत-श्रीहलायुधकृतौ ब्राह्मणसर्वस्वे प्रातःसन्ध्यामन्त्रव्याख्याप्रकरणम् ॥

---

१ योगिया—जपकाले न भाषेत व्रतहोमादिकेषु च ।

२ मुद्रित-योगियाज्ञवल्क्ये पाठा नैवंविधाः । स्मृतिचन्द्रिका-पराशरमाधवादिनिबन्धग्रन्थेषु ( प मा, १, १, २७९ पृः ) तु समार्थकमन्यद् योगियाज्ञवल्क्यवचनमित्थमुद्धृतम्—
तूष्णीमेवावगाहेत यदा स्यादशुचिर्नरः ।
आचम्य प्रयतः पश्चात् स्नानं विधिवदाचरेत् ॥'

३ क—वा भाषणं । त—आभाषणं । प—च भाषणं ।

४ त—यथान्याहं ।

५ प—°त्यावर्तत इति ।

६ ख—तदेवार्थं कुर्वन् । म—तदेवानुकुर्यां ।

## अथ मध्याह्न-स्नानम्

हलायुधेन गौड़ेन्द्रमहाधर्माधिकारिणा ।
मध्याह्नस्नानमन्त्राणां [1]व्याकारोऽयं विभाव्यते[1] ॥

तत्र स्नानप्रशंसायां योगियाज्ञवल्क्यः [ ७, १५३ ]

स्नानमूलाः क्रियाः सर्वाः स्मृतिश्रुत्युदिता नृणाम् ।
तस्मात् स्नानं [2]निषेवेत श्रीपुष्ट्यारोग्यवर्धनम् ॥

दक्षः— मनःप्रसादजननं रूपसौभाग्यवर्धनम् ।
शोकदुःखापहं स्नानमोजोदं[3] पुष्टिवर्धनम् ॥

स्नानानुवृत्तौ योगियाज्ञवल्क्यः [ ८, १२६ ]

मनःप्रसादजननं रूपसौभाग्यवर्धनम् ।
शोकदुःखापहरणं[4] तैजसं ह्लादनं तथा ॥

अग्निपुराणम्[5]

नैर्मल्यं भावशुद्धिश्च विना स्नानं न जायते ।
तस्मान्मनोविशुद्ध्यर्थं स्नानमादौ विधीयते ॥

विष्णुः [ ६४, ४२ ]

याम्यं हि यातनादुःखं नित्यस्नायी न पश्यति ।
नित्यस्नानेन पूयन्ते येऽपि पापकृतो जनाः ॥

जावालः— अगम्यागमनात् स्तेयात् पापिभ्यश्च प्रतिग्रहात् ।
रहस्याचरितात् पापान्मुच्यते स्नानमाचरन् ॥

अङ्गिराः— गवाह्निकं देवपूजा वेदाभ्यासः सरित्प्लवः ।
नाशयत्याशु पापानि महापातकजान्यपि ॥

योगियाज्ञवल्क्यः [ ७, १२५ ]

सवनत्रयं यः कुर्यान्नित्यमेवमतन्द्रितः ।
स व्रजेत् परमं स्थानं ब्रह्मणः सदनं द्विजः ॥

---

१ प—व्याख्याकारो वितन्यते ।

२ क—प्रकुर्वीत ।

३ क—च—स्नानं सौख्यदं । त—°मायुर्दं ।

४ ख—शोकदुःखप्रहरणं । प—शोकदुःखापहरं । योगिया—शोकदुःखप्रहृत् स्नानं ।

५ वचनमिदं मत्स्यपुराणे ( १०२, १ ) पद्मपुराणे च ( सृष्टि २०, १४५ ) लभ्यते ।

तथा [ ७, १२८ ]

स्नानं दानं तपो ध्यानं पितृदेवार्चनन्तथा ॥
पावनानि मनुष्याणां दुष्कृतस्येह कर्मणः ॥

जावालः— यदैव कुरुते स्नानं विशुद्धेनान्तरात्मना ।
तेनैव सर्वमाप्नोति विधियज्ञक्रियाफलम् ॥

तथा-- प्रकर्तुमसमर्थश्चेज्जुहोतियजतिक्रियाः ।
स्नानध्यानजपैर्दानैरात्मानं शोधयेद् द्विजः ॥

अष्टधा दिवसविभागे स्नानवेलायाम् दक्षः [ २, ४१ ]

चतुर्थे च तथा भागे स्नानार्थं मृदमाहरेत् ।
तिलपुष्पकुशादी स्व स्नानं चाकृत्रिमे जले ॥

व्यासः— स्नानं मध्यन्दिने कुर्यात् सुजीर्णेऽन्ने निरामयः ।
न भुक्त्वाऽलङ्कृतो[१] रोगी नाज्ञातेऽम्भसि नाकुले ॥

अग्निपुराणम् [ वङ्गिपु ४(१०क) ]

नदीदेवनिखातेषु तड़ागेषु सरःसु च ।
स्नानं समाचरेन्नित्यं गर्तप्रस्रवणेषु च ॥
निपानादुद्धृतं पुण्यं ततः प्रस्रवणोदकम्[२] ।
ततोऽपि सारसं पुण्यं ततो नादेयमुच्यते ॥
तीर्थतोयं ततः पुण्यं गङ्गातोयं ततोऽधिकम् ॥

विष्णुपुराणम् [ ३।११।२५ ]

कूपेषूद्धृततोयेन स्नानं कुर्वीत वा भुवि ।
स्नायीतोद्धृततोयेन यदि वा भुव्यसम्भवे ॥

विष्णुः [ ६६, १४-१५ ]

स्नायात् प्रस्रवणे देवखातसरोवरेषु च । उद्धृताद्भूमिष्ठमुदकं पुण्यं स्थावरात् स्रवत्तस्मान्नादेयं तस्मादपि साधुपरिगृहीतं सर्वत एव गाङ्गम् ॥

पराशरः [ १२।८-११ ][३]

पञ्च स्नानानि दिव्यानि कीर्तितानि महर्षिभिः ।
तानीह संप्रवक्ष्यामि यथावदनुपूर्वशः ॥

---

१ प—न भुक्त्वानकृतो ।

२ वङ्गिपु—प्रस्रवणादिकम् ।

३ इमे श्लोकाः पराशरसंहितायां किञ्चिदन्यथा पठितास्तथा त—न—व—पुस्तकेषु किम्नकुल-तयोद्धृता दृश्यन्ते ।

आग्नेयं वारुणं ब्राह्मं वायव्यं दिव्यमेव च ।
आग्नेयं भस्मना स्नानमवगाहं तु वारुणम् ॥
आपोहिष्ठेति च ब्राह्मं वायव्यं गोरजः स्मृतम् ।
यत्तु सातपवर्षेण[1] दिव्यं स्नानं तदुच्यते ॥
एतैश्च श्रद्धया स्नानं गङ्गास्नानेन तत् समम् ।

तत्र मलस्नानाङ्गशौचसङ्कल्पग्रहणानन्तरं

## तीर्थावाहनम्

तत्र पद्मपुराण-मत्स्यपुराणे [ पद्म, सृष्टि २०, १४६ । मत्स्य १०२, २ ]
अनुद्धृतैरुद्धृतैर्वा[2] जलैः स्नानं समाचरेत् ।
तीर्थं प्रकल्पयेद्विद्वान् मूलमन्त्रेण मन्त्रवित् ॥
नमो नारायणायेति मूलमन्त्र उदाहृतः ॥

तथा पद्मपुराणम् [ सृष्टि, ६०, ५८-६१ ][3]
विष्णोः पादप्रसूताऽसि वैष्णवी विष्णुपूजिता ।
पाहि [4]मामेनसो ह्यस्मादा[4] जन्ममरणान्तिकात् ।
विष्णुपादार्घसम्भूते गङ्गे त्रिपथगामिनि ।
धर्मद्रवीति विख्याते पापं मे हर जाह्नवि ॥
तिस्रः कोट्योऽर्धकोटी च तीर्थानां वायुरब्रवीत् ।
दिवि भुव्यन्तरीक्षे च तानि ते सन्ति जाह्नवि ॥
नन्दिनीत्येव ते नाम देवेषु नलिनीति च ॥
वृन्दा[5] पृथ्वी च विहगा[6] विश्वकाया शिवा सिता[7] ।
विद्याधरी सुप्रसन्ना[8] तथा लोकप्रसादिनी ॥
क्षेम्या च जाह्नवी चैव शान्ता शान्तिप्रदायिनी ।
एतानि पुण्यनामानि स्नानकाले [9]तु यः पठेत्[9] ।
भवेत् सन्निहिता तस्य[10] गङ्गा त्रिपथगामिनी ॥

---

१ घ—स्नातं पयोवर्षैः ।
२ ज—राहृतैर्वा ।
३ द्वितीयश्लोकवर्जमितरे श्लोकाः सर्व एव मत्स्यपुराणेऽपि ( १०२, ४-८ ) लभ्यन्ते ।
४ ज—त—न—व—मस्त्वेनसस्तस्मादा ।
५ घ—ङ—झ—दधा । त—न—व—वृधा । पद्मपु—नन्दा ।
६ क—सुभगा ।
७ घ—ङ—झ—सुता ।
८ ङ—प्रसन्ना च ।
९ त—न—व—प्रकीर्तयेत् ।
१० क—ख—झ—त—न—व—तत्र ।

## ततो मृत्तिकालम्भनम्

तत्र मेधातिथिर्ऋषिर्गायत्री छन्दो विष्णुर्देवता अग्निष्टोमसविल्टहोमे[1] विनियोगः।

**इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्।**
**समूढमस्य पांशुरे॥ २७**

[ ऋ स १, २२, १७। वा स ५, १५। का स ५, २० ]

विष्णुर्भगवानिदं जगत् विचक्रमे विक्रान्तवान् आक्रान्तवानित्यर्थः। कथमाक्रान्तवान्—त्रेधा त्रिप्रकारं पदं निदधे निहितवान् पृथिव्यामाकाशे स्वर्गे च पदत्रयमर्पितवानित्यर्थः। अस्य विष्णोस्तत् पदं पांशुरे समूढम्। पांशुरे पांशुयुक्ते अर्थवशात् पृथिव्यामित्यर्थः। समूढं सम्यङ् निविष्टम्। अयमत्र वाक्यार्थः।—विष्णुर्भूम्याकाशस्वर्गात्मकं जगत् पदेन विक्रान्तवान्। तदस्य पदं भूम्यां सम्यक् सम्बद्धम्। एतेन विष्णुपदसम्बन्धेन भूमिरतीव शुद्धेति भूमेः स्तुतिः। इत्थं स्तुता[2] भूमिर्मां पावयत्वित्यभिप्रेत्य मृद्ग्रहणमनेन क्रियते।

ततो मृत्तिकालम्भनानन्त

## गोमयालम्भनम्

तत्र [3]कर्दम ऋषिरनुष्टुप् छन्दः श्रीर्देवता गोमयालम्भने विनियोगः।

**गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्।**
**ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्॥ २८**

[ ऋ स खिल ५, ८, ७, ९। तै आ १०, १, १०। मा गृ २, १३, ६ ]

तां श्रियम् इह गोमये उपह्वये आवाहयामि। तां काम्—गन्धद्वारां गन्धो गुणस्तस्यानुभवे द्वारभूतां पृथिवीस्वरूपाम्। यतः पृथिव्याश्रित एव गन्धोऽनुभूयते। पुनः किम्भूताम्—दुराधर्षाम् अनाधृष्यां तेजोविशेषशालित्वात्। नित्यपुष्टां सदा स्फीताम्। करीषिणीं करीषं गोमयं[4] तद्युक्तां गोमयस्थामित्यर्थः। सर्वभूतानामीश्वरीम् सर्वभूतानां सर्वप्राणिनाम्। पञ्चमहाभूतानां वा। अत्र पक्षे शब्दस्पर्श-

---

१ क—ङ—अग्निष्टोमवर्त्महोमे। त—न—व—अग्निसोमवर्त्महोमे।
२ ज—ञ—स्तुता। त—न—व—भूता।
३ ख—विष्णुऋषि। घ—कृतसऋषि। त—न—व—वत्सऋषि।
४ घ—शुष्कगोमयं।

रूपरसगन्धानां गुणाः पृथिव्यामाश्रिता इति सर्वेभ्य एव भूतेभ्यः पृथिव्या अधिकत्वादीश्वरत्वम्। इह गोमये लक्ष्मीमावाह्य गोमयग्रहणं कुर्वतो मम लक्ष्मीर्भवत्विति वाक्यार्थः।

ततो गोमयालम्भनानन्तरं करौ सम्पुटीकृत्य उरुं हि मन्त्रेण उदकोपस्थानम्[१]। तत्र उरुं हीत्यस्य वारुणमन्त्रस्य माहात्म्ये हारीतः—

यत्किञ्चिद्वारुणं मन्त्रमन्तर्जले[२] जपेत्[३] सर्वपापेभ्यः प्रमुच्यते।

तत्र शुनःशेफ ऋषिस्त्रिष्टुप् छन्दो वरुणो देवताऽवभृथे यजमानवाचने विनियोगः।

**उरुꣳ हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ।**
**अपदे पादा प्रतिधातवेऽकरुतापवक्ता हृदयाविधश्चित्॥ २९**

[ ऋ स १, २४, ८। वा स ८, २३ ]

हि यस्मात् जलस्य राजा वरुणः सूर्याय सूर्यस्य पन्थां पन्थानम् उरुं विस्तीर्णं चकार कृतवान् तस्मात् तं पन्थानम् अहम् अन्वेतवै अनुगच्छामीत्यर्थः। उ पक्षान्तरम्। स एव वरुणस्तमेव पन्थानम् अपदे आकाशे सूर्यस्य पादा पादानां रश्मीनां प्रतिधातवे अर्पणाय अकः कृतवान्। उत अपि च स एव वरुणो हृदयाविधश्चित् पिशुनस्यापि अपवक्ता नियामकः। जलस्य राजा पिशुनस्यापि नियामको वरुण आकाशे सूर्यस्य रश्मीनामर्पणाय विस्तीर्णं पन्थानं कृतवान्। तं पन्थानमनुगच्छामीति याच्ञा वाक्यार्थः। अत्र सूर्यायेति षष्ठ्यर्थे चतुर्थी। पन्थामिति पन्थानमित्यत्र नलोपेन। अन्वेतवै—अनुपूर्वात् इण् गतावित्यस्मात् कृत्यार्थे तवैकेन्केन्यत्वन इति (पा ३, ४, १४) तवैप्रत्ययः। कृन्मेजन्तः (पा १, १, ३९) इत्यव्ययत्वम्। पादा इति षष्ठीबहुवचनस्थाने छान्दसत्वादाकारः। प्रतिधातवे इति प्रतिपूर्वाद् दधातेः सितनिगमिमसीत्यादिसूत्रेण (उ १, ७२) बहुलवचनाद्भावे तुन्। अक इति करोतेर्लुङः स्थाने प्रथमपुरुषैकवचनम्। च्लि प्रत्ययः। बहुलं छन्दसीति (पा ७, ३, ९७) बहुलवचनादीड् न भवति। धातोर्गुणः। रपरत्वम्। हल्ङ्याब्भ्य इति (पा ६, १, ६८) विभक्तिलोपः। मन्त्रे घसह्वरणशेत्यादिना (पा २, ४, ८०) च्लेर्लोपः। हृदयाविध इति हृदयं विध्यतीति क्विप्। नहिवृतीत्यादिना (पा ६, ३, ११६) दीर्घत्वम्।

---

१ ज—उदकाभिमन्त्रणम्। त—न—व—उदकोपस्थानम्।

२ ज—मन्त्र सम्यगन्तर्जले।

३ ज—स्नात्वा ऋष्यादिकं स्मृत्वा।

जलोपस्थानानन्तरं

## जलावतरणम्

शुनःशेप ऋषिर्वरुणो देवता। यजुष्टाच्छन्दो नास्ति। अवभृथे यजमानस्य जलावतरणे विनियोगः।

**नमो वरुणायाभिष्ठितो वरुणस्य पाशः ॥ ३०**

[ वा स ८, २३ ]

नमो वरुणाय। अभिष्ठितः आक्रान्तो वरुणस्य पाशः। अयं वाक्यार्थः—वरुणस्य जलरूपपाशाक्रमणेन याऽप्रीतिर्जायते सा वरुणनमस्कारेणापनीयते। तेन वरुणनमस्कारपूर्वकं जलावतरणं क्रियते।

**इमं मे गङ्गे यमुने सरस्वति……।**

[ ऋ स १०, ७५, ५ ]

अर्थः प्रागुक्तः [ २३ पृः ]।

ततो जलेऽवतीर्य तीर्थावाहनं कुर्यात्। तीर्थावाहनानन्तरं मन्त्रत्रयेण जलाञ्जलित्रयं शिरसि दद्यात्।

तत्र प्रजापतिऋर्षिस्त्र्यवसाना पंक्तिश्छन्द (?) आपो देवता मार्जने विनियोगः।

**इदमापः प्र वहत यत्किञ्चिद् दुरितं मयि।**
**यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम् ॥ ३१**

[ ऋ स १, २३, २२—यत्किंच। का स ६, ३२ ]

हे आपः यूयम् इदं प्रवहत अपनयतेत्यर्थः। इदं किम्—यत् किञ्चित् मयि मदाश्रितं दुरितं पापम्। यद्वा यदप्यहमभिदुद्रोह परद्रोहरूपं पापं कृतवानस्मि। यद्वा यदपि शेपे पराक्रोशरूपं पापं कृतवानस्मीत्यर्थः। उत अप्यर्थः। अनृतं मृषावादरूपञ्चेत्यर्थः। अयं वाक्यार्थः—मम यत् किञ्चित् मनःकायवचनैरर्जितं पापं तदनेन स्नानेनापनयतेत्यप सु प्रार्थना[१]।

तथा—प्रजापतिऋर्षिस्त्रिष्टुप् छन्द आपो देवता दीक्षायां यजमानस्नाने विनियोगः।

**आपो अस्मान्मातरः शुन्धयन्तु घृतेन नो घृतपः पुनन्तु।**
**विश्वᳬ हि रिप्रं प्रवहन्ति देवीः ॥ ३२**

[ ऋ स १०, १७, १०। वा स ४, २। का स ४, १। श ब्रा ३, १, २, ११ ]

---

१ स—इत्यापस्तम्बीयेदमापमन्त्रव्याख्या।

आपः अस्मान् शुन्धयन्तु शोधयन्तु। किम्भूता आपः—मातरः जगतां जनन्यः। अपि च नः अस्मान् घृतेन पुनन्तु जलस्य वीर्येण पवित्रीकुर्वन्तु। किम्भूताः—घृतप्वः घृतं जलस्य वीर्यन्तेन पुनन्तीति घृतप्वः आपः। घृतं ह्यपां परमं तेजः पवित्रम्। यथा श्रुतिः [ श ब्रा ३, १, २, ११ ]

तद्वै सुपूतं[1] यं [2]घृतेन पुनन्ति[2]।

हि यस्माद् देवीः स्तुत्यादिविषया आपः रिप्रं पापं प्रवहन्ति अपनयन्ति। किम्भूतम्—विश्वं सर्वम्। अयं वाक्यार्थः—आपो जगतां मातरः घृतं च तासां वीर्यं सकलपापक्षयकारिणश्च ता इति जलस्तुतिः। ता अस्मान् पुनन्त्विति याच्ञा। अत्र शुन्धयन्त्विति शुन्ध शुद्धावित्यस्य ण्यन्तस्य प्रयोगः। घृतप्व इति घृतेन पुनन्तीति क्विबन्तम्। रपो रिप्रमिति पापनामनी[3] ( निरु ४, २१ ) भवतः। देवीरिति वा छन्दसीति ( पा ६, १, १०६ ) विकल्पेन पूर्वसवर्णादेशाद् रूपम्।

## द्रुपदादिव

इति तृतीयो मन्त्रः प्रातःसन्ध्यायामेव व्याख्यात इति तत्रैव तस्य ऋष्यादिकमनुसन्धेयम् [ ६१ पृः ]।

ततः पुनरपि दक्षिणावर्तेन

## जलावर्तनम

तत्र दध्यङ्ङाथर्वण ऋषिर्गायत्रीच्छन्द आपो देवता शान्तिकर्मणि विनियोगः।

**शन्नो देवीरभिष्टय आपो भवन्तु पीतये।**
**शंयोरभि स्रवन्तु नः॥ ३३**

[ ऋ स १०, ९, ४। वा स, का स ३६, १२

हे आपः नः अस्माकं शं कल्याण्यो भवन्तु। किम्भूताः—देवीः देव्यः[4] स्तुत्यादिविषयाः। किमर्थम्—अभिष्टये उपचयार्थम्। पीतये पानाय च। किं च—नः अस्मान् अभिस्रवन्तु अस्मदभिमुखं स्रवन्तु। किमर्थम्—शंयोः कल्याणसंयोगाय। अयं वाक्यार्थः—आपोऽस्माकमुपचयाय पानाय कल्याणसंयोगाय च

---

१ क—घमृतं। ख—दमृतं।
ग—न—व—सुप्रभं।
२ माध्यन्दिनीय-शतपथब्राह्मणे 'घृतेनापुनन्'।
३ ग—न—व—रपो रिप्रमिति पापनाम्नी।
४ ज—भ—दिव्य।
ग—न—व—पुस्तकेषु पदमेतन्नास्ति।

भवन्त्वित्याशंसा। तत्र देवीरिति प्रथमाबहुवचने वा छन्दसीति [पा ६, १, १०६] विकल्पेन पूर्वसवर्णादेशः। अभिष्टये इति इष्ट इष्ट शब्दसङ्घातयोरित्यस्माद्धातो-रभिपूर्वात् क्विपि कृते आदेच उपदेशेऽशितीति [पा ६, १, ४५] इत्यात्वम्। स्त्यः प्रपूर्वस्येति [पा ६, १, २३] योगविभागात् सम्प्रसारणम्। तादर्थ्ये चतुर्थी। शंयोरिति शंशब्दात् कंशंभ्यां बभयुस्तितुतयस इति [पा ५, २, १३८] मत्वर्थीये युप्रत्यये कृते शंयुरिति पदम्। ततश्चतुर्थ्यर्थे बहुलं छन्दसीति [पा २, ३, ६२] षष्ठ्येकवचने शंयोरिति रूपम्। यदा तु शनैश्चरपूजायामस्य विनियोगस्तदा अभिष्टये अपेक्षितफलावाप्तये। यदा श्राद्धे तदा पीतये पितॄणां पानायेति विशेषो बोद्धव्यः।

ततो जले निमज्ज्य मन्त्रं पठित्वा त्रिर्निमज्जयात्।

तत्र प्रजापतिर्ऋषिर्यज्ञो देवता। यजुष्ट्वाच्छन्दो नास्ति। ऋजीषकुम्भमज्जने[१] विनियोगः।

**अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः।**
**अव देवैर्देवकृतमेनोऽयासिषमव मर्त्यैर्मर्त्यकृतं**
**पुरुराव्णो देवरिषस्पाहि॥ ३४**

[वा स ३, ४८। का स ३, ५६]

हे अवभृथ यज्ञसमाप्तिस्नान। किम्भूत—निचुम्पुण ब्रह्महादिभिरपि नीचैराचर्यमाणं पुनासीति निचुम्पुणस्त्वम्। निचेरुरसि त्वं नीचानपि रौषि आह्वयसि पावनायेत्यर्थः। निचुम्पुणः असि भवसि। असीति मध्यमपुरुषदर्शनात् त्वमित्यध्या-ह्रियते। अहमेनः पापम् अवायासिषम् अपनीतवानस्मि। अयासिषमित्यस्य अवेत्यनेन व्यवहितेन सम्बन्धः। उत्तमपुरुषदर्शनात् अहमित्यध्याहार्यम्। किम्भूत-मेनः—देवकृतं देवविषये कृतं वैश्वदेवाकरणेन कृतम्। कैरवायासिषम्—देवैः यज्ञे हविर्दानेन तोषितैः। किञ्च मर्त्यकृतमप्येनः अवायासिषम्। अत्रापि अवेत्यनन्तरस्थितेन सम्बन्धः। मर्त्या मनुष्याः तद्विषये कृतम् अतिथ्यपूजनेन कृतमित्यर्थः। कैरवायासिषम्—मर्त्यैर्मनुष्यैः यज्ञकर्मणि ऋत्विग्भूतैः। अत्र[२] वैश्वदेवातिथिपूजनयोरुपादानं महायज्ञोपलक्षणार्थम्। यतोऽहं नित्यं होमादि-करणेन पापमपनीतवान् अतो मां त्वं पाहि रक्ष। अत्रापि पाहीति मध्यम-पुरुषान्तक्रियापदस्य साकाङ्क्षत्वात् मामिति कर्मपदं त्वमिति कर्तृपदञ्चाध्याहर-णीयम्। कस्मात् पाहि—देवरिषः देवहिंसारूपात् पापात्। किम्भूतात्—

१ क—ख—च—ज—त—न—व— मार्जने।   २ ज—भ—तत्र।

पुरुरावणः बहुपापफलप्रदानात्मकात्। अत्रापि देवहिंसारूपपापोपादानं[1] पञ्चयज्ञापनेयपापोपलक्षणार्थम्। अयमत्र वाक्यार्थः—यतो मया वैश्वदेवाद्यकरणपापमृत्विजः सहकारिणः कृत्वा देवतोषणेनापनीतमतो हे अवभृथ त्वं मां देवहिंसारूपात् पापाद् रक्ष। यत्तु केनचिदुक्तम्[2] अवभृथस्नानमुपांशु करणीयं तत्र च उपांश्ववभृथेष्ट्या चरन्तीति श्रुतिः प्रमाणत्वेन लिखिता तदयुक्तम्। अवभृथस्नानावभृथेष्टयोर्भिन्नत्वात्। अनया च श्रुत्या अवभृथेष्टेरेव उपांशुचरणं[3] प्रतिपाद्यते न त्ववभृथस्नानस्यापि[4]। [5]निचुम्पुण-निचेरुशब्दौ पृषोदरादौ। निचुम्पुणेति अवेति च पुनर्वचनमादरार्थम्।[5] पुरुरावण इति पुरुपदं बहुवाचकम्। रा दाने इत्यस्माद् आतो मनिन्-क्वनिब्-वनिपश्चेति ( पा ३, २, ७४ ) वनिप्-प्रत्यये कृते पुरुपूर्वात् पञ्चम्या रूपम्। देवरिष इति रिष हिंसायामित्यस्माद्देवपूर्वात् क्विपि कृते पञ्चम्या रूपम्।

समुद्रे त इति मन्त्रेणाचमनम्। अस्य मन्त्रस्य व्याख्यादिकमुपरि लिखितप्रातःस्नान एव लिखितत्वादिह पुनर्न लिखितमिति तत्रैवानुसन्धेयम् [ २६ पृः ]।

इत्याचमनानन्तरं इमं मे गङ्गे इति मन्त्रेण पुनस्तीर्थावाहनम्। अस्यापि मन्त्रस्य व्याख्यादिकं प्राग् लिखितत्वादिह पुनर्न लिखितमिति तत्रैव तदनुसन्धेयम् [ २३ पृः ]।

तीर्थावाहनानन्तरमापो हि ष्ठेति तिसृभिर्मार्जनं कुर्यात्। अस्यापि ऋक्त्रयस्य व्याख्यादिकं प्रातःस्नानप्रकरणे [ २४, २५ पृः ] लिखितत्वादिह पुनर्न लिखितमिति तत्रैवानुसन्धेयम्।

एतन्मार्जनानन्तरं चित्पतिर्मेत्यादिमन्त्रेण पुनर्मार्जनम्।

तत्र प्रजापतिरृषिः प्रजापतिर्देवता। यजुष्टाच्छन्दो नास्ति। यजमानपावने विनियोगः।

**चित्पतिर्मा पुनात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः।**
**तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम्॥[6] ३५**

[ वा स ४, ४ । का स ४, ५ । श ब्रा ३, १, ३, २१ ]

---

१ ज—भ—°पापापनोदनं।

२ माध्यन्दिनीय-मन्त्रभाष्ये ( ३, ४८ ) उवटाचार्योक्तिस्तथा निरुक्तवृत्तौ (५, १८) दुर्गाचार्योक्तिर्द्रष्टव्या।

३ ख—करणीयं। त—न—व—°करणं।

४ अवभृथमन्त्रस्य द्विविधो विनियोगः कात्यायनेनोपदिष्टः श्रौतसूत्रे पञ्चमाध्याये ( ५, ५, १९ ) दशमाध्याये च ( १०, ९, २ )।

५ क—च—ज—भ—त—न—व—पुस्तकेषु निचुम्पुणेत्याद्यंशो नास्ति।

६ आकरे एकस्मिन्नेव मन्त्र उद्दिष्टाः चित्पतिर्वाक्पतिर्देवः सविता चेति तिस्रो देवता अत्र त्रिधा विभज्य पठितेषु त्रिषु मन्त्रेषूद्दिष्टाः। अनन्तरपठितौ मन्त्रौ द्रष्टव्यौ।

चित्पतिः प्रजापतिः मा मां पुनातु पवित्रं करोतु। केन—पवित्रेण कुशेन। किम्भूतेन—अच्छिद्रेण अखण्डितेन। न केवलं कुशेन सूर्यस्य रश्मिभिः अपि मां पुनातु। हे पवित्रपते पवित्राणां पते[1] ते[2] त्वत्पूतस्य[3] तस्य मम। किम्भूतस्य—पवित्रपूतस्य पवित्रेण पवित्रीकृतस्य। यत्कामो यदभिलषितं तत् शकेयं प्राप्नुयाम्। किं तदभिलषितम्—पुने आत्मानं पावयामीत्यभिलषितम्। अयं वाक्यार्थः—प्रजापतिना कुशसूर्यरश्मिभ्यां पावितस्य मम जलेनात्मानं पावयामीति यदभिलषितं तत्राहं शक्तो भवामि। चित्पति-शब्देन प्रजापतिरुच्यते। तत्र प्रजापतिर्वै चित्पतिरिति ( तै स ३।१।२।२२ ) श्रुतिः प्रमाणम्।

तथा—प्रजापतिर्ऋषिर्वाक्पतिर्देवता। यजुष्ट्वाच्छन्दो नास्ति। यजमान-पावने विनियोगः।

**वाक्पतिर्मा पुनात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः।**
**तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम्॥ ३६**

[ वा स ४, ४। का स ४, ५। तै स १, २, १, २—वाक्पतिस्त्वा ]

अत्र वाक्पतिर्बृहस्पतिः। अपरा सकलैव व्याख्या चित्पतिव्याख्यानेन तुल्या।

तथा—प्रजापतिर्ऋषिः सविता देवता। यजुष्ट्वाच्छन्दो नास्ति। यजमान-पावने विनियोगः।

**देवो मा सविता पुनात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः।**
**तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम्॥३७**

[ वा स ४, ४। का स ४, ५ ]

अत्र देवः सविता सूर्यः। अपरं सर्वं चित्पतिमन्त्रेण तुल्यम्।

ततो जले निमग्नीभूयाऽघमर्षणमन्त्रं त्रिरावर्त्य स्नायात्। तत्राघमर्षण-मन्त्रस्य माहात्म्ये बौधायनः ( बौ ध ४, ४, २ )

ऋतञ्च सत्यञ्चेत्येतदघमर्षणं त्रिरन्तर्जले पठन् सर्वस्मात् पापात् प्रमुच्यते।

व्यासः— ऋतञ्चेति जपन् यस्मात् पापमामरणान्तिकम्।
मनोवाक्कायजं सर्वं मर्षयेदघमर्षणम्॥

---

१ क—ख१—पूतत्वञ्चक।
२ ख२—जलपते। ङ—जलेन ते।
३ क—गं—तत्प्रसूतस्य। ङ—हतस्य।
ज—भ—जलेन हतस्य।

योगियाज्ञवल्क्यः ( ७, १७५ )

हत्वा लोकानिमांस्त्रीन् हि त्रिः पठेदघमर्षणम् ।
यथाऽश्वमेधावभृथ एवं तन्मनुरब्रवीत् ॥

तथा (७, १७७) यथाऽश्वमेधः क्रतुराट् सर्वपापापनोदनः ।
तथाऽघमर्षणं सूक्तं सर्वपापप्रणाशनम् ॥

हारीतः— पातकोपपातकमहापातकानामेकतमसन्निपातेऽघमर्षणमेव जपेत् ।

अथातः सर्ववेदपवित्राणि[1] भवन्तीत्यधिकारे विष्णुः [ ५५, ७ द्र: ]

यथाऽश्वमेधः क्रतुराट् सर्वपापापनोदनः ।
तथाऽघमर्षणं सूक्तं सर्वपापप्रणाशनम् ॥

योगियाज्ञवल्क्यः[2] ( ६, २८ )

स्नानमब्दैवतैर्मन्त्रैर्मार्जनं प्राणसंयमः ।
[2]अघमर्षणसूक्तेन अश्वमेधावभृत्समम्[2] ॥

जलनिमग्नः प्राणान् संयम्य त्रिरावर्त्याऽघमर्षणसूक्तेन स्नायादित्यर्थः ।

शङ्खः [१३, २] नास्त्यघमर्षणात् परमन्तर्जले ॥

गौतमः [ गौ ध २४, १४ ]

अन्तर्जले चाघमर्षणं त्रिरावर्तयन् सर्वपापेभ्यो मुच्यते ॥

अत्रिः [ २, ८ ] अपि चाप्सु निमज्जित्वा त्रिः पठेदघमर्षणम् ।
यथाऽश्वमेधावभृथस्तथैतन्मनुरब्रवीत् ॥

वसिष्ठः [ २६, ८ ]

अपि चाप्सु निमज्जानस्त्रिः पठेदघमर्षणम् ।
यथाऽश्वमेधावभृथस्तादृशं मनुरब्रवीत् ॥

वृद्धापस्तम्बः— अपि चाप्सु निमज्जित्वा त्रिः पठेदघमर्षणम् ।
यथाऽश्वमेधयज्ञो हि मनुस्तादृशमाह तत् ॥

बौधायनः [ बौ ध ४, २, १५ ]

त्रिरात्रं वाऽप्युपवसेत्त्रिरह्नो ह्युपेयादपः ।
प्राणानात्मनि संयम्य त्रिः पठेदघमर्षणम् ।
यथाऽश्वमेधावभृथ एवं तन्मनुरब्रवीत्[4] ॥

---

१ ज—भ—त—न—सर्वदैवपवित्राणि ।
२ त—न—व—अघमर्षणसूक्तेनाश्वमेधावभृथेन च ।
३ —बृहद्विष्णुः ।
४ ( १, २५९ ) द्रष्टव्यः ।

योगियाज्ञवल्क्यः[1] [ ७, १७६ ]

> [2]त्र्यहं तूपवसन् युक्तस्त्रिरह्नो[2] ह्युपयन्नपः।
> मुच्यते पातकैः सर्वैर्जप्त्वा त्रिरघमर्षणम्॥

रहस्ये बृहद्यमः

मातरं भगिनीं गत्वा मातृष्वसारं स्नुषां सखीं वाऽन्यद्वा[3]ऽगम्यागमनं [4]कृत्वाऽघमर्षणमन्त्रजले त्रिरावर्तैस्तस्मात् पूतो भवति।

तथा—अथ गुरुतल्पगमनं कृत्वाऽघमर्षणमन्त्रैर्जले त्रिरावर्त्य तदेतस्मात् पातकात् पूतो भवति।

अत्र पापगौरवमाकलय्य संयतेन[5] मासैकं यावत् प्रत्यहं जले निमग्नीभूयाऽघमर्षणसूक्तं त्रिरावर्त्य स्नातव्यम्।

तथा लघुयमः—[ ३१-३२ ]

> महापातककर्तारश्चत्वारोऽप्यविशेषतः[6]।
> अग्निं प्रविश्य शुध्यन्ति स्नात्वा वा महति क्रतौ॥
> रहस्यकरणे चैवं[7] मासमभ्यस्य पौरुषम्।
> अघमर्षणसूक्तं वा शुध्येतान्तर्जले स्थितः॥

बृहद्यमः

अथ ब्रह्महत्यां कृत्वा प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य प्रभूतेनेन्धनेनाग्निं प्रज्वाल्याऽघमर्षणमष्टसहस्रमावर्त्य जुहुयात्। तदेतस्मात् पापात् पूतो भवति।

हारीतः—

> अघमर्षणमन्त्रैर्जले त्रिरावर्तयित्वा मुच्यते ब्रह्महत्यया।

अत्रिः—

> क्षत्रियावैश्याभिगमनेऽघमर्षणं त्रिरावर्त्याऽन्तर्जले शुध्यति।

वृद्धापस्तम्बः

> अकार्यकरणे चैव तथाऽभक्ष्यस्य भक्षणे।
> अघमर्षणसूक्तेन पीत्वाऽपः शुध्यति द्विजः॥

---

१ क—ख—ग—घ—याज्ञवल्क्यः।

२ त—नक्तं चोपवसन् यस्तु विरक्तो।
न—व—त्र्यहं चोपवसेद् यस्तु विरक्तो।
मुद्रित-योगियाज्ञवल्क्य-पाठाः परमशुद्धाः—
त्र्यहं तु परमित्युक्त्वा ऋष्येवमादयः।

३ ङ—सनाभं। ज—झ—नास्ति। त—सनाभ्यां।

४ ङ—ज—झ—गत्वा पावयेदघमर्षण।

५ ज—झ—तेन। त—न—मनसा इत्यधिकम्।

६ ज—झ—त—न—व—°श्चत्वारो वा विशेषतः।

७ ज—झ—वेदं।

अत्रिः [ ४, ३ ]

अपेयं पीत्वाऽभक्ष्यं भक्षयित्वाऽकार्यं कृत्वाऽघमर्षणेनापः पीत्वा शुध्यति। तथा शूद्रागमनेऽघमर्षणेनापः पीत्वा शुध्यति।

वसिष्ठः [२३, २० ]

मनसा पापं कृत्वाऽघमर्षणं पठेत्।

वृद्धापस्तम्बः[1]

क्षत्रियागमने वैश्यागमने चैव तापसीम्।
त्रिरावर्त्य विशुद्धः स्यात् शूद्रागाम्यघमर्षणम्॥

तापसीमिति तापसीमृचमित्यर्थः।

शङ्खः—

ब्रह्महा त्रिरात्रोपोषितोऽन्तर्जलेऽघमर्षणं त्रिरावर्तयेत्॥

याज्ञवल्क्यः[2] [ ३, ३०१ ]

त्रिरात्रोपोषितो जप्त्वा ब्रह्महा त्वघमर्षणम्।
अन्तर्जले विशुध्येत दत्वा गान्तु पयस्विनीम्॥

प्रकाशविषये[3] बौधायनः [ बौ ध ३, ५, २-८ ]

तीर्थं गत्वा स्नातः[4] शुचिवासा उदकान्ते स्थण्डिलमुद्धृत्य सकृत्क्लिन्नेन वाससा सकृत्पूर्णेन पाणिना आदित्याभिमुखोऽघमर्षणं स्वाध्यायमधीयीत प्रातः शतं मध्याह्ने शतमपराह्णे शतमपरिमितं वा। उदितेषु नक्षत्रेषु प्रसृतयावकं प्राश्नीयात्। ज्ञानकृतेभ्योऽज्ञानकृतेभ्यश्चोपपातकेभ्यः सप्तरात्रात् पुनीते[5]। द्वादशरात्रात् भ्रूणहननं ब्रह्महननं गुरुतल्पगमनं सुवर्णस्तैन्यं सुरापानमिति च[6] वर्जयित्वा[7]। एकविंशतिरात्रात्तान्यपि[8] जयति सर्वं तरति सर्वं जयति सर्वं क्रतुमवाप्नोति सर्वतीर्थेषु स्नातो भवति सर्ववेदेषु चीर्णव्रतो भवति सर्वैर्देवैर्ज्ञातो भवत्या चतुर्थात्[9] पंक्तिं पुनाति कर्माणि चास्य सिध्यन्तीति बौधायनः।

बृहद्विष्णुः [ विष्णु ५५, ३ ]

व्रतेनाघमर्षणेन[10] च सुरापः पूतो भवति।

---

१ क—आपस्तम्बः।

२ ङ—योगियाज्ञवल्क्यः।

३ ङ—प्रकाशनविषये।

४ क—ज—भ—स्नात्वा ततः।

५ प्रमुच्यते इति बौधायनधर्मसूत्रपाठः।

६ क— मिति च इति नास्ति। ज—°मेवं।

७ आदर्शपुस्तकेषु वर्तयित्वा।

८ क—°विंशतिमन्त्रानपि। ज—भ— विंशतिसत्रायपि। त—न—व— विंशतिशस्तान्यपि।

९ बौधायनधर्मसूत्रे मुद्रापितः पाठः—चक्षुषः।

१० क—त—एतेनाघ।

अघमर्षणानुवृत्तौ योगियाज्ञवल्क्यः [ ७, १७४ ]

[1]तत्त्वभूताण्डपिण्डस्य स्थित्युत्पत्ती लयस्तथा[1] ।
सूक्तेऽस्मिन्[2] व्याहृतं सर्वं तत्त्वं मन्त्रार्थ एष वै ॥

तथा [ ७, १७२ ]

अघमर्षणसूक्तस्य ऋषिरेवाघमर्षणः ।
अनुष्टुप् च भवेच्छन्दो भाववृत्तश्च दैवतम् ।
अश्वमेधावभृथके विनियोगोऽस्य कल्पितः ।
सर्वपापापनोदार्थं स्मृतिकारैरुदाहृतः ॥

व्यासः—

अघमर्षण एवार्षे छन्दोऽनुष्टुप् तथैव च ।
देवता भाववृत्तश्च[3] हयमेधे[4] प्रकीर्तितः ॥

तत्राघमर्षण ऋषिरनुष्टुप् छन्दो भाववृत्तं[5] देवता अश्वमेधावभृथे विनियोगः ।

**ऋतञ्च सत्यञ्चाभीद्धात्तपसोऽध्यजायत ।**
**ततो रात्रिरजायत ततः समुद्रोऽर्णवः ॥ ३८**
**समुद्रादर्णवादधि संवत्सरो अजायत ।**
**अहोरात्राणि विदधद्विश्वस्य मिषतो वशी ॥ ३९**
**सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ।**
**दिवञ्च पृथिवीञ्चान्तरीक्षमथो स्वः ॥ ४०**

[ ऋ स १०, १९०, १—३—रात्र्यजायत । तै आ १०, १, १३—°मथो सुवः ]

अस्याघमर्षणस्य व्याख्यानमाचरितुं हृदि प्रकम्पो जायते यतः सर्ववेदसारभूतोऽत्यन्तगुप्तश्चायं मन्त्रः । अस्य पदपाठमात्रञ्च नास्ति ब्राह्मणनिरुक्तादिकमप्यस्य नास्ति ।

---

१ क—°भूताः सृष्टिस्थित्युत्पत्तिप्रलयस्तथा ।
ङ—ज—झ—तत्त्वभूतास्य पिण्डस्थित्यु° ।
त—न—व—तनुभूता सृष्टिस्थित्यु° ।
मुद्रितयोगियाज्ञवल्क्ये तु (?) भूताण्डपिण्डस्य स्थित्युत्पत्तिलयं तथा ।

२ कृत्यकल्पतरुकारलक्ष्मीधरो ब्रह्मचारिकाण्डे (१७४ पृ) सूक्तेऽस्मिन्नित्यनुपपन्नं पाठमुद्धृत्य 'सूक्ते' ब्रह्मणीति व्याख्यत् ।

३ क—भाववृत्तश्च । ज—झ—भावभृथकः ।

४ क—अश्वमेधे । ज—झ—हयमेध ।

५ 'या तेनोच्यते सा देवते'ति ( सर्वानुक्रमणी २, ५ ) मन्त्रोक्तं भाववृत्तमेव देवता । तथाचाह बृहद्देवतायाम् ( २, १२० )—
यदिदमग्रे नैवासीदसदप्यथवापि सत् ।
जज्ञे यदिदं सर्वं तद् भाववृत्तं वदन्ति तु ॥ इति ।

इत्थमेतदीयव्याख्यानानुगुणं कमप्युपायमप्राप्य यदेतदस्य स्वकपोलमात्रेण[१] व्याख्यानमाचरणीयम् तदतिसाहसम्[२]।

योगियाज्ञवल्क्येन तु [ ७, १६४ ]

तत्त्वभूताण्डपिण्डस्य स्थितुरुत्पत्तौ लयस्तथा।
सूक्तेऽस्मिन् व्याहृतं सर्वं तत्त्वं मन्त्रार्थ एष वै॥

इति वचनात् सृष्टिस्थितिप्रलयार्थताऽस्य प्रतिपादिता। पुराणमहाभारतादिष्वपि तु सृष्टिस्थितिप्रलयप्रतिपादकार्थग्रन्थभागाः समासते। तेषाञ्च श्रवणेनोत्कीर्तनेन च महाफललाभः प्रतिपादितः। तदेतत् सकलवेदसारभूतस्य सृष्टिस्थिति-प्रलयप्रतिपादकाघमर्षणमन्त्रस्य स्नानादिना तत्तत् प्राग्लिखितनानामुनिवचन-प्रतिपादितं फलभूयस्त्वमुपपन्नमेव। किञ्चास्मिन् ग्रन्थे सकलकर्मकाण्डोचितमन्त्र-भागव्याख्यानस्यैव मुख्यत्वात् यद्यस्य सारभूतमन्त्रस्यैव व्याख्यानं न क्रियते तदाऽस्य ग्रन्थस्याऽसाङ्गता भवेदित्येतादृशदोषभयमात्रेण स्वप्रतिभानुरूपं मन्त्र-व्याख्यानमेतत् क्रियते।

ऋतञ्च सत्यञ्चेति परं ब्रह्म उच्यते। तथा च श्रुतिः[३]

ऋतमेकाक्षरं ब्रह्म [ विष्णुहृदयोपनिषत् १, ९। तै आ १०, १२, १ द्रः ]।

सत्यं ज्ञानमनन्तं ब्रह्मेति [ तै आ ८, २, २। तै उपनिषत् २, १, १ ]।

आसीदित्यध्याहार्यम्। तेनायमर्थः—ऋतं च सत्यं च परं ब्रह्म आसीत्। एतेन महाप्रलयावस्था प्रतिपादिता। महाप्रलयसमये केवलं परं ब्रह्ममात्रमासी-दित्यर्थः। ततस्तदनन्तरं महाप्रलयावस्थायामेव रात्रिः अजायत रात्रिः समुत्पन्ना। सकलमन्धकारमयमासीदित्यर्थः। तथा च स्मृतिः [ मनु १, ५ ]

आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्।

तदनन्तरं महाप्रलयावसाने सृष्ट्यारम्भसमये तपसः अद्दष्टात्[४]। किम्भूतात्—अभीद्धात् सर्वतोभावेन दीप्तात्[५] सर्वतोगतवृत्त्येद्धादित्यर्थः[६]। एवंभूतादद्दष्टात् पुनः समुद्रोऽजायत। किम्भूतः समुद्रः—अर्णवः अर्णः पानीयं तदस्यास्तीति अर्णवः पानीययुक्तः समुद्रः संजात इत्यर्थः। प्रथमतः [७]सकलसंसारसृष्टिनिमित्तं जलराशिरुत्पन्न इत्यर्थः। तथा च स्मृतिः [ मनु १, ८ ]

अप एव ससर्जादौ

---

१ त—न—व—स्वकपोलकल्पनामात्रेण।
२ घ—न पदं नास्य वै पादं न ब्राह्मणनिरुक्तके।
उपायमस्य ( यो नास्य ) मन्त्रस्य
व्याख्यानाय प्रकल्पते॥ इत्यधिकम्।
३ ख—छ—त—स्मृतिश्चेत्यधिकम्।
४ झ—अदृष्टत्वात्। त—न—व—अदृष्टबलात्।
५ ज—झ—दीप्तत्वात्।
६ क—सर्वानुगतत्वाद्धादित्यर्थः।
ज—झ—सर्वतोगतवृत्तित्वाद्धादित्यर्थः।
७ क—संसारसृष्टि°। ज—झ—सकलसृष्टि°

इति। ततस्तदनन्तरं समुद्रादर्णवात् धाता स्रष्टा अजायत। किम्भूतो धाता —मिषतः अप्रकटीभवतो विश्वस्य वशी प्रभुः महाप्रलये विलुप्तस्यास्य त्रैलोक्यस्य निर्माणे प्रभुरित्यर्थः। स धाता यथापूर्वं यथाक्रमं सूर्याचन्द्रमसौ अकल्पयत् निर्मितवान्। किम्भूतौ सूर्याचन्द्रमसौ—अहोरात्राणि विदधत् अहोरात्रान् कुर्वाणौ दिवा रात्रिं च कुर्वाणौ। सूर्य एव दिवसं करोति चन्द्र एव रात्रिं करोति। ततः सूर्यचन्द्रयोरुत्पत्त्यनन्तरं संवत्सरः अध्यजायत समुत्पन्नः। सूर्यचन्द्रोत्पत्त्यनन्तरमेव रात्रिदिवसविभागोऽभवत्[१]। रात्रिदिवसविभागे सति संवत्सरव्यवस्था भवतीत्यर्थः। अथो अनन्तरं दिवञ्च पृथिवीञ्चान्तरीक्षं च स्वश्च एतान् लोकान् स एव धाता अकल्पयत् कल्पितवान्। चराचरात्मकसकललोकानेव स धाता सृष्टवानित्यर्थः। अत्र स्वःशब्देन नक्षत्रलोकोपरिस्थः स्वर्गलोक उच्यते। दिवःशब्देन तु तदूर्ध्वस्थं महर्लोकादिलोकचतुष्टयम्। तदनेन मन्त्रेण सृष्टिस्थितिप्रलयाः प्रतिपादिताः। विदधदिति द्विवचने एकवचनम्। अर्णव इति अर्णःशब्दादर्णसो लोपश्चेति [ पा वा ५, २, १०९ ] वप्रत्ययः सकारलोपश्च।

ततोऽघमर्षणस्नानानन्तरं पुनरन्तर्जले निमग्नीभूय द्रुपदां त्रिरावर्त्य स्नायात्।

तत्र द्रुपदामन्त्रमाहात्म्ये बृहस्पतिः [ आचार २२ ]

द्रुपदा नाम यो मन्त्रो वेदे वाजसनेयके।
अन्तर्जले त्रिरावर्त्य सर्वपापैः प्रमुच्यते॥

योगियाज्ञवल्क्यः [ ७, १८१ ]

द्रुपदा नाम सा देवी यजुर्वेदे प्रतिष्ठिता।
अन्तर्जले त्रिरावर्त्य मुच्यते ब्रह्महत्यया॥

हारीतः—

पवित्रमसि द्रुपदादिवेति चाघमर्षणमन्तर्जले त्रिरावर्तयित्वा मुच्यते ब्रह्महत्यया।

बौधायनः [ बौ ध ४, ४, ४ ]—

द्रुपदादिवेन्मुमुचान इत्येतामृचं त्रिरन्तर्जले पठन् सर्वस्मात् पापात् प्रमुच्यते।

पराशरः [ ११, २० ]

आपत्काले तु विप्रेन्द्र भुक्तं शूद्रगृहे यदि।
मनस्तापेन शुध्येत द्रुपदां वा शतं जपेत्॥

---

१ क—रात्रिदिवसविभागोऽभवत् इति नास्ति।

योगियाज्ञवल्क्यः [ ७, ४८-५० ]

आचान्तः पुनराचामेन्मन्त्रवत् स्नानभोजने ।
द्रुपदान्तु त्रिरावर्त्य तथा चैवाघमर्षणम् ॥
गायत्रीं वा त्रिरावर्त्य महाव्याहृतिभिः सह ।
सोपांशु प्रणवं वापि प्राता ह्यापो ह्यघापहाः ॥

तथा [ १६८-८० ]

कोकिलो राजपुत्रस्तु द्रुपदाया ऋषिः स्मृतः ।
अनुष्टुप् च भवेच्छन्द आपश्चैव तु दैवतम् ।
सौत्रामण्यामवभृथे स्नाने च विनियोजनम् ॥

अस्य द्रुपदामन्त्रस्य व्याख्यादिकं प्रातःसन्ध्यायामेव लिखितमिति तत्रैवानुसन्धेयम् ( ६१ पृः ) ।

तदनु अधिकपापनिबर्हणेच्छुरन्तर्जले[1] एव सप्रणवसप्तव्याहृतिसहितसशिरस्कगायत्र्या प्राणायामत्रयं कृत्वा स्नायात् ।

तथा सशिरस्कगायत्रीप्रकरणे शङ्खः

प्राणायामत्रयं कृत्वा स्नानकाले समाहितः ।
अहोरात्रकृतात् पापात् तत्क्षणादेव मुच्यते ॥

तथा त्रिपदसावित्रीप्रकरणे बौधायनः [ बौ ध ४, ४, ६ ]

अपि वा सावित्रीं गायत्रीं पच्छोऽर्धर्चशस्ततः समस्तां त्रिरन्तर्जले पठन् सर्वस्मात् पापात् प्रमुच्यते ।

पच्छ इति पदशः पादेन पादेनेत्यर्थः । एकैकपादेन गायत्र्याः पादत्रयं पठेदित्यभिप्रायः । तत् सवितुर्वरेण्यमित्येकं पदम् । भर्गो देवस्य धीमहि इति द्वितीयम् । धियो यो नः प्रचोदयात् इति तृतीयम् । अर्धर्चश इति अर्धार्धक्रमेण पूर्वार्धभागं पठित्वोत्तरार्धं पठेदित्यर्थः । तत्र ओं तत् सवितुर्वरेण्यं भर्गो देवस्य धीमहि इत्यर्धं प्रथमम्[2] । धियो यो नः प्रचोदयादित्यपरमर्धम् । समस्तां सकलां चतुर्विंशत्यक्षरात्मिकामेकवारेण पठेदित्यर्थः । अनेन क्रमेण वारत्रयं गायत्रीपाठः पर्यवस्यतीति ।

तथा प्रणवव्याहृतिसशिरस्कगायत्र्यधिकारे विष्णुधर्मोत्तराग्निपुराणे [ विष्णुध १, १६५, २१ । वह्निपु १०(२१क) ]

अन्तर्जले त्रिरावर्त्य गायत्रीं प्रयतस्तथा[3] ।
मुच्यते पातकैः सर्वैर्यदि न ब्रह्महा भवेत् ॥

---

१ क— निर्हरणेच्छुरन्तर्जले । २ क—त—न—ब—प्रसिद्धम् । ३ क—प्रत्यङ्गनथा ।

तथाऽन्तर्जले व्यस्तसमस्तमहाव्याहृतिपाठकपूर्वकस्नाने बौधायनः [ बौ ध ४, ४, ७ ]

अपि वा व्याहृतीर्व्यस्ताः समस्ताश्चेति त्रिरन्तर्जले पठन् सर्वस्मात् पापात् प्रमुच्यते।

तत्र व्यस्तसमस्तमहाव्याहृतयो यथा—ओं भूः। ओं भुवः। ओं स्वः। ओं भूर्भुवः स्वः। एतास्त्रिरावर्त्य स्नायात्।

तथा रहस्ये बृहद्यमः

अथ चाण्डालादिकुले शौण्डिककुले शुनिककुले दाम्भिकाभिशस्तकुले पतितकुलेऽन्यस्मिन् वाऽभोज्यपापकर्मकुले प्रतिगृह्य क्षुधितो भुक्त्वा वा ग्रामात् प्राचीमुदीचीं वा दिशमभिनिष्क्रम्य पृथिव्यां शुचौ देशेऽप्सु परिप्लवमानस्तरत्समन्दीं जपेत्। ओंकारपूर्वा व्याहृतीर्वाऽऽवर्तयेत्। तस्मात् पापात् पूतो भवति।

तत्र तरत्समन्दीमन्त्रस्य माहात्म्ये गौतमः [ गौ ध २४, २-५ ]

चतुर्ऋचन्तरत्समन्दीयमप्सु जपेत्। अप्रतिग्राह्यं प्रतिजिघृक्षन् प्रतिगृह्य वा। अभोज्यं बुभुक्षमाणः पृथिवीमावपेत्। ऋत्वन्तरारमण उदकोपस्पर्शनाच्छुद्धिमेके। एकेऽस्त्रीषु।

अस्य चावत्सार ऋषिर्गायत्रीच्छन्दः सोमो देवता मार्जने विनियोगः।

तरत् स मन्दी धावति धारा सुतस्यान्धसः।
तरत् स मन्दी धावति ॥ क

उस्रा वेद वसूनां मर्तस्य देव्यवसः।
तरत् स मन्दी धावति ॥ ख

ध्वस्रयोः पुरुषन्त्योरा सहस्राणि दद्महे।
तरत् स मन्दी धावति ॥ ग

आ ययोस्त्रिंशतं तना सहस्राणि च दद्महे।
तरत् स मन्दी धावति ॥

[ ऋ स ९, ५८, १—४ ]

तथा रहस्ये [ यमः ]

अथ सुरापः कण्ठमात्रमुदकमवतीर्य सुतसोमस्य प्रकृतिमादायोङ्कारेणाऽभिमन्त्रयित्वा पिबेत्। ततोऽप्सु निमज्ज्य मानस्तोक्यां जपेत्। तस्मात् पूतो भवति। ब्राह्मणसुवर्णहरणं कृत्वा हिरण्यं शालायां प्रक्षिप्याऽप्सु निमज्ज्य मानस्तोक्यां जपेत्। तदेतस्मात् पापात् पूतो भवति।

तत्र मानस्तोकायाः कुत्स ऋषी रुद्रो देवता जगती च्छन्दः शतरुद्रियहोमे विनियोगः।

मा नस्तोके तनये मा न आयुषि
मा नो गोषु मा नोऽश्वेषु रीरिषः।
मा नो वीरान् रुद्रभामिनोऽवधी-
र्हविष्मन्तः सदमित्त्वा हवामहे ॥ ४१

[ ऋ स १, ११४, ४—आर्षी। वा स १६, १६। का स १७, १६ ]

अस्याः कण्डिकाया रुद्रस्य देवतात्वाद्रुद्र एव सम्बोध्यते। हे रुद्र मा नः तोके तनये रीरिषः। नः अस्माकं तोके अपत्ये तनये पौत्रे मा रीरिषः मा हिंसां कुरु। तथा अस्माकमायुषि मा रीरिषः। अस्माकं गोषु मा रीरिषः। अस्माकमश्वेषु मा रीरिषः। मा हिंसां कुरुष्वेत्यर्थः। तथा नोऽस्माकमस्मत्-सम्बन्धिनो वीरान् दर्पाहङ्कारिणः पुरुषान् तथाऽस्माकं रुद्रभामिनः उग्रक्रोध-युक्तान् मा वधीः मा घातय। यस्मात् हविष्मन्तः वयम् सदमित् सदैव त्वा त्वां हवामहे यस्माद्धविर्ग्रहीत्वा यज्ञकरणार्थं सदैव त्वां प्रार्थयामहे इत्यर्थः।

[ इति मध्याह्नस्नानविधिः ]

## अथ मध्याह्नसन्ध्या

स्नानं समाप्य जलादुत्तीर्य धौतवाससी परिधाय प्रक्षालितपाणिपादः पवित्रपाणिराचम्य प्रातःसन्ध्योक्तविधिना मध्याह्नसन्ध्यामपि कुर्यात्।

अयन्तु विशेषः—प्राणायामानन्तरमाचमनमापः पुनन्त्विति मन्त्रेण कुर्यात्।

तत्र [1]विष्णुर्ऋषिरापो देवता अनुष्टुप् छन्द उपस्पर्शने विनियोगः।

आपः पुनन्तु पृथिवीं पृथिवी पूता पुनातु माम्।
पुनन्तु ब्रह्मणस्पतिर्ब्रह्म पूता पुनातु माम् ॥ ४२
यदुच्छिष्टमभोज्यं च यद्वा दुश्चरितं मम।
सर्वं पुनन्तु मामापोऽसतां च प्रतिग्रहं स्वाहा ॥ ४३

[ तै आ १०, ३०, १ ]

आपः पृथिवीं पुनन्तु पवित्रीकुर्वन्तु[2]। पृथिवी पूता अद्भिः पूता सती मां चैतत्र पुनातु। न केवलमापः पृथिवीं पुनन्तु ब्रह्मणस्पतिः ज्ञानस्य पतिम्

---

१ ङ—ज—झ—वसिष्ठ ऋषि°   २ घ—ज—झ—पवित्रां कुर्वन्तु।

आश्रयं परमात्मानमपि पुनन्तु। तद् ब्रह्म पूता पूतं मां पुनातु। अत्र पृथिवी-पदेन पार्थिवो देहो विवक्षितः[१]। ततश्च आपः पृथिवीं पुनन्त्विति मदीयं पार्थिवं देहं पुनन्त्वित्यर्थः। इत्थं देहपावनद्वारा माम् आपः पुनन्तु। कुत्र— मम यत् उच्छिष्टम् अपावनम् अभोज्यं गर्हितं भोज्यं यद्वा यदपि दुश्चरितम् असदाचरणम् असताम् अप्रतिग्राह्याणां प्रतिग्रहं च तत् सर्वं तत्र सर्वत्र आपः पुनन्त्वित्यर्थः। इत्यमाशास्य या आप आचाम्यन्ते ताः स्वाहा सुहुता भवन्तु। आप आचमनेन मदीयदेहपावनपूर्वकमुच्छिष्टत्वादिरूपे पापे मां पावयन्तु इत्याशंसा वाक्यार्थः। अत्र पतिरिति सुपां सुपो भवन्तीति द्वितीयायाः प्रथमा। ब्रह्म पूता इति पूतमिति प्राप्ते लिङ्गव्यत्ययेन स्त्रीलिङ्गता। सर्वमिति सप्तमी-स्थाने द्वितीया।

इत्याचमनं कृत्वा प्रातःसन्ध्योक्तक्रमेण गायत्रीजपान्तं कर्म समाप्य पूर्वोक्त-मन्त्रेण [२]प्रदक्षिणावृत्त्यादित्यं[२] नमस्कृत्य ब्रह्मयज्ञं कुर्यात्।

## अथ ब्रह्मयज्ञः

तत्र ब्रह्मयज्ञमाहात्म्ये छन्दोगपरिशिष्टे कात्यायनः [ २, ४, ८ ]

न ब्रह्मयज्ञादधिकोऽस्ति यज्ञो न तत्प्रदानात् परमस्ति दानम्।
सर्वेऽन्तवन्तः[३] क्रतवः सदाना नान्तो दृष्टः कैश्चिदस्य द्विकस्य॥

द्विकस्येति ब्रह्मयज्ञब्रह्मप्रदानयोः।

याज्ञवल्क्यः [ १, ४०-४८ ]

यज्ञानां तपसाञ्चैव शुभानाञ्चैव कर्मणाम्।
वेद एव द्विजातीनां निःश्रेयसकरः परः॥
मधुना पयसा चैव स देवांस्तर्पयेद् द्विजः।
पितॄन् मधुघृताभ्याञ्च ऋचोऽधीते तु योऽन्वहम्॥
यजूंषि शक्तितोऽधीते योऽन्वहं स घृतामृतैः।
प्रीणाति देवानाज्येन मधुना वा पितॄंस्तथा॥
स तु सोमघृतैर्देवांस्तर्पयेद् योऽन्वहं पठेत्।
सामानि तृप्तिं कुर्याच्च पितॄणां मधुसर्पिषा॥

---

१ ज—लक्षितः। भ—पलक्षितः।
२ क—त—न—व—प्रदक्षिणेनादित्यं दिशं।
३ छ—सर्वे तदन्ताः।

मेदसा तर्पयेद्देवानथर्वाङ्गिरसः पठन् ।
पितॄंश्च मधुसर्पिर्भ्यामन्वहं शक्तितो द्विजः ॥
वाकोवाक्यं पुराणञ्च नाराशंसीश्च गाथिकाः ।
इतिहासांस्तथा विद्यां योऽधीते शक्तितोऽन्वहम् ॥
मांसक्षीरौदनमधुतर्पणं स दिवौकसाम् ।
करोति तृप्तिञ्च तथा पितॄणां मधुसर्पिषा ॥
ते तृप्तास्तर्पयन्त्येनं सर्वकामफलैः[1] शुभैः ।
यं यं क्रतुमधीयीत तस्य तस्याप्नुयात् फलम् ॥
त्रिर्वित्तपूर्णपृथिवीदानस्य फलमश्नुते ।
तपसश्च परस्येह नित्यं स्वाध्यायवान् द्विजः ॥

तथा ब्रह्मयज्ञानुष्ठानप्रतिपादने योगियाज्ञवल्क्यः [ ७, ५७-५८ ]

प्रदक्षिणं समावृत्य नमस्कृत्योपविश्य च ।
दर्भेषु दर्भपाणिः सन् प्राङ्मुखस्तु कृताञ्जलिः ॥
स्वाध्यायन्तु यथाशक्ति ब्रह्मयज्ञार्थमाचरेत् ।
[2]ऋचाञ्च यजुषां साम्नां गाथा गुह्यमथापि वा[2] ॥
आदावारभ्य वेदन्तु स्वाध्यायोपर्युपरि क्रमात् ।
यदधीतेऽन्वहं शक्त्या स स्वाध्याय इति स्मृतः ॥

स्नात्वा मध्याह्नस्नानं कृत्वा योऽधीते वेदं स प्रथमकण्डिकामारभ्य कृत्स्नवेद-समाप्तिपर्यन्तं यावद्भिर्दिवसैः शक्नोति तावद्भिर्दिनैः क्रमेण कृत्स्नं वेद पठेत्। अनधीतकृत्स्नवेदस्तु यावदधीतवेदपुराणस्तवादिकं यथाशक्ति पठेदित्यर्थः ।

[ योगिया ७, ६० ]

आ केशादा नखाग्राच्च परमं तप्यते तपः ।
यः स्रग्व्यपि ऋचोऽधीते स्वाध्यायं शक्तितोऽन्वहम् ॥

[ योगिया ४, ४८ । मनु २, १६७ ]

स ब्रह्म परमभ्येति वायुभूतः खमूर्तिमान् ।

ब्रह्मयज्ञानुष्ठानेतिकर्तव्यतायां बृहल्लिङ्गपुराणम् [ लिङ्गपु, पूर्व २६, २९-३० ]

[3]एवमाचम्य चास्तीर्य[3] दर्भपिञ्जलमात्मनः ।
कृत्वा पाणितले धीमानात्मनो दक्षिणोत्तरम् ॥

---

१ क—च—सर्वक्रतुफलैः ।

२ मुद्रित-योगियाज्ञवल्क्यपाठस्तु—ऋचं यजुर्वा साम वा गाथां ह्यथमथापि वा ॥

३ ङ—ज—झ—एवमास्तीर्य चाचम्य ।

हेमाङ्गुलीयसंयुक्तो ब्रह्मबन्धयुतोऽपि[1] वा ।
विधिवद् ब्रह्मयज्ञन्तु [2]कुर्यात् सूक्ती[2] समाहितः ॥

तथा शौनकः ( आश्व गृ ३।२।२ )[3]

प्राग्वोदग्वा ग्रामान्निष्क्रम्याप आप्लुत्य यज्ञोपवीत्यक्लिन्नवासा दर्भाणां महदुपस्तीर्य [4]प्राक्कूलानां तेषु[4] प्राङ्मुख उपविश्योपस्थं कृत्वा दक्षिणोत्तरौ पाणी सन्धाय पवित्रवन्तौ द्यावापृथिव्योः सन्धिमीक्षमाणः[5] संमील्य[6] वा यथा[7] युक्तमात्मानं मन्येत तथा युक्तोऽधीयीत स्वाध्यायम् । इति ।

[8]यत् पुनरत्रापि दर्भाः पवित्रमित्युक्तमिति[8] ( छ प २, १, २ ) स्मृति-दर्शनात् पवित्रपदं दर्भमात्रं वदतीति ये केचिद्वदन्ति तच्छिष्टाचारविरुद्धम् ।[9] यतः सर्व एवानुष्ठातारः प्रादेशमात्रत्वादिलक्षणयुक्तमेव पवित्रं गृहीत्वा ब्रह्मयज्ञं कुर्वन्ति । पवित्रपदञ्च तादृशमेव[10] मुख्यम्[11] । तथा दक्षिणोत्तरौ पाणी सन्धायेति पाणी इति द्विवचनेनैव दक्षिणवामहस्तयोरुपादाने सिद्धे दक्षिणोत्तरावित्यभि-धानाद् दक्षिणो हस्त उत्तरपरिभावो ययोर्हस्तयोस्तौ दक्षिणोत्तराविति बोद्धव्यम् । एवं सति प्राङ्मुखः प्रागग्रेषु कुशेषूपविश्य वामहस्ततले कुशपवित्रे कृत्वा तदुपरि दक्षिणहस्तमधोमुखं दत्त्वा[12] ओङ्कारपूर्विकां गायत्रीं पठित्वा वेदादींश्चतुरो मन्त्रान् पठेत् ।

तत्र ऋग्वेदादिमन्त्रस्य मधुच्छन्दा ऋषिरग्निर्देवता गायत्रीच्छन्दः स्वाध्याये विनियोगः ।

**अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् ।**
**होतारं रत्नधातमम् ॥ ४४**

[ ऋ स १, १, १ ]

---

१ क—ख—ञ—ब्रह्मबन्धयुतौ° ।
घ—त—न—व—ब्रह्मरन्ध्रकृतौ° ।

२ क—त—न—कुर्यान्मन्त्री । छ—कुर्यान्मैत्री ।

३ सूत्रमेतदाश्वलायनगृह्यसूत्रात् किञ्चिद्वर्जं गृहीत्वा शौनकनाम्ना समुद्धृतम् ।

४ क—प्राक् प्रागग्रेषु कुशेषु । घ—प्राक् प्राक् कुशानां तेषु । त—न—व—प्रागग्रेषु कुशेषु ।

५ पाठोऽयमत्र शोधितोऽस्ति । क— सन्वीक्ष्यमाणः । ङ—ज—झ—सन्धिवीक्ष्यमाणः । घ—सन्धिक्षमाणः । त—न—व—संवीक्षमाणः ।

६ क—संमन्त्र । ङ—ज—झ—संमील्य चक्षुषी ।

७ आश्वलायनगृह्यसूत्रे तु—यथा वा युक्तमिति ।

८ ङ—ज—झ—पुस्तकेषु नास्ति ।

९ कृत्यकल्पतरौ ब्रह्मचारिकाण्डे ( ६५ पृः ) लक्ष्मीधरेणोक्तम्—'दर्भाः पवित्रमित्युक्तमतः सन्ध्यादिकर्मसु—अतः सन्ध्यादिकर्मसु दर्भमात्रं पवित्रम्' इति । अत्र हलायुधेन 'ये केचिद्व-दन्ती'त्यनेन लक्ष्मीधरोक्तिरेवोद्दिष्टा भवेद्धा ।

१० क—तादृश एव ।

११ ङ—छ—ज—झ—युक्तम् ।

१२ त—न- व—कृत्वा ।

अग्निं देवम् ईळे स्तौमि। किम्भूतम्—पुरोहितं पुरः प्रथमतो हितम् आहितमर्पितमिति यावत्। पुनः किम्भूतम्—यज्ञस्य ऋत्विजम्। यजमानानुरोधेन यागकारो ऋत्विक्। अग्निश्च यजमानाभ्युदयाय यागकारो ऋत्विगुच्यते। अपि किम्भूतम्—होतारं होमस्य प्रधानसाधनत्वेन कर्तृभूतम्। पुनः किम्भूतम्—रत्नधातमं रत्नं सुवर्णादि तद्दधातीति रत्नधाः। अतिशयेन रत्नधा रत्नधातमस्तम्। तदयं वाक्यार्थः—प्रथमतोऽर्पितं[१] धनदातारम् अग्निं स्तौमि ततोऽयमग्निर्मह्यं धनं ददात्विति।

यजुर्वेदादिमन्त्रस्य परमेष्ठी ऋषिः शाखावत्सगावो देवताः। यजुष्ट्वाच्छन्दो नास्ति। स्वाध्याये शाखाच्छेदनसन्नमनवत्सापकरणेषु शाखया गोस्पर्शने च विनियोगः।

**इषे त्वोर्जे त्वा वायव स्थ देवो वः सविता।**
**प्रार्पयतु श्रेष्ठतमाय कर्मणे ॥ ४५**

[ वा स १, १। का स १, १। तै स १, १, १, १ ]

इषे त्वेति द्विपदस्त्र्यक्षरो मन्त्रः। दैव्यनुष्टुप्। हे शाखे त्वा त्वाम् इषे वृष्टेय छिनद्मीति।

ऊर्जे त्वेति द्विपदस्त्र्यक्षरो मन्त्रः। दैव्यनुष्टुप्। हे शाखे ऊर्जे रसाय त्वा संनमयामि। अत्र मन्त्रद्वये छिनद्मि संनमयामीति यथाक्रमं क्रियापदमध्याहरणीयम्।

वायव स्थ इति द्विपदश्चतुरक्षरो मन्त्रः। हे वत्साः वायवः स्थ यथा वायुर्वृष्ट्यादिद्वारेण जगतामाप्यायकस्तथा यूयं धेनुप्रस्नवणद्वारेण[२] यज्ञनिष्पत्तिकारिणः। यज्ञाच्च वृष्टिरिति परम्परया जगतामाप्यायकाः स्थ भवथ।

देवो वः सवितेत्याद्यवशिष्टाक्षरात्मकोऽपरो मन्त्रः। देवो दानादिगुणयुक्तः। वः युष्मान्। कर्मणे यज्ञाय। प्रार्पयतु। किम्भूतो देवः—सविता जगतां प्रसविता। किम्भूताय कर्मणे—श्रेष्ठतमाय अतिश्रेष्ठाय। अत्र इषे इति—इषु इच्छायामित्यस्मात् सम्पदादित्वात् क्विप् प्रत्ययस्तेन इषशब्दस्य हलन्तस्य व्युत्पत्तिः[३]। अनेन च सर्वेषामिष्यमाणतया वृष्टिरुच्यते। यथा श्रुतिः ( श ब्रा १, ७, १, २ )—वृष्टेय तदाह यदाहेषे त्वेति। वृष्टिः सर्वेर्णेष्यते। इषे इति

---

१ न—भा—प्रथममर्पितं। ३ ङ—पुस्तकेऽत्र 'सर्वैरेवेष्यत इति इत्यधिकम्।
२ ङ—अ—भा—धेनुप्रसुतिद्वारेण। उवटभाष्ये प्रस्नुतिद्वारेण।

तादर्थ्ये चतुर्थी। त्वा इति द्वितीयैकवचनान्तयुष्मच्छब्दस्य स्थाने त्वामौ द्वितीयाया इति (पा ८, १, २३) त्वादेशः। वृष्ट्यर्थं त्वां शाखां छिनद्मीत्यर्थः। ऊर्जे इति ऊर्ज बलप्राणधारणयोरित्यस्मात् क्विप्प्रत्ययेनोर्जे इति हलन्तपदव्युत्पत्तिः। तादर्थ्ये चतुर्थी। अनेन जगतां बलहेतुत्वाद्रसोऽभिधीयते। ऊर्जे रसाय त्वां संनमयामीत्यर्थः। श्रेष्ठतमाय कर्मण इति यज्ञोऽभिधीयते। अत्र च श्रुतिः प्रमाणम्। यदाह (श ब्रा १, ७, १, ५)—यज्ञो वै श्रेष्ठतमं कर्मेति। व इति द्वितीयाबहुवचनान्तयुष्मच्छब्दस्य स्थाने बहुवचनस्य वस्नसाविति (पा ८, १, २१) वसादेशः। अग्निहोत्रकर्तव्यदर्शेष्टौ सान्नाय्यस्योत्पादने एभिश्चतुर्भिर्मन्त्रैः शाखाच्छेदने शाखासन्नमने शाखया वत्सापकरणे धेनूपस्पर्शने च शाखावत्सधेनवः प्रार्थ्यन्त इति वाक्यार्थः।[1]

सामवेदादिमन्त्रस्य गोतमऋषिर्गायत्रीच्छन्दोऽग्निर्देवता स्वाध्याये[2] विनियोगः।

अग्न आयाहि वीतये गृणानो हव्यदातये।
निहोता सत्सि बर्हिषि ॥ ४६

[ऋ उ ६, १६, १० । सा स १, १]

हे अग्ने आयाहि आगच्छ अत्र मम कर्मणि सन्निहितो भवेत्यर्थः। किमर्थम्—वीतये खादनाय। अस्मद्दातव्यस्यान्नस्य खादनायेत्यर्थः। किम्भूतस्त्वम्—गृणानः स्तूयमानः। किमर्थम्—हव्यमन्नं तस्य दातये दानाय। न केवलम् आयाहि अपितु बर्हिषि आस्तृतकुशे सत्सि सीद स्थितो भवेत्यर्थः। किम्भूतस्त्वम्—निहोता निरवशेषहोता साङ्गहोमस्य प्रधानसाधनतया कर्तृभूत इत्यर्थः। हे अग्ने यज्ञकर्मणि देयस्य[3] हविषोऽदनाय आगता बर्हिषि निषीदेत्यग्नौ प्रार्थना वाक्यार्थः। अत्र वीतय इति वी गतिप्रजनकान्त्यसनखादनेष्वित्यस्माद्धातोः क्तिन्प्रत्यये रूपम्।

अथर्ववेदादिमन्त्रस्य दध्यङ्ङाथर्वण ऋषिरापो देवता गायत्रीच्छन्दः स्वाध्याये शान्तिकरणे च विनियोगः।

---

१ इतः परं क—ज—भ—पुस्तकेषु इषे त्वेत्यादिः संहितापठितमन्त्रस्योत्तरार्धगताप्यायध्वमित्यर्धांशस्य उवटकृता व्याख्या सन्निवेशितोपलभ्यते।

२ क—त—ब—ब्रह्मयज्ञजपे।

३ क—ज—भ—देवस्य।

शन्नो देवीरभिष्टय आपो भवन्तु पीतये ।
शंयोरभि स्रवन्तु नः ॥ ४७

[ ऋ स १०, ९, ४ । °रभिष्टये शन्नो भवन्तु । वा स, का स ३६. १२ । अ स ( पैप्पलाद शाखा १, १, १ ), ( शौनक शाखा १, ६, १ ) ]

[ मन्त्रोऽयं स्नान-प्रकरणे व्याख्यातः । ]

एतद्वेदादिमन्त्रचतुष्टयं पठित्वा इच्छातोऽपरमपि वेदवेदाङ्गपुराणेतिहास-स्मृत्यादिकं यथाशक्ति पठेत् । इति ब्रह्मयज्ञं कृत्वा तर्पणं कुर्यात् ।

## अथ तर्पणम्

तत्र तर्पणविधौ शातातपः

तर्पणन्तु शुचिः कुर्यात् प्रत्यहं स्नातको द्विजः ।
देवेभ्यश्च ऋषिभ्यश्च पितृभ्यश्च यथाक्रमम् ॥

मनुशातातपयाज्ञवल्क्याः [ मनु ३, २८३ । योगिया ७, ८१ ]

यदेव तर्पयत्यद्भिः पितॄन् स्नात्वा द्विजोत्तमः ।
तेनैव सर्वमाप्नोति[1] पितृयज्ञक्रियाफलम् ॥

योगियाज्ञवल्क्यः [ ७, ८८ ]

नास्तिक्यभावाद् यश्चापि न तर्पयति वै सुतः ।
पिबन्ति देहनिःस्रावं पितरोऽस्य जलार्थिनः ॥

तर्पण इत्यनुवृत्तौ छन्दोगपरिशिष्टे कात्यायनः [ २, २, १० ]

तस्मात् सदैव कर्तव्यमकुर्वन् महतैनसा ।
युज्यते ब्राह्मणः कुर्वन् विश्वमेतद्[2] बिभर्ति हि ॥

विष्णुः [ ६४, २४-२५ ]

स्नातश्चार्द्रवासा देवपितृतर्पणमम्भःस्थ एव कुर्यात् । परिवर्तितवासाश्चेत्तीर्थ-तीरमुत्तीर्य ।

योगियाज्ञवल्क्यः [ ७, ४८ ]

यत्राशुचि स्थलं वा स्यादुदके देवताः पितॄन् ।
तर्पयेत्तु[3] यथाकाममप्सु सर्वं प्रतिष्ठितम् ॥[4]

---

१ कृत्स्नमाप्नोतीति मनुसंहिताया पाठः ।

२ त—न—व—स त्रीन् लोकान् ।

३ का—च—सन्तर्पयेद ।

४ वचनमिदं स्मृतिचन्द्रिकायां ( आह्निक ५१३ ) पराशरमाधवे ( १, १, ३५३ पृ ) संस्काररत्नमालायां ( ११८८ पृ ) च विष्णुनाप्युद्धृतम् ।

सुमन्तुः जलार्द्रवासाः स्थलगो यः प्रदद्याज्जलाञ्जलिम् ।
वस्त्रनिश्चोतनं प्रेता अपवार्य पिबन्ति हि ॥

शङ्खः[1] नोदकेषु न पात्रेषु न क्रुद्धो नैकपाणिना ।
नोपतिष्ठति तत्तोयं यन्न भूमौ प्रदीयते ॥

शङ्खलिखितौ[2] [ काणि—श-लि ११८ ]

नेष्टकाचिते पितॄंस्तर्पयेत् । वापीतड़ागोदपानेषु सप्त पञ्च त्रीन् वा पिण्डानुद्धृत्य तर्पयेत् ।

अयमत्राभिप्रायः—स्नानार्थिना स्नानकरणपूर्वकाल एव पिण्डाः समुद्धरणीयाः । स्नानाशक्तेन तर्पणमात्रार्थिनाऽपि तान् पिण्डानुद्धृत्य तर्पणीयम् ।

मार्कण्डेयपुराणम् [ ३२, १६ ]

यन्न सर्वाय[3] चोत्सृष्टं यच्चाभोज्यनिपानजम् ।
तद्वर्ज्यं सलिलं तात[4] सदैव पितृकर्मणि ॥

सुमन्तुः आकाशे तु क्षिपेद्वारि जलस्थो दक्षिणामुखः ।
पितॄणां स्थानमाकाशं दक्षिणा दिक् तथैव च ॥

यमः त्रींस्त्रीन् जलाञ्जलीन् दद्यादुच्चैरुच्चतरं ततः ।
गोशृङ्गमात्रमुद्धृत्य जलमध्ये जलं क्षिपेत् ॥

शङ्खः [ १२, १३-१४ ]

विना रूप्यसुवर्णेन विना ताम्रतिलैस्तथा ।
विना दर्भैश्च मन्त्रैश्च पितॄणां नोपतिष्ठते ॥
सौवर्णराजताभ्यान्तु खाड्गेनौदुम्बरेण च ।
दत्तमक्षय्यतां याति पितॄणां तु तिलोदकम् ॥

मरीचिः [5]तिलानामप्यभावे तु सुवर्णरजतान्वितम् ।
तदभावान्निषिञ्चेत्तु दर्भैर्मन्त्रेण वा पुनः ॥[5]

---

१ च—शङ्ख इति नास्ति । वीरमित्रोदये ( आह्निक २१९ ) शङ्खस्य नाम्नैव वचनमिदमुद्धृतं परं स्मृतिचन्द्रिकायां ( आह्निक ५१२ ) गोविलस्य पराशरमाधवे ( १, १, २५२ पृ ) संस्काररत्नमालायां ( ११८७ पृ ) च गोभिलस्य नाम्ना संस्कारगणपतौ ( ८०१ पृ ) पुनर्याज्ञवल्क्यस्य ।

२ क—शङ्ख-लिखिताविति नास्ति ।
च—शङ्ख इत्येतावन्मात्रमस्ति ।

३ मुद्रित-मार्क—सर्वाप° । वीरमि (आह्नि १७०) सर्वार्थमुत्° । आदर्शेषु—सर्वाय ।

४ स—न—व—तत्तत् ।

५ वचनमिदं योगियाज्ञवल्क्यस्मृतौ ( ७, ७७ ) दृश्यते । स्मृतिचन्द्रिकायां ( आह्निक ५१४ पृ ) मरीचेर्योगियाज्ञवल्क्यस्य च नाम्नोद्धृतमिदम् । अनन्तरवर्ति श्लोकयन्तु कृत्यकल्पतरौ (नियतकाल १२२ पृ) निबन्धान्तरेषु च मरीचिनाम्नैवोद्धृतम् ।

रजते मनसा यायात् सुवर्णं हस्तनिर्गतम् ।
तिलेषु तत्क्षणाद् गच्छेत्ताम्रे तु द्विमूहूर्ततः ॥
दर्भे सप्तमूहूर्तेन मन्त्रयुक्तं तदक्षयम् ॥

शङ्खः [ १३, १५ ]

हिमेन[1] सह यद्दत्तं क्षीरेण मधुना सह ।
तदप्यक्षयतां याति पितृणान्तु तिलोदकम्[2] ॥

तथा [ १३, ८ ] सौवर्णेन पात्रेण राजतेनौदुम्बरेण खड्गपात्रेण वा । शङ्खुना वोदकं पितृतीर्थं स्पृशन् दद्यात् ।[3]

अत्र शङ्खुनेति खड्गपात्रघटनाशक्तौ[4] । अविकृतेनाप्रच्युतेन[5] खड्गगडुकेनेत्यर्थः ।[6]

योगियाज्ञवल्क्यः [ ७, १३-१४ ]

यद्युद्धृतं प्रसिञ्चेत्तु तिलान् संमिश्रयेज्जले ।
अतोऽन्यथा तु सव्येन तिला ग्राह्या विचक्षणैः ॥
दक्षिणे पितृतीर्थेन जलं सिञ्चेद् यथाविधि ।
दक्षिणेनैव गृह्णीयात् पितृतीर्थसमीपतः ॥

अत्र दक्षिणेनैव गृह्णीयादिति जलमित्यर्थः ।

तथा[7] शुक्लैस्तु तर्पयेद्देवान्मनुष्यान् शबलैस्तिलैः ।
पितॄंस्तु तर्पयेत् कृष्णैस्तर्पयन् सर्वदा द्विजः ॥

तथा देवतर्पणविधौ [ योगिया ७, ६७ ]

ब्रह्माद्यानुपवीती तु देवतीर्थेन तर्पयेत् ।
निवीती कायतीर्थेन मनुष्यान् सनकादिकान् ॥

अत्र कायतीर्थं प्राजापत्यम् ।

मनुः [२, ६३] उद्धृते दक्षिणे पाणावुपवीत्युच्यते द्विजः ।
सव्येन प्राचीनावीती निवीती कण्ठसज्जने ॥

---

१ क—त—हैमेन । मुद्रितशङ्खस्मृतौ—हिमा तु । संस्काररत्नमालायां ( ११८८ पृ ) चतुर्वर्गचिन्तामणौ च हिमेन । हिमं कर्पूरं चन्दनं वेति ( परिशेष, श्राद्ध ९१९ ) ।

२ भ—तिलोदकैः ।

३ छ—ज—भ—दद्यादिति नास्ति ।

४ छ—ज—भ—°पात्रगडुनाशक्तौ ।

५ ज—अविकृतेनाप्रयुतेन । भ—नास्ति ।

६ घ—व—खड्गगुणकेने° । क—ख—ङ—खड्गगुरुकेने । प—खड्गशूलकेन ।

७ वचनमिदं मुद्रित-योगियाज्ञवल्क्ये नोपलभ्यते । संस्काररत्नमालायां ( ११९० पृ ) पुनर्देवलनाम्नेदमुद्धृतम् ।

देवादितीर्थान्याह याज्ञवल्क्यः [ १, १९ ]

> कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च ।
> प्रजापतिपितृब्राह्मदेवतीर्थान्यनुक्रमात् ॥

देवादिकर्मसु कुशव्यवस्थायां[1] पिण्डपितृयज्ञब्राह्मणम् [ श ब्रा २, ४, २, १३ ]

> [2]अग्रमिव वै देवानां मध्यमिव मनुष्याणां मूलमिव पितॄणामिति ।

छन्दोगपरिशिष्टम् [ २, २, २ ]

> [3]यवाद्भिस्तर्पयेद्देवान् सतिलाद्भिः पितॄनपि ॥[4]

ततः सन्तर्पयेदित्यधिकारे योगियाज्ञवल्क्यः [ ७, ६८-६९ ]

> अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु ।
> तृप्यतामिति सेक्तव्यं नाम्ना तु प्रणवादिना ॥
> आवाह्य पूर्ववन्मन्त्रैरास्तीर्य च कुशाञ् शुभान् ।
> प्रागग्रेषु सुरान् सम्यग् दक्षिणाग्रेषु वै पितॄन् ॥

ब्रह्मपुराणम्— खड्गास्थिपात्रे कर्तव्यं पितृदैवततर्पणम् ।

योगियाज्ञवल्क्यः [ ७, ७१-७२ ]

> सव्यं जानु ततोऽन्वाच्य[5] पाणिभ्यां दक्षिणामुखः ।
> तल्लिङ्गैस्तर्पयेन्मन्त्रैः सर्वान् पितृगणांस्तथा[6] ॥
> मातामहांश्च सततं श्रद्धया तर्पयेद्बुधः ।
> प्राचीनावीती उदकं प्रसिञ्चेद् वै तिलान्वितम् ॥

अत्र आवाह्य पूर्ववन्मन्त्रैरिति याज्ञवल्क्यसंहिताश्राद्धप्रकरणोक्तैः ( १।२२८, २३ ) मन्त्रैः विश्वे देवास आगतेति विश्वे देवाः शृणुतेममिति देवान् उशन्तस्त्वे-

---

१ क—च—पुस्तकयोः कुशेति पदं नास्ति । ख—ब—कर्मव्यवस्थायां ।

२ छ—प—पुस्तकयोरितः प्राक् 'अग्रमेव देवानां मध्यमेव मनुष्याणां मूलमेव पितॄणामिति तैत्तिरीयं प्रमाणम् । वाजसनेयम्'—इत्यधिकम् । प्रकृतं विषयमधिकृत्य तैत्तिरीयब्राह्मणन्वित्थमुपलभ्यते ( १, ६, ८, ६ ) यत् परुषि दिनं तद्देवानां यदन्तरा तन्मनुष्याणां यत् समूलं तत् पितॄणामिति ।

३ ङ—व—यावाद्भिः । भ—ख—यावद्भिः ।

४ इतः परं न—पुस्तके 'तत्र तिलसंख्यामाह देवलः—तर्पणे पितृयज्ञादौ तिलभागः समो भवेत् । दशभिश्च तिलैस्तेन पितॄन् सन्तर्पयेत् सदा ॥ तिलैः सप्ताष्टभिर्वापि पितॄणां तृप्तिरुत्तमा । अभिस्तम्भभयादेव न चेच्छन्नतिविस्तरम् । विशेषात् कुशसंसर्गात् पायसादधिकं भवेत् ॥' इत्यधिकम् ।

५ क—च—ऽन्वस्य । ङ—न्याप्य । त—व—स्थाप्य । न—नाम्य ।

६ क—पितृगणानपि ।

त्यायन्तु नः पितर इति पितृनावाह्येत्यर्थः। तथा तल्लिङ्गैरिति ऊर्जं वहन्ती-त्यादिभिः पितृतृप्तिप्रकाशकैरित्यर्थः[1]।

देवतर्पणानन्तरं पद्मपुराणम् [ सृष्टि २०, १६२-१६३ ]

कृतोपवीती देवेभ्यो निवीती च भवेत्ततः।
मनुष्यांस्तर्पयेद्भक्त्या ऋषिपुत्रानृषींस्तथा॥
सनकश्च सनन्दश्च तृतीयश्च सनातनः।
कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा॥

इत्यभिधाय [ पद्मपु २०, १६५ ]

देवान् ब्रह्मऋषीन् सर्वांस्तर्पयेदक्षतोदकैः।

शात्यायनः

वसून् रुद्रांस्तथादित्यानृषींश्चैव यथाक्रमम्।
[2]पूर्वमुखस्थितो विप्रो[2] जलमध्ये तु तर्पयेत्॥

वायुपुराणम् ऋजून् सव्येन वै कृत्वा[3] दैवे दर्भान् विचक्षणः।
दद्यात्तु द्विगुणान् पित्रे अपसव्येन पार्थिव॥

लघुविष्णुः निवीती हन्तकारेण मनुष्यांस्तर्पयेदथ।
कुशस्य मध्यदेशेन नृतीर्थेन[4] ह्युदङ्मुखः॥

गोभिलसुतसंहिता[5]

एकैकमञ्जलिं देवा द्वौ द्वौ तु सनकादयः।
अर्हन्ति पितरस्त्रीं स्त्रीन् स्त्रियश्चैकैकमञ्जलिम्॥

हारीतः—देवांश्छन्दांसि वेदानृषीन् पुराणान् पुराणाचार्यान् गन्धर्वा-नितराचार्यान् मनुष्यान् कलाः काष्ठा निमिषान् मुहूर्तानहोरात्रानर्धमासान् मासा-नृतून् संवत्सरान् सावयवान्।

---

१ ख—°तृप्तिकर्त्तिकैरित्यर्थः। घ—°तृप्ति-प्रकाशैः। ङ—झ—°तृप्तिप्रकाशकरैः।

२ क—ज—सुपूर्वाभिमुखः स्थित्वा। त—न—व—पूर्वाभिमुखस्तथा। झ—पूर्वमुखस्थितो धीरो।

३ त—न—व—हुत्वा।

४ झ—ऋषीतीर्थेन। त—न—व—तृतीयेन। प—धातृतीर्थे।

५ क—च—गोभिलः। छ—गोभिलसुतसंहि-तायाम। ङ—गोभिलसुतसूतसंहितायाम्। ज—किमपि नास्ति। झ—गोभिलसुत-संहितायाम्।

वचनमिदं पराशरमाधवीये (१ख, ३५१ पृः) स्मृतिचन्द्रिकायां (आ ५११ पृः) वीरमित्रोदये (आ ३४४ पृः) संस्काररत्नमालायां (११८५ पृः) संस्कारगणपतौ (८०३ पृ) चोद्धृतं व्यासस्य नाम्ना रघुनन्दनस्याह्निकतत्त्वे (तर्पण-प्रकरणे) मुनव्यास-गोभिलपुत्रयोः।

मनुष्यानाह योगियाज्ञवल्क्यः [ ७, ६५-६६ ]

सनकश्च सनन्दश्च तृतीयश्च सनातनः ।
कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा ॥
एते ब्रह्मसुताः सप्त मनुष्याः परिकीर्तिताः ॥

तथा च [ ७, ७८-९८ ]

कव्यवाडनलं[1] सोमं यममर्यमणं तथा ।
अग्निष्वात्तान् सोमपांश्च तथा बर्हिषदः पितॄन् ॥
यदि स्याज्जीवत्पितृक एतान् दिव्यान् पितॄं स्तथा ।
येभ्यो वापि पिता दद्यात्तेभ्यो वापि प्रदापयेत् ॥

हारीतः—नाराशर्यः पाराशर्यः शुकः शाकल्यो याज्ञवल्क्यो जातूकर्ण्यः कात्यायन आपस्तम्बो बौधायनो वाचक्नवी[2] वैजवापी [3]हूहूर्लौगाक्षिर्मैत्रायणि-रैन्द्रायणिरित्येतानृषीन् ।

कात्यायनः [ स्नानकल्पसूत्र ३, ६-८ ]

यमांश्चैके

यमाय धर्मराजाय मृत्यवे चान्तकाय च ।
वैवस्वताय कालाय सर्वभूतक्षयाय च ॥
औदुम्बराय दध्नाय नीलाय परमेष्ठिने ।
वृकोदराय चित्राय चित्रगुप्ताय वै नमः ॥
एकैकस्य तिलैर्मिश्रांस्त्रीं स्त्रीन्दद्याज्जलाञ्जलीन् ।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ॥

योगियाज्ञवल्क्यः [ ७, ८२-८७ ]

एतांश्च वक्ष्यमाणांश्च प्रमीतपितृको द्विजः ।
तथाचार्यान् पितॄन स्वांश्च पितृप्रभृतिनामतः ।
मन्त्रैश्च देयमुदकं पितॄणां प्रीतिवर्धनम् ।

---

१ क—घ—च—त—ब—कव्यवालं नल ।
ज—झ—न—कव्यवाड़ं नलं ।
अत्र कव्यवाडनल एकैव देवतेति कात्यायनीक्त-त्रिकण्डिकासूत्रीयतर्पणप्रकरणभाष्ये हरिहरेणेत्थं सिद्धान्तितम्—अत्र केचित् कव्यवाहमनलमिति द्वे देवते मन्यन्ते । तदयुक्तम् । हव्यवाहनो वै देवानां कव्यवाहनः पितॄणा-मिति श्रुतेः । कव्यवाड्गुणविशिष्टोऽनलः पितॄणामन्तर्गत इति कव्यडनल एकैव देवता ।

२ क—वाचकुची । छ—ज—झ—वाचकूटी ।
त—न—व—वाचंयमी ।

३ छ—हूहूर्लौकाक्षि° ।

उदीरतामङ्गिरस आयन्त्वित्यूर्जमित्यपि ।
पितृभ्य इति ये चे ह मधुवाता इति तृचम् ॥
पितॄन् ध्यायन् प्रसिञ्चेद् जपन्मन्त्रान् यथाक्रमम् ।
तृप्यध्वमिति च त्रिर्वै ततः प्राञ्जलिरानतः ॥
नमो व इति जप्त्वा वै ततो मातामहान् सखीन् ।
तर्पयेदानृशंस्यार्थं धर्मं परममास्थितः ॥
[1]माता मातृष्वसा[1] चैव [2]दुहिता च स्नुषा तथा ।[2]
[3]शिष्यर्त्विग्बान्धवाश्चैव ज्ञातयो गुरवस्तथा ॥[3]
नामगोत्रस्वधाकारैस्तर्प्याः सुरनुपूर्वशः ॥

जातूकर्ण्यः—प्रमीतपितृकस्तु उशन्तस्त्वेत्यावाह्य नामगोत्रमुच्चार्य[4] यावतां[5] पितृकार्यमसाविवत्त उदकमिति पितृपितामहप्रपितामहानेकैकस्मै त्रीं स्त्रीन् जलाञ्जलीन् दद्यात् ।

तथाह हारीतः—नामगोत्रयोरूर्जं वहन्तीरिति प्रत्यामन्त्र्य स्नानवस्त्रमपोह्य स्वांश्च पितॄंस्तर्पयेदिति ।

अथ तर्पणानुष्ठानम्

तत्र प्राङ्मुख उपवीत्युपविश्य प्रागग्रान् कुशानास्तीर्य दक्षिणहस्तेन यवान् गृहीत्वा देवानावाहयेत् ।

गृत्समद ऋषिर्विश्वे देवा देवता गायत्रीच्छन्दोऽग्निष्टोमे वैश्वदेवग्रह-ग्रहणे[6] विनियोगः ।

**विश्वे देवास आगत शृणुता म इमं हवम् ।**
**एदं बर्हिर्निषीदत ॥ ४८**

[ ऋ स २, ४१, १३ । वा स, का स ७, ३४ ]

हे विश्वे देवासः यूयं मे मम इमं हवम् आह्वानं शृणुत । श्रुत्वा च आगत आगच्छत । आगत्य च इदं बर्हिः कुशम् आनिषीदत आसनार्थमुपकल्पिते बर्हिषि उपविष्टा भवतेत्यर्थः । अत्र विश्वे देवास इति सम्बोधने प्रथमाबहुवचने

---

१ क—मातामहः स्वसा ।
२ ङ—ज—झ—दुहिता च स्वसा तथा ।
त—न—व—मातुलानी पितृष्वसा ।
३ त—न—व—दुहिता च सुता चैव शिष्यर्त्विग्-ज्ञातिबान्धवान् ।
४ नामगोत्रे समुच्चार्येति शुद्धितत्त्वे रघुनन्दनधृतः पाठः ।
५ क—ख—घ—ङ—यावता ।
६ क—त—न—वैश्वदेवग्रहणे । ङ—ज—झ—वैश्वदेवाग्रायणग्रहणे ।

आज्जसेरसुगित्यसुगागमेन ( पा ७, १, ५० ) रूपम् । शृणुता इत्यत्र [1]अन्येषामपि दृश्यते इति ( पा ६, ३, १३७ ) दीर्घः[1] । आगतेति आगच्छतेत्यत्र वर्णागमो वर्णविपर्ययश्चेति छकारलोपः । आनिषीदतेति छन्दसि परेऽपि व्यवहिताश्चेति पाणिनिस्मरणात्[2] (पा १, ४, ८१-८२) व्यवहितेनाप्याङा निषीदतेत्येतस्य सम्बन्धः । आ इदं बर्हिरिति आङः कर्मप्रवचनीयत्वेन कर्मप्रवचनीययुक्ते द्वितीयेति ( पा २, ३, ८ ) सप्तम्यर्थे द्वितीया ।

[3]एवं मन्त्रं पठित्वा[3] यवान् विकीर्य बद्धाञ्जलिः पठेत् ।

सुहोत्र ऋषिर्विश्वे देवा देवता त्रिष्टुप् छन्दः सर्वमेधे वैश्वदेवग्रहग्रहणे[4] विनियोगः ।

**विश्वे देवाः शृणुतेमं हवं मे ये अन्तरिक्षे य उप द्यवि ष्ठ ।**
**ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन् बर्हिषि मादयध्वम् ॥४८**

[ ऋ स ६, ५२, १३ । मा स ३३, ५३ । का स ३२, ५३ ]

हे विश्वे देवाः यूयं मे मम इमं हवम् आह्वानं शृणुत । किम्भूता यूयम्—ये अन्तरिक्षे आकाशे स्थ तिष्ठथ । ये उप समीपे पृथिव्यां द्यवि स्वर्गे द्वयोरपि स्थ इत्यनेनैव सम्बन्धः । एतदुक्तं भवति—भूमावाकाशे स्वर्गे च स्थिता ये विश्वे देवाः । के ते—ये अग्निजिह्वाः अग्निर्जिह्वा हविर्भोजनसाधनं येषाम् । उत वा अपि वा ये यजत्राः यजन्तं श्राद्धकारिणं त्रायन्त इति यजत्राः । पुरूरवोमाद्रवःप्रभृतयः । ते यूयमस्मिन् महत्ते बर्हिषि कुशे आसद्य उपविश्य मादयध्वम् मदो हर्षस्तद्युक्ता भवत । मादयध्वमिति स्वार्थे णिच् । श्राद्धे च देवा रक्षका इत्यत्र

तेषामारक्षभूतं तु देवं पूर्वं नियोजयेत्

इति मनुः [ ३, २०४ ] प्रमाणम् ।

एवं मन्त्रं पठित्वा प्रागग्रान् कुशानास्तीर्य तदुपरि वामहस्तान्वारब्ध-दक्षिणहस्तेन ऋजुकुशाग्रेण देवतीर्थेन यवोदकेन [5]देवाश्छन्दांसि वेदा[6] ऋषयः पुराणाः पुराणाचार्या गन्धर्वाः इतराचार्या मनुष्याः कलाः काष्ठा निमिषा मुहूर्ता

---

१ का—ङ—च—छ—ज—झ—न—प—तस्य तादिति तकारस्य तादेशः । छान्दोग्यमन्त्रभाष्ये ( ८, १२ ) गुणविष्णुस्तु—ऋचि तुनुघमक्षुतङ्-कुत्रोरुष्याणामिति दीर्घः इत्याह ।

२ छ—ञ—झ— अरणसत्त्वात् ।

३ त—न—व—एवं मन्त्रयित् ।

४ क—वैश्वदेवग्रहणे ।

५ त—न—व—वेदा ।

६ त—न—व—देवा ।

अहोरात्रा अर्धमासा मासा ऋतवः संवत्सराः सावयवा इति प्रत्येकं तृप्यतामिति क्रियापदं दत्त्वा

देवास्तृप्यन्ताम् छन्दांसि तृप्यन्ताम्

इत्यादिवाक्येन हारीतोक्तमष्टादशदेवानां[1] तर्पणं कुर्यात्।

ततो निवीती उदङ्मुखः कुशमध्येन मनुष्यतीर्थेन शबलतिलेन[2] यवोदकेन वा उत्तराग्रकुशोपरि सनकः सनन्दः सनातनः कपिलः आसुरिः बोढुः। पञ्चशिख इत्यत्र प्रत्येकं तृप्यतामिति क्रियापदं दत्त्वा

सनकस्तृप्यताम्

इत्यादिवाक्येन योगियाज्ञवल्क्योक्तसप्तमनुष्यतर्पणं कुर्यात्।

ततः प्राचीनावीती दक्षिणामुखो भुग्नकुशेन पितृतीर्थेन तिलोदकेन दक्षिणाग्रकुशोपरि सम्भवे सति[3] खड्गपात्रोपरि

[4]कव्यवाडनलस्तृप्यताम् सोमस्तृप्यताम् यमस्तृप्यताम् अर्यमा तृप्यताम्

अग्निष्वात्तास्तृप्यन्ताम् सोमपास्तृप्यन्ताम् बर्हिषदस्तृप्यन्ताम्

इति योगियाज्ञवल्क्योक्तसप्तदिव्यपितृतर्पणं कुर्यात्।

ततोऽनेनैव विधानेन नाराशर्यः[5] पाराशर्यः शुकः शाकल्यः याज्ञवल्क्यः जातुकर्ण्यः कात्यायनः आपस्तम्बः बौधायनः वाचक्नवो[6] वैजवापी[7] हूहूः लौगाक्षिः मैत्रायणिः ऐन्द्रायणिः[8] इत्यत्र प्रत्येकं तृप्यतामिति क्रियापदं प्रदाय

नाराशर्यस्तृप्यताम्

इत्यादिवाक्येन हारीतोक्तपञ्चदशर्षितर्पणं कुर्यात्।

ततोऽनेनैव क्रमेण यमाय धर्मराजाय मृत्यवे अन्तकाय वैवस्वताय कालाय सर्वभूतक्षयाय औदुम्बराय दध्नाय नीलाय परमेष्ठिने वृकोदराय चित्राय चित्रगुप्ताय इत्यत्र प्रत्येकं नम इति दत्त्वा

यमाय नम

इत्यादिवाक्येन कात्यायनोक्तचतुर्दशयमानां प्रत्येकं त्रीं स्त्रीन् जलाञ्जलीन् दद्यात्।

---

१ प्राग् गते ११४श-पत्रे नामानि द्रष्टव्यानि।

२ ख—घ—त—पुस्तकेषु नास्ति।
छ—ज—न—व—केवलेन।

३ ज—झ—सम्भवे सतीति नास्ति।

४ क—च—कव्यपाल_। त—कव्यवालः।
घ—त—नलस्तृप्यतामित्यधिकम्।

५ क—नास्ति।

६ क—वाजकुकचो। ज—झ—वापकुटौ।
त—न—व—वाचंयमी।

७ क—ह्राहा इत्यधिकम्।

८ ख—दाधायणिः।

ततस्तिलान् गृहीत्वा शङ्ख ऋषिरनुष्टुप्[1] छन्द आग्नेयो पितृदेवता सौत्रामण्यामग्न्युपस्थाने विनियोगः ।

**उशन्तस्त्वा नि धीमह्युशन्तः समिधीमहि ।**
**उशन्नुशत आ वह पितॄन् हविषे अत्तवे ॥ ५०**

[ ऋ १०, १६, १२ । वा स १९, ७० । का स २१, ७० ]

अग्निदैवतोऽयं मन्त्रः । तेनायमस्यार्थः ।—हे अग्ने त्वा त्वां निधीमहि आदधीमहि आधानं कुर्म इति यावत् । वयमित्यर्थादध्याहार्यम् । किम्भूता वयम्—उशन्तः त्वाम् इच्छन्तः । किञ्च उशन्त एव वयं त्वां समिधीमहि ज्वालयामः । त्वं चास्माभिराहितो ज्वालितश्च पितॄनग्निष्वात्तादीन् आवह आनयेत्यर्थः । किम्भूतस्त्वम्—उशन् पितॄन् इच्छन् । किम्भूतान् पितॄन्—उशतः इच्छतः । किमर्थं पितॄणामावाहनमित्यपेक्षायामाह—हविषे अस्मद्दत्त-हविषः अत्तवे[2] अदनार्थम् । हे अग्ने अस्माभिराधानज्वालनाभ्यामाराधित-स्त्वमस्माकं पितॄन् [3]तर्पणदेयस्य जलस्य पानार्थम्[3] आनयेत्यग्नौ प्रार्थना वाक्यार्थः । अत्र निधीमहीति डुधाञ् धारणपोषणयोरित्यस्य धातोरुत्तमपुरुष-बहुवचन आत्मनेपदरूपम् । बहुलं छन्दसीति ( पा २, ४, ७६ ) बहुलवचनाद् द्विर्वचनं न भवति ।[4] समिधीमहि इति ञि इन्धी दीप्तावित्यस्य धातो रूपम् । हविष इति षष्ठ्यर्थे चतुर्थी । अत्तव इति अद भक्षणे इत्यस्मात् तुमर्थे सेसेनित्यादि सूत्रेण ( पा ३, ४, ९ ) तवेङ् प्रत्ययेनाव्ययं पदम् ।

एवं मन्त्रं पठित्वा तिलान् विकीर्य बद्धाञ्जलिः पठेत् ।

शङ्ख ऋषिस्त्रिष्टुप् छन्दः पितरो देवता सौत्रामण्यामग्न्युपस्थाने विनियोगः ।

**आ यन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः ।**
**अस्मिन् यज्ञे स्वधया मदन्तोऽधि ब्रुवन्तु तेऽवन्त्वस्मान् ॥ ५१**

[ वा स १९, ५८ । का स २१, ५९ ]

नोः अस्माकं पितर आयन्तु आगच्छन्तु । के ते पितरः—सोम्यासः सोम्याः सोमपा इत्यर्थः । न केवलं सोम्या एव अग्निष्वात्ताश्च श्रौतस्मार्ताग्निभिः[5] स्वात्ता भक्षिताः । तेषां श्रौतस्मार्ताग्निभिः संस्कारः कृत इत्यर्थः । कैरागच्छन्तु—

---

१ ज—झ—ऋषिस्त्रिष्टुप् ।
२ क—च—तर्पणदेयस्य हविषो जलस्य इत्यधिकम् ।
३ ङ—ज—झ—श्राद्धदेयस्य हविषो भक्षणाय ।
४ ख—उशन्त इति वशकान्तौ सम्प्रसारणमित्य-धिकम् ।
५ ग—ङ—च—श्रौतस्मार्तादिभिः ।

पथिभिः वर्त्मभिः। किम्भूतैः—देवयानैः येर्वर्त्मभिर्देवानां यानं गमनं तैर्मार्गैरित्यर्थः। आगत्य च ते पितरः अस्मिन् तर्पणरूपे पितृयज्ञे स्वधया पितॄणामन्नेन मदन्तः सन्तः अस्मान् अधिब्रुवन्तु अधिकाधिकान् वदन्तु श्लाघयन्त्वित्यर्थः। अवन्तु च रक्षन्तु च। अयं वाक्यार्थः—अस्मिन् तर्पणे अस्माकं सोमपा अग्निष्वात्ताश्च पितर आगच्छन्तु आगत्य च तर्पणजलेन तृप्यन्तोऽस्मान् श्लाघयन्तो रक्षन्तश्चास्मत्पितृपितामहादीन् प्रीणयन्त्विति। अत्र च सोम्यास इति सोममर्हतीति य-प्रत्यये कृते सोम्यशब्दात् प्रथमाबहुवचने आज्जसेरसुगिति ( पा ७, १, ५० ) असुगागमे रूपम्।

अनेन मन्त्रेण पितॄनावाह्य प्रजापतिर्ऋषिरापो देवता विराट् छन्दः पिण्डपितृयज्ञे पिण्डसेचने[१] विनियोगः।

ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम्।
स्वधा स्थ तर्पयत मे पितॄन्॥ ५२

[ वा स २, ३४। का स २, ७ ]

हे आपः यूयं स्वधा स्थ पितॄणामन्नं भवथ[२]। तथा च श्रुतिः [ श ब्रा १३,८,१,४ ]

स्वधो वै पितॄणामन्नम् इति।

ताश्च मे मम पितॄन् तर्पयत तृप्तान् कुरुत। किम्भूता यूयम्—ऊर्जं वहन्तीः अन्नं वहन्त्यः प्रापयन्त्यः। किम्भूतमूर्जम्—अमृतमित्यादिपरिस्रुतमित्यन्तान्यूर्जविशेषणानि[३]। अमृतं देवानामन्नम्। घृतं प्रसिद्धम्। पयो दुग्धम्। कीलालं मण्डः कीलं बन्धनम् अलं योग्यमस्य इति कीलालं मण्डः। परिस्रुतं स्वधा। एतच्चामृतादि सर्वमेवोर्जशब्दाभिधेयम् अन्नस्य वाचकम्। यथा श्रुतिः [ श ब्रा १०, २, ५, १२ ]

तस्माद् यावन्मात्र इवान्नस्य रसं सर्वमन्नमवतीति।

अयं वाक्यार्थः—यतो यूयं नानाविधमन्नं वहन्त्यः स्वधा भवथ तस्मान्मम पितॄन् तर्पयतेति। वहन्तीरिति सुपां सुपो भवन्तीति प्रथमाबहुवचनस्थाने द्वितीयाबहुवचनम्। अथवा दीर्घाज्जसीति [ पा ६, १, १०५ ] नित्यं सवर्णादेशे प्राप्ते वा छन्दसीति [ पा ६, १, १०६ ] सूत्रेण पूर्वसवर्णादेशस्य विकल्पितत्वाद् यदा प्रतिषेधो नास्ति तदा पूर्वसवर्णादेशे कृते रूपम्।

---

१ क—पिण्डसेचने इति नास्ति। ३ क—ज—झ— त्यन्तमूर्जं।

२ क— स्वमात्मीयं धाम पोषणमनेनेति स्वधा' इत्यधिकम्।

एतन्मन्त्रपाठपूर्वकम् अमुकगोत्र पितरमुकदेवशर्मन्नेतत्ते तिलोदकं स्वधा इति पितुर्जलाञ्जलित्रयं दद्यात्। एवं पितामह-प्रपितामह-मातामह-प्रमातामह-वृद्धप्रमातामहानां प्रत्येकं जलाञ्जलित्रयं दद्यात्। ततोऽमुकगोत्रे मन्मातरमुकदेवि एतत्ते तिलोदकं स्वधा इति मातुस्तर्पणं कुर्यात्। एवं पितामह्यादिमातामह्यादीनामेकैकाञ्जलिं दद्यात्। ततो ज्येष्ठतात-पितृव्य-भ्रातृ-पुत्र-पौत्र-दौहित्र-जामातृ-मातुल--भागिनेय-पितृस्वस्रीय--मातृभगिनी--मातुलानी-भ्रातृपत्नी-भागिनेयी-श्वश्रू-श्वशुर-बन्धुबान्धवादीनामपि मत्पितामहीत्यादि सम्बोध्य पुरुषाणामञ्जलित्रयेण स्त्रीणामेकैकाञ्जलिना तर्पणं कुर्यात्।

ततो विष्णुपुराणोक्तं काम्यमञ्जलित्रयं दद्यात्।

यथा [ वि पु ३, ११, ३१ ]

इदञ्चापि जपेदम्बु दद्दात्मेच्छया नृप।
उपकाराय भूतानां कृतदेवादितर्पणः॥

तत्रायं मन्त्रः [ ३, ११, ३२-३३ ]

देवासुरास्तथा यक्षा नागा गन्धर्वराक्षसाः।
पिशाचा गुह्यकाः सिद्धाः कुष्माण्डास्तरवः खगाः॥
जलेचरा भूमिलया वाय्वाधाराश्च जन्तवः।
प्रीतिमेते प्रयान्त्वाशु मद्दत्तेनाम्बुनाऽखिलाः॥

इति मन्त्रश्लोकद्वयेन देवासुरयक्षनागगन्धर्वादीनां तर्पणीयत्वात् दक्षिणोपवीती प्राङ्मुखो देवतर्पणवदेकंकमञ्जलिं दद्यात्।

ततः [ वि पु ३, ११, ३४ ]

नरकेषु समस्तेषु यातनासु च ये स्थिताः।
तेषामाप्यायनायैतद् दीयते सलिलं मया॥

इत्यनेन मन्त्रश्लोकेन नरकस्थानां तर्पणीयत्वाद् वामोपवीती दक्षिणाभिमुखः पितृतर्पणवदपरमेकमञ्जलिं दद्यात्।

ततः [ वि पु ३, ११, ३५ ]

येऽबान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः।
ते तृप्तिमखिला यान्तु ये चास्मत्तोयकाङ्क्षिणः॥

इत्यपरेण मन्त्रश्लोकेन तथैवापरमञ्जलिं दद्यात्।

तथा अस्यैव काम्योदकदानस्य फलम्।

[ वि पु ३, ११, ३७-३८ ]

काम्योदकप्रदानन्ते मयैतत् कथितं नृप।
यद्दत्त्वा प्रीणयत्येतन्मनुष्यः सकलं जगत्॥

जगदाप्यायनोद्भूतं पुण्यमाप्नोति चानघ ।
दत्त्वा कास्योदकं सम्यगेतेभ्यः श्रद्धयान्वितः ॥

इति तर्पणं समाप्य [ गोभिल-स्नान-परिशिष्ट १२ ].

ये चास्माकं कुले जाता अपुत्रा गोत्रिणो मृताः ।
ते पिबन्तु मया दत्तं वस्त्रनिष्पीड़नोदकम् ॥

इति मन्त्रं पठित्वा स्नानशाटीं निष्पीड़येत् । ततो दक्षिणोपवीती आचम्यो-त्थायादित्यमवलोकयेत् ।

तथा योगियाज्ञवल्क्यः [ १, १०० ]

ततोऽवलोकयेदर्कं हंसः शुचिषदित्यृचा ।
स याति ब्रह्मणः सद्म [1]स्नात्वैतेनानया तु यः[1] ॥

ततः [ वि पु ३, ११, ३८ ]

नमो विवस्वते ब्रह्मन् भास्वते विष्णुतेजसे ।
जगत्सवित्रे शुचये सवित्रे कर्मदायिने ॥

इति विष्णुपुराणीयमन्त्रेण सूर्याय सलिलाञ्जलिं दत्त्वा योगियाज्ञवल्क्योक्तं सूर्योप-स्थानादिकं कुर्यात् ।

तद्यथा [ योगिया ७, १०२-१०४ ]

स्वयम्भूरित्युपस्थाय सूर्यस्येति प्रदक्षिणम्[2] ।
समावृत्य नमस्कुर्याद् दिशो दिग्देवता अपि ॥
ब्रह्मणे च पृथिव्यै च ओषधिभ्यस्तथाग्नये ।
वाचे च वाचस्पतये विष्णवे महते तथा ॥
एताभ्यो देवताभ्यश्च नमस्कारादिना जलम् ।
दत्त्वा नमस्येत् क्रमशस्त्वन्ते वै सर्वकर्मणाम् ॥
नमोऽद्भ्यो [3]नमोऽप्पतये वरुणाय नमो नमः[3] ॥

अत्र स्वयम्भूरित्युपस्थायेत्यादि

**स्वयम्भूरसि श्रेष्ठो रश्मिर्वर्चोदा असि वर्चो मे देहि ॥ ५३**

[ वा स २, २६ । का स २, ४८ ]

इत्यनेन मन्त्रेण सूर्यमुपस्थाय

**सूर्यस्यावृतमन्वावर्ते ॥ ५४**

[ वा स २, २६ । का स २, ४८ ]

---

१ त—न—व—यः स्नात्वे चितभास्करः ।
२ त—न—व—तिलोदकम् ।
३ क—त—न—व—नमो अपां पतये वरुणाय च ।

इति प्रदक्षिणमावृत्य नमो दिग्भ्य इत्यादिना यथोक्तदिगादीनां जलाञ्जलि-दानपूर्वकं नमस्कारं कुर्यादित्यर्थः। अस्य च मन्त्रद्वयस्य व्याख्यानादिकं प्रातः-सन्ध्यायां सूर्योपस्थाने ( ६४ पृ, ८५ पृ ) लिखितत्वात्तत्रैवानुसन्धेयम्।

इत्यावसथिक-महाधर्माधिकृत-हलायुध-विरचित ब्राह्मणसर्वस्वे स्नानमन्त्रव्याख्याप्रकरणम्॥

## अथ सूर्यार्घ्यदानम्

तत्रार्घ्यं दद्यादित्यनन्तरं पद्मपुराणम् [ सृष्टि २०, १७०-१७१ ]

आचम्य विधिवत् सम्यगालिखेत् पद्ममग्रतः।
अक्षताद्भिः सपुष्पाभिः सतिलारुणचन्दनैः॥
अर्घ्यपात्रैः प्रयत्नेन सूर्यनामानुकीर्तनैः॥

नरसिंहपुराणे [ ५८, ८१ ]

ततोऽर्घ्यं भानवे दद्यात्तिलपुष्पसमन्वितम्।
उत्थाप्य मूर्धपर्यन्तं हंसः शुचिषदित्यृचा॥

हंसः शुचिषदिति मन्त्रस्य माहात्म्ये हारीतः

हंसः शुचिषदिति विमलं पवित्रं [1]येनाभ्यर्च्य पापेभ्यः[1] प्रमुच्यते। अप्सु जपेत्। घृतं तिलान् समिधो वा जुहुयात्। आदित्यमुपतिष्ठेत् पूतो भवति।

तथा बौधायनः [ धर्मसूत्र ४, ४, ५ ]

हंसः शुचिषदित्येतामृचं त्रिरन्तर्जले पठन् सर्वस्मात् पापात् प्रमुच्यते। अत्र [2]यथाशक्ति ताम्रपात्रस्थं तिलपुष्पयवजलरक्तचन्दनैरर्घ्यमुपकल्प्य शिरसि निधायानेन मन्त्रेणार्घ्यं दद्यात्।

तद्यथा वामदेव ऋषिरतिजगती छन्दः सूर्यो देवता राजसूये यजमानस्य रथावतरणे विनियोगः।

**हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्।**
**नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्॥५५**

[ ऋ स ४, ४०, ५। वा स १०, २४। का स ११, २४ ]

१ च—स—न—व—येन सर्वपापेभ्यः।     २ घ—च—छ—ज—शक्ति।

हंस: अध्वानं हन्ति गच्छतीति हंस आदित्य:। शुचिषत् शुचौ अग्निमण्डले सीदति भ्रमति तिष्ठतीति शुचिषत्। वसुस्तेजोरूप:। अन्तरिक्षे आकाशे सीदतीति अन्तरीक्षसत्। होता [१]यज्ञे होत्रमन्त्रेण[१] देवानामाह्वानकर्ता। वेदिषत् यज्ञवेद्यामध्वर्युरूपेण सीदतीति। अतिथि: अनित्यस्थिति: क्वचिदपि न स्थायी नित्यभ्रमणशील:। दुरोणसत् दुरोणे गृहे सीदति [२]गृहस्थरूपोऽप्ययमित्यर्थ:। नृषत् नृषु मनुष्येषु सीदति जीवस्वरूपतया स्थित:। वरसत् वरेषूत्कृष्टस्थानेषु स्वर्गादिषु सीदति देवत्वेन। ऋतसत् ऋते सत्ये सीदति परमात्मेत्यर्थ:। व्योमसत् व्योम अन्तरिक्षं तत्र सीदति। ज्योतिर्मण्डलरूपेण[३]। अब्जा: अप्सु जलेषु जायते अग्निरूपेण। गोजा: गवि पृथिव्यां जायते जरायुजाण्डजस्वेदजोद्भिज्जरूपतया। ऋतजा: ऋते सत्ये जायते त्रयीस्वरूपेण। अद्रिजा: अद्रौ पाषाणात्मके पर्वते जायते स्फुलिङ्गरूपतयेत्यर्थ:। ऋतं सूक्ष्मम्। बृहत् सर्वव्यापितया [४]अनवच्छिन्नपरिमाणमिति यावत्[४]। अत्र ऋतमिति ऋ गतावित्यस्य धातो रूपम्। अनया च कण्डिकया अयमेव परब्रह्मस्वरूप: सर्वत्र स्थित: सर्वत्र जात: सर्वत्र गत: सर्वव्यापक इत्यादित्य: स्तूयते।

अनेन मन्त्रेण आदित्यायार्घं दत्त्वा अदृश्रमस्येति मन्त्रेणादित्यमुपतिष्ठेत्। अस्य च प्रजापतिर्ऋषिर्गायत्री छन्द: सूर्यो देवता द्वादशाहे [५]अतिग्राह्यग्रहणे विनियोग:।

**अदृश्रमस्य केतवो विरश्मयो जनाँ अनु।**
**भ्राजन्तो अग्नयो यथा॥ ५६**

[ऋ स १, ५०, ३। वा स ८, ४०। का स ८, २२]

अस्य सूर्यस्य विरश्मयो विविधा रश्मय: अदृश्रम् दृश्यन्त इत्यर्थ:। रश्मय: किम्भूता:—केतव: ज्ञानहेतव: अन्धकारनाशकतया। जनान् अन्धलोकान् अनुगता अध ऊर्ध्वञ्च भ्राजन्त: दीप्यमाना:। कथं दृश्यन्ते—अग्नयो यथा। अग्नयो गार्हपत्याहवनीयदक्षिणाग्नय: प्रादुष्कृता: स्वतो[६] देदीप्यमाना दृश्यन्ते तथास्य रश्मयोऽपीति आदित्यस्तुतिरेव वाक्यार्थ:। अत्रादृश्रमिति दृशिर् प्रेक्षण इत्यस्य धातो: कर्मणि प्रथमपुरुषबहुवचने छान्दसं रूपम्।

---

१ त—न—व—याग्रहीत्रमण्डलेन।
२ त—न—व—गृहस्थरूपी।
३ ङ—ज—भ—ज्योतिस्स्वरूपेण।
४ ज—भ—°परिमाण इत्यर्थ:।
५ क—त—न—अभिग्राह्य।
६ क—पश्यन्तो' भ—त—न—व—सन्तो।

## अथ देवपूजा

ततो देवपूजामारभेत[1]।

तत्र पद्मपुराणम् [ सृष्टि २०, १७६ ]

> एवं सूर्यं नमस्कृत्य त्रिः कृत्वा च प्रदक्षिणम्।
> द्विजं गां काञ्चनं स्पृष्ट्वा ततो विष्णुगृहं व्रजेत्॥

तथा विष्णुपुराणम् [ ३, ११, ४० ]

> ततो गृहार्चनं कुर्यादभीष्टसुरपूजनम्।
> जलाभिषेकपुष्पाणां धूपादीनां निवेदनैः॥

अत्र यद्यपि सूर्यादिदेवतापूजासु पौराणिकमन्त्रा बहव एव संविहिताः[2] सन्ति[3] [4]तथाप्यस्माभिर्वैदिकमन्त्रव्याख्यानस्योपक्रान्तत्वात्तत्प्रसङ्गे नैवानुष्ठानाभिधानम्। तात्पर्यं तु वैदिकमन्त्रव्याख्यायामेव। अतो वैदिका एव मन्त्रा व्याख्यायन्ते।

एवं सति नवग्रहपूजाप्रकरणे याज्ञवल्क्येन ( १, ३०० ) आकृष्णेनेत्यादिमन्त्रेणादित्यपूजा विहिता। एतावता नित्यादित्यपूजा तेनैव मन्त्रेण करणीया।

हिरण्यस्तूप आङ्गिरस ऋषिस्त्रिष्टुप् छन्दः सूर्यो देवता सर्वमेधे सौ ग्रहग्रहणे विनियोगः।

**आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च।**
**हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन्॥५७**

[ ऋ स १, ३५, २। वा स ३३, ४३। का स ३०, ४३ ]

सविता आदित्यः आयाति आगच्छति। किम्भूतः—देवः स्तुत्यादिगुणयुक्तः। केन—रथेन। किम्भूतेन—हिरण्ययेन सुवर्णमयेन। किं कुर्वन्नायाति—भुवनानि पश्यन् भुवनवर्तिनो मनुष्यान् कर्मभूमिस्थितान् प्रकाशाप्रकाशपापकर्तॄन् साक्षिवन्निरीक्षमाण इत्यर्थः। न केवलमेवमपरञ्च—निवेशयन् स्वेषु स्वेषु व्यापारेषु समावेशयन्। किम्—अमृतं देवं मर्त्यं मनुष्यञ्च। मनुष्या हि सूर्योदये स्वकर्मसु वर्तमाना देवान् प्रीणयन्ति प्रीताश्च देवा वृष्ट्यादिना मनुष्यानाप्याययन्तीति देवमनुष्ययोः परस्परव्यापारसमावेशः। पुनः पुनरनुदिवसं तमेव देशमागच्छन्। केन सह—रजसा रात्रिकालेन सह। किम्भूतेन—कृष्णेन मलिनेन। प्रायेण

---

१ त—न—व—ततोऽभीष्टदेवपूजनं कुर्यात्।
२ क—त—न—व—विहिताः।
३ त—न—व—पुस्तकेषु सन्तीति नास्ति।
४ त—न—व—तथापीत्यत्र तथेति विद्यते।

रात्रिकाले पुण्यकर्मणामनुत्पादात् रात्रिकालस्य कृष्णत्वमुक्तम्। अयं वाक्यार्थः—यः सविता [1]देवमनुष्यव्यापारस्य व्यवस्थापको[1] यश्च कर्मभूमिवर्तिनां पुण्यपापसाक्षिभूतः प्रत्यहं समायाति तस्मा अर्हणं कुर्म इति। अत्राकृष्णेनेति व्यवहितोऽप्याङ् व्यवहिताश्चेति पाणिनिस्मरणात् [ पा १, ४, ८२ ] [2]वर्तमानपदेन सह संबध्यते। तेनावर्तमान इति व्याख्यातम्। तथा रथेना इत्यत्र स्थितस्याङ् सम्बन्धाकारस्य[3] यातीति क्रियापदेन सम्बन्धः। ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि च्छन्दसीति पाणिनिस्मरणात् [ पा ६, ४, १९५ ] हिरण्मयार्थे हिरण्ययशब्दो निपातितः।

यस्य पुनर्नवग्रहानेव पूजयितुमिच्छा भवति तेन गणपतिपूजापूर्वकं याज्ञवल्क्योक्तैरेव मन्त्रैर्नवग्रहाः पूज्याः। तथा ग्रहयज्ञे आदित्यादीनां मन्त्रविधौ याज्ञवल्क्यः ( १।३००, ३०१ )

आ कृष्णेन इमं देवा अग्निर्मूर्धा दिवः ककुत्।
उद्बुध्यस्वेति च ऋचो यथासंख्यं प्रकीर्तिताः॥
बृहस्पते अति यदर्यस्तथैवान्नात् परिस्रुतः।
शन्नो देवी तथा काण्डात् केतुं [4]कृण्वन्निमाः क्रमात्[4]॥

गणपतिमन्त्रस्य प्रजापतिर्ऋषिर्यजुष्टाच्छन्दो नास्ति। गणपतिप्रियपतिनिधिपत्यश्वा देवता अश्वमेधे अश्वप्रदक्षिणकरणे विनियोगः।

**गणानां त्वा गणपतिँ हवामहे प्रियाणां त्वा प्रियपतिँ हवामहे। निधीनां त्वा निधिपतिँ हवामहे वसो मम॥ ५८**

[ वा स २३, १९। का उ १५, २१ ]

हे मम वसो मम सर्वस्वभूत त्वा त्वां हवामहे आह्वयामि[5]। किम्भूतम्—गणानां मध्ये गणपतिं गणा रुद्रपारिषदास्तेषां पतिं स्वामिनम्। पुनरपि त्वां हवामहे। किम्भूतम्—प्रियाणां मध्ये प्रियपतिं प्रियाण्यभिलषितानि भार्यादीनि तेषां पतिम्। पुनरपि त्वां हवामहे। किम्भूतं—निधीनां मध्ये निधिपतिम् निधयः पद्मादयः तेषां पतिम्। अत्र भौतिकविघ्नोपशमाय भार्यादिप्रियलाभाय धनलाभाय च त्वां गणपतिं प्रियपतिं निधिपतिं चाह्वयामीति[6] वाक्यार्थः। हवामह इति तिङां तिङो भवन्तीति उत्तमपुरुषैकवचनस्थाने बहुवचनम्।

---

१ त—न—व—देवमनुष्यव्यापक एव स्थापकौ।
२ त—वर्तमाने पदे सन्दध्यते।
३ त—न—व—रथेनास्थितमात्र संबध्याकारस्य।
४ याज्ञवल्क्यपाठस्तु—कृण्वन्निमास्तथा।
५ ज—भ—आह्वयामः।
६ ज—भ—आह्वयाम इति।

[ आकृष्णेनेति ] आदित्यमन्त्रो व्याख्यात एव।

सोममन्त्रस्य वरुणऋषिरग्निर्देवो यजुष्टाच्छन्दो नास्ति राजसूये यजमानदक्षिणबाहुग्रहणपूर्वकजपे विनियोगः।

**इमं देवा असपत्नं सुवध्वं महते क्षत्राय महते ज्यैष्ठ्याय।**
**इमममुष्य पुत्रममुष्याः पुत्रमस्यै विशे॥ ५९**

[ वा स ९, ४०—पुत्रममुष्यै। का स ११, १० ]

अत्र प्रकृतत्वादिदंशब्देन सोमः परामृश्यते। हे[1] देवा इमं सुवध्वं जनयत। असपत्नं सपत्नः शत्रुः तेन रहितम् सौम्यत्वेन सर्वप्रियत्वात्। एतज्जननस्य किं प्रयोजनमित्याह—महते क्षत्राय क्षत्रत्वाय राजभावाय लोकपालनायेति[2] यावत्। ज्यैष्ठ्याय ज्यैष्ठ्यभावाय सर्वोत्तमत्वाय। किम्भूताय—महते सातिशयाय। पुनः किम्भूतम्—इमं प्रत्यक्षदृश्यम् अमुं [3]नित्यपरोक्षं परं[3] ब्रह्मस्वरूपम्। अमुष्य सूर्यस्य पुत्रं जातं सुषुम्णाभिधानसूर्यरश्मेः सोमत्वात्[4]। अमुष्याः दिशः पुत्रम्। अत्रेर्महर्षेश्चक्षुर्निःसृतं तेजो दिशा धृतं सोमोऽजायतेति पुराणेषु[5] श्रूयते। तदभिप्रायमेतत्। किमर्थमयं दिशा धृत इत्यत आह—अस्यै प्रजायै। तादर्थ्ये चतुर्थी। आप्यायनप्रकाशादिभिः प्रजानामनुग्रहायेत्यर्थः। लोकपालनाय[6] श्रेष्ठत्वाय आप्यायनप्रकाशादिभिलोकानुग्रहाय[7] चायमेव सोमो देवैर्जन्यत इति सोमस्तुतिर्वाक्यार्थः।

---

१ त—न—व—ते।

२ क—लोकपावनायेति। ज—भ—लोकपालत्वायेति। व—लोकपालानामिति।

३ ज—भ—नित्यं परोक्षापरोक्षपरं।

४ सुषुम्णसूर्यरश्मेः सोमत्वं तु—
वाजसनेयिसंहिता ( १८, ४० )
सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वः।
शतपथब्राह्मणम् ( ९, ४, १, ९ )
सुषुम्ण इति सुयज्ञिय इत्येतत् सूर्यरश्मिरिति सूर्यस्येव हि चन्द्रमसो रश्मयः।
यास्कीयनिरुक्तम् ( २, ६ )
अथाप्यस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते तदेतेनोपेक्षितव्यमादित्योऽस्य दीप्तिर्भवति।
मत्स्यपुराणम् ( १२८, २९ )
सुषुम्णः सूर्यरश्मिर्यः क्षीणं शशिनमेधते।
कूर्मपु° ( पूर्वभाग ४२, ४ )
सुषुम्णः सूर्यरश्मिस्तु पुष्णाति शिशिरद्युतिम्।

५ मत्स्य ( २३ १-७ )-वायु ( ९०, १-७ )-स्कन्द (प्रभासखण्ड, प्रभासक्षेत्रमाहात्म्य २०, ४६-५४)-ब्रह्म ( ९, १-६ )-भागवत ( ९, १४, १-३ )-मार्कण्डेय ( १७, १-५ )-पुराणेषु सोमोत्पत्तिकथा लभ्यते। यथा—
भाग — जातस्यासीत् सुतो धातुरत्रिः पितृसमो गुणैः।
तस्य दृग्भ्योऽभवत् पुत्रः सोमोऽमृतमयः किल॥
वायु°— सोमः सुस्राव नेत्राभ्यां दश वा द्योतयन् दिशः।
तं गर्भं विधिनादिष्टा दश देव्यो दधुस्तदा॥
मत्स्य°—अथः सुस्राव नेत्राभ्यां धाम तच्चाम्बुसम्भवम्।
दीपयद्विश्वमखिलं ज्योत्स्नया सचराचरम्।
तद्दिशो जगृहुर्धाम स्त्रीरूपेण सुतेच्छया॥
'अमुष्य' 'अमुष्या' इति मन्त्रपदाभ्यां यजमानस्य पितामाता च लक्षिताविति उवट-सायण महीधराः। इत्थमायुधव्याख्याऽत्र प्राचीनशास्त्रानुसारिणी।

६ ज—भ—त—न—व—लोकपालाय।

७ वायुपु°—स्कन्दपु°—लोकानां हितकाम्यया।

मङ्गलमन्त्रस्य विरूपाङ्गिरस ऋषिरग्निर्देवता गायत्री छन्दोऽग्न्युत्पस्थाने विनियोगः।

**अग्निर्मूर्धा दिवः ककुत् पतिः पृथिव्या अयम्।**
**अपाꣳ रेतांसि जिन्वति॥ ६०**

[ ऋ स ८, ४४, १६। वा स ३, १२, १३, १४। का स ३, १८, १६, ४१ ]

[1]याज्ञवल्क्य-मत्स्यपुराणादावस्य मन्त्रस्य [2]भौमपूजायामुपयोगाद्भौमप्रकाशक-त्वश्रुतिः प्रतीयते[2]। अतोऽयमिति पदेन भौमोऽभिधीयते। तथा सत्ययं मन्त्रार्थः। अयं भौमोऽग्निर्मूर्धा[3] अत्यन्ततेजोरूपतया नितान्तलोहितत्वादग्नेर्मूर्धेव संलक्ष्यते[4]। दिवः ककुत् दिव आकाशस्य ककुत् चिह्नमित्यर्थः। वृष्टि-कर्तृत्वहर्तृत्वाभ्यामपां[5] जलानां पतिः। पृथिव्या रेतांसि बीजानि आत्मोत्पत्त्या जिन्वति प्रीणाति सफलीकरोतीत्यर्थः। अत्राग्निरिति विभक्तिविपरिणामात् षष्ठ्यर्थे प्रथमा।

बुधमन्त्रस्य परमेष्ठी ऋषिरग्निर्देवता त्रिष्टुप् छन्दः पुनश्चित्युपस्थाने विनियोगः।

**उद्बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्ते सꣳसृजेथामयं च।**
**अस्मिन्त्सधस्थे अध्युत्तरस्मिन् विश्वे देवा यजमानश्च सीदत॥६१**

[ वा स १५, ५४ ; १८, ६१। का स १३, ७६ ; २०, ३१। तै स ४, ७, १३, ५ ]

अत्रापि याज्ञवल्क्यस्वरसात्[6] त्वमिति पदेन बुधोऽभिधीयते। तथा सत्ययं मन्त्रार्थः।—हे अग्ने उद्बुध्यस्व उद्बुद्धो भव। हे बुध त्वञ्च प्रतिजागृहि अस्मिन्मया क्रियमाणे कर्मणि अवहितो भव। यूवां बुधाग्नी इष्टापूर्ते इष्टं यज्ञादि पूर्तं खातादि ते द्वे इष्टापूर्ते संसृजेथाम् यजमानसंसक्ते कुरुतमिति ग्रहयज्ञे ऋत्विक्-प्रार्थना। किञ्चास्मिन् सधस्थे पूजास्थाने। किम्भूते—अध्युत्तरस्मिन् सर्वोत्कृष्टे। अयं यजमानो विश्वेदेवाश्च सीदतेति ऋत्विजा यजमानस्य विश्वेदेवैः सह सामानाधिकरण्यमनेन मन्त्रेणोच्यते। सधस्थ इति ष्ठा गतिनिवृत्तावित्यस्य

---

१ याज्ञ १, ३००; मत्स्यपु ७२, २८ द्रः। मत्स्य ९३, ३४—अग्निर्मूर्धा दिवो मन्त्र इति भौमाय कीर्तयेत्।

२ क—व—°प्रकाशकत्वं प्रतीयते। ङ—°प्रकाशकत्वश्रुतिः श्रूयते। ज—झ—न—°प्रकाशकत्व श्रुतिषु श्रूयते।

३ क—त—व—°ग्नेर्मूर्धा।

४ क—च—त—पुस्तकेषु संलक्ष्यत इति नास्ति। ज—झ— दग्निमूर्धत्वमेव संलक्ष्यते।

५ ङ—ज—झ—न—वृष्टिकर्तृत्वादपां। त—व—वृष्टिकर्तृत्वहेतुभ्यामपां।

६ याज्ञ १, ३०० द्रः।

सहोपपदेन सध मादस्थयोश्छन्दसीति ( पा ६, ३, ९६ ) सूत्रेण सहस्य स्थाने सधादेशः।

बृहस्पतिमन्त्रस्य गृत्समद ऋषिर्ब्रह्मा देवता त्रिष्टुप् छन्दो बार्हस्पत्यग्रहग्रहणे विनियोगः।

**बृहस्पते अति यदर्यो अर्हाद् द्युमद्विभाति क्रतुमज्जनेषु।**
**यद्दीदयच्छवस ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम्॥[1] ६२**

[ ऋ स २, २३, १५। वा स २६, ३। का स २८, ४ ]

हे बृहस्पते! किम्भूत—ऋतप्रजात ऋतात् सत्यादविनाशिनः प्रजात। तत् द्रविणं धनम् अस्मासु धेहि स्थापय। किम्भूतम्—अति अतिशयितम्। कतमत्[2] तत्—यद् धनम् अर्यः ईश्वरः अर्हात् पूजयेत्। अस्तु तावन्निर्धन ईश्वरोऽपि तत् पूजयतीत्यर्थः। किञ्च यद्धनं जनेषु लोकेषु विभाति शोभते। किम्भूतम्—द्युमत् दीप्तिमत् धनवानिव दीप्तिशाली भवतीत्यभिप्रायः। पुनः किम्भूतम्—क्रतुमत् यज्ञवत्। यज्ञोऽपि धनवद्भिरेव क्रियत इत्यर्थः। यत् शवसा बलेन दीदयत् दीप्यते रच्यते। पुनः किम्भूतम्—चित्रं नानाविधं गोवस्त्रहिरण्यादिरूपमित्यर्थः। अत्र मन्त्रे ऋतप्रजात इति बृहस्पतिं स्तुत्वा धनमस्मासु धेहीति याच्ञा वाक्यार्थः।

शुक्रमन्त्रस्य प्रजापतिर्ऋषिरश्विसरस्वतीन्द्राः[3] देवता जगतीच्छन्दः सौत्रामण्यां पयोग्रहोपस्थाने विनियोगः।

**अन्नात् परिस्रुतो रसं ब्रह्मणा व्यपिबत्**
**क्षत्रं पयः सोमं प्रजापतिः।**
**ऋतेन सत्यमिन्द्रियं विपानꣳ शुक्रमन्धस**
**इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु॥ ६३**

[ वा स १९, ७५। का स २१, ७३ ]

प्रजापतिः ब्रह्मा। अन्नात् हविषः। परिस्रुतं परि सर्वतोभावेन स्रुतं गलितं रसं सारं व्यपिबत् पीतवान्। किम्भूतम्—क्षत्रम् ओजस्वि। किञ्च पयः क्षीरं सोमं सोमरसं प्रजापतिर्व्यपिबत् इति तेनैव सम्बन्धः। केन साधनेन व्यपिबत्—ब्रह्मणा

1 आकरे 'उपयामगृहीतोऽसि बृहस्पतये त्वैष ते योनिर्बृहस्पतये त्वा' इत्यधिकम्।

2 क—घ—किं।

3 त—ऋषिरश्विसरस्वतीन्द्रा। प—ऋषिः सरस्वती।

वेदेन। किम्भूतेन—ऋतेन प्रपञ्चास्पृष्टेन मन्त्रस्वरूपेणेत्यर्थः। इदम् अन्नरसं पयः सोमरूपम् अन्धसः अन्नात् सम्भूतं विपानं प्रजापतेर्विशिष्टं पानं शुक्रं बीजम्। अभवत् इत्यध्याहार्यम्। किम्भूतम्—सत्यम् अविनाशि इन्द्रियं सकलसंसारकारणम्। पुनः किम्भूतम्—इन्द्रस्य देवराजस्य इन्द्रियं वीर्यं[1] पयः क्षीरम् अमृतम् अमृतत्व-कारणम्। मधु पितॄणां तृप्तिहेतुः। अत्र परिस्रुत इति द्वितीयायां प्रथमा। मन्त्रदत्तहविषां प्रजापतिभुक्तानां परिणामभूतं शुक्रं सकलसंसारोत्पत्तिस्थिति-कारणमिति शुक्रस्तुतिर्वाक्यार्थः।

शनैश्चरमन्त्रस्य दध्यङ्ङाथर्वण ऋषिर्गायत्रीच्छन्द आपो देवता महावीरा-द्यन्ते शान्तिकरणे विनियोगः।

शं नो देवीरभिष्टय आपो भवन्तु पीतये।
शं योरभिस्रवन्तु नः॥ ६४

[ऋ स १०, ९, ४। वा स, का स ३६, १२]

अस्य मन्त्रस्य मत्स्यपुराणयाज्ञवल्क्यादिभिः[1] शनैश्चरपूजाहोमादौ[2] विनि-योगनियमान्मुख्यतया शनैश्चरनामाश्रवणेऽपि आदित्यप्रभवत्वेनापां शनैश्चरस्य चाभेदो-पचारादाप इति पदेन शनैश्चर एवाभिमन्तव्यः[4]। तेनायमत्रार्थः—आपो देवीः शनैश्चरदेवस्य नः अस्माकं शं कल्याणं भवन्तु। [5]किमर्थम्—अभिष्टये उपचयाय पीतये वृष्टिद्वारेण तृप्तिहेतवे पानाय भवन्तु। किञ्च शं योः शं कल्याणस्य योगाय च अभिस्रवन्तु अभिमुखं गच्छन्तु[5]। अत्रैकस्मिन्नपि शनैश्चरे वाच्ये अप्शब्दस्य नित्यबहुवचनान्तत्वाद् बहुवचनम्। तदनुगुणतया च भवन्तु अभिस्रवन्त्विति क्रियापदद्वये बहुवचनम्।

राहुमन्त्रस्य अग्निर्ऋषिर्दूर्वेष्टका देवता अनुष्टुप् छन्दो दूर्वेष्टकोपधाने विनियोगः।

काण्डात् काण्डात् प्ररोहन्ती परुषः परुषस्परि।
एवा नो दूर्वे प्रतनु सहस्रेण शतेन च॥ ६५

[वा स १३, २०। का स १४, २०। मै स ४, २९, २]

---

१ क१—बीजं।

२ शनैश्चरायेति पुनः शन्नोदेवीति होमयेदिति मत्स्यपुराणीयं (९३,२६) शन्नो देवीस्तथेति याज्ञवल्कीयं (१, ३००) च वचनं द्रष्टव्यम्।

३ ङ—पूजादौ।

४ क—च—त—एवाभिमतः।

५ ङ—पुस्तकेऽयमंशो नास्ति।

हे दूर्वे काण्डात् काण्डात् [1]पर्वशः पर्वशः[1] प्रतिपर्व इत्यर्थः। परुषः परुषः ग्रन्थितो ग्रन्थितः प्रतिग्रन्थि। परि सर्वतोभावेन प्ररोहन्ती प्रजायमाना त्वं [2]यथा एव तथैव[2] नः अस्मान् प्रतनु विस्तारय। कथम्—सहस्रेण शतेन च। यथा त्वं प्रतिपर्वं प्रतिग्रन्थि प्रजायसे तथाऽस्मानपि सहस्रशतसंख्यपुत्रपौत्रादिभिर्विस्तारयेति वाक्यार्थः। अनेन मन्त्रेण ग्रहहोमे राहवे हूयमानां दूर्वां प्रकल्प्य स्वीयपुत्रादिविस्तारयाच्ञया राहोः पूजादिकमपि क्रियते।

केतुमन्त्रस्य मधुच्छन्दा ऋषिरग्निर्देवताऽनिरुक्ता[3] गायत्रीच्छन्दः केत्वभिमन्त्रणे विनियोगः।

केतुं कृण्वन्न केतवे पेशो मर्या अपेशसे।
समुषद्भिरजायथाः॥ ६६

[ऋ स १, ६, ३। वा स २९, ३७। का स ३१, १२]

हे केतो ध्वजरूप त्वं समजायथाः सञ्जातो भव। कैर्जन्यमानः—उषद्भिः वसद्भिः गृहस्थैरित्यर्थः। किं कुर्वन्—मर्याः मर्त्येभ्यः मनुषेभ्यः केतुं ज्ञानं कुर्वन्। न केवलं ज्ञानं कुर्वन्नपि तु पेशः कृण्वन्। पेशःशब्देन सुवर्णं सौन्दर्यं वाभिधीयते इति निघण्टुः [१, २ ; ३, ७]। तथा च शारीरब्राह्मणम् [श ब्रा १४, ७, २, ५]—तद्यथा पेशस्कारी पेशसो मात्रामपादायेत्यादि। किम्भूतेभ्यो मनुष्येभ्यः—अकेतवे अज्ञानिभ्यः। पुनः किम्भूतेभ्यः—अपेशसे असुवर्णेभ्यः निर्धनेभ्यः कुरूपेभ्यो वा। केतुरिति [4]कित ज्ञाने[4] इत्यस्य धातो रूपम्। अकेतवे अपेशसे इति बहुवचने एकवचनम्। मर्या इति चतुर्थ्यां प्रथमा। अयं वाक्यार्थः—हे केतो यद्यपि तवोत्पत्तिर्लोकानामुत्पातार्थमेव भवति तथाप्यज्ञानिभ्यो ज्ञानमधनेभ्यो धनं कुरूपेभ्यः सुरूपं कुर्वन् त्वं लोकानां शुभार्थं सञ्जातो भवेति केतोर्याच्ञा।

इति सूर्यादिनवग्रहमन्त्रव्याख्या समाप्ता।

---

१ क—च—त—पर्वणः पर्वणः।
२ क—च—त—यथैव तथा।
३ ङ—ऽग्निरुक्ता।
४ ङ—किती संज्ञाने।

हलायुधेन गौड़ेन्द्रधर्मकोषाधिकारिणा[1] ।
एतत्[2] पुरुषसूक्तस्य व्याख्यानं प्रतिपाद्यते ॥

## अथ पुरुषसूक्तपूजा

एषा यद्यपि वैष्णवधर्मसर्वस्वे[3] एव तत्तद्विशेषेण प्रतिपादिता तथापि [4]पुरुषसूक्तमन्त्रव्याकारप्रसङ्गादेतदीयमाहात्म्यं पुनरिहापि किञ्चिदभिधीयते ।

तत्र वराहपुराणम्—विष्णुरुवाच

पौरुषं सूक्तमास्थाय ये यजन्ति द्विजास्तु माम् ।
संहितां वाप्यथास्थाय ते मामाप्नुवन्ति ब्राह्मणाः ॥

योगियाज्ञवल्क्य-नरसिंहपुराणे [ योगिया ८, ८७ । नरसिंहपु ६२, ८ ]

दद्यात् पुरुषसूक्तेन यः पुष्पाण्यप एव वा ।
अर्चितं स्याज्जगदिदं तेन सर्वं चराचरम् ॥

तथा नरसिंहपुराणम् [ ६२, १८ ]

एतत् पठेत् केवलमेव सूक्तं दिने दिने भावितशुद्धबुद्धिः[5] ॥
स सर्वदुःखं प्रविहाय वैष्णवं पदं प्रयात्यच्युततोषकृन्नरः ॥

विष्णुधर्मोत्तरीयद्वितीयकाण्डम् [ १२८, १-१५ ]

राम उवाच

एकं मन्त्रं समाचक्ष्व सर्वकर्मकरं परम् ।
ऐहिकं सर्वधर्मज्ञ पारलौकिकमेव च ॥

पुष्कर उवाच

प्रतिवेदं महाभाग यत् सूक्तं पौरुषं स्मृतम् ॥
सर्वकर्मकरं पुण्यं पवित्रं पापसूदनम् ॥
एकैकया ऋचा राम स्नातो दत्त्वा जलाञ्जलीन् ।
पौरुषेण च सूक्तेन मुच्यते सर्वकिल्बिषात् ॥
अन्तर्जलगतो जप्त्वा तथा सूक्तञ्च पौरुषम् ।
सर्वकल्मषनिर्मुक्तो यथेष्टां लभते गतिम् ॥

---

१ ज—धर्मकोषस्य कारिणः ।
त—धर्मागाराधिकारिणा ।
२ ङ—ततः ।
३ वैष्णवधर्मसर्वस्वं नाम हलायुधस्य निबन्धान्तरम् ।
४ ङ—°मन्त्रव्याख्याप्रसङ्गा° ।
५ ङ—ज—तद्गतभावबुद्धिः । मुद्रापिते नरसिंहपुराणे तु—भावितविष्णुबुद्धिः ।

एकैकया ऋचा स्नातः पुष्पं पुष्पं निवेदयेत्।
पुरुषाय जले राम सर्वपापैर्विमुच्यते ॥
एकैकया ऋचा स्नातो दत्त्वा राम फलं फलम्[१]।
सर्वकामानवाप्नोति यत्किञ्चिन्मनसेच्छति ॥
पौरुषेण तु सूक्तेन प्राणायामो महाफलः।
जपहोमौ तथा राम सर्वकल्मषनाशनौ ॥
सुरापो ब्रह्महा स्तेनस्तथैव गुरुतल्पगः।
पापेभ्यो विप्रमुच्यन्ते जप्त्वा सूक्तन्तु पौरुषम् ॥
कृच्छ्रैर्विशोधितः पूर्वं मध्याह्ने सलिलोपगः।
स्नातस्तु पौरुषं सूक्तं जपन्नित्यमयन्त्रितः ॥
संवत्सरेण[२] देवेशं वासुदेवं [२]स पश्यति[२]।
स्वयमेव[३] महाभाग शाकमूलफलाशनः ॥
सर्वान् कामानवाप्नोति यद्राम मनसेच्छति।
श्रियमग्र्यां तथा रूपं जीवितं दीर्घमेव च ॥
अणिमा लघिमा प्राप्तिर्महिमा च भृगूत्तम ॥
ईशित्वञ्च वशित्वञ्च प्राकाम्यं भृगुसत्तम ॥
यत्रकामावसायित्वं तस्मात् प्राप्नोति मानवः।
दुरवापमथान्यद्धि यत् किञ्चिन्मनसेच्छति ॥
अकामः पौरुषं सूक्तं जप्त्वा नित्यमतन्द्रितः।
तत्र याति महाभाग यद्विष्णोः परमं पदम् ॥
मङ्गल्यमेतत् परमं पवित्रं संसारदुःखौघविनाशकारि।
सुखप्रदं धर्मविदां नराणां मनोरथावाप्तिकरं प्रदिष्टम् ॥

कूर्मपुराणम् [ उ १८, ८२ ]

प्रदद्यादथ पुष्पाणि सूक्तेन पौरुषेण तु।
आपो वा देवताः सर्वास्तेन सम्यक् समर्चिताः ॥

तथा रहस्ये मनुः [ ११, २५१ ]

जप्त्वा तु पौरुषं सूक्तं मुच्यते गुरुतल्पगः ॥

[४]पूतो भवतीत्यधिकारे बृहद्विष्णुः [ विष्णु ५५, ६ ]

त्रिरात्रोपोषितः पौरुषसूक्तजप्यहोमाभ्यां गुरुतल्पगः।[४]

---

१ ङ—जलम्।
२ क—च—न—प्रपश्यति।
३ क—संवत्सरं। ज—स्वयमेवं।
४ क—च—पुस्तकयोरिदं बृहद्विष्णुवचनं नास्ति।

तथा गुरुतल्पगाधिकारे बृहद्यमः[1]

पौरुषं सूक्तमावर्त्य तदङ्गैव विशुध्यति ॥

कूर्मपुराणम् [ उ १८, ९४-९५ ]

तस्मादनादिमध्यान्तं नित्यमाराधयेद्धरिम् ॥
तद्विष्णोरिति मन्त्रेण सूक्तेन पौरुषेण तु ।
नैताभ्यां सदृशो मन्त्रो वेदेषूक्तश्चतुर्ष्वपि ॥

बृहद्विष्णुः [ विष्णु ६४, २८ ]

पुरुषसूक्तेन प्रत्यृचं पुरुषाय पुष्पाणि दद्याज्जलाञ्जलींश्च ।

तथा [ विष्णु ६४, ३५ ]

स्नातः पवित्राणि यथाशक्ति जपेत् । विशेषतः सावित्रीं पुरुषसूक्तं वा । नैताभ्यामधिकमस्तीति ।

त्रिरात्रोपोषित इत्यधिकारे याज्ञवल्क्यः [ ३, ३०४ ]

सहस्रशीर्षजापी तु मुच्यते गुरुतल्पगः ।
गौर्देया कर्मणोऽस्यान्ते पृथगेभिः[2] पयस्विनी ॥

इति पुरुषसूक्तमाहात्म्यम् ।

अथ विष्णुपूजायां

## पुरुषसूक्तमन्त्रव्याख्या

तत्र सहस्रशीर्षेत्यादि-सप्तास्यासन्परिधय इत्यन्तानुष्टुप्छन्दस्क-पञ्चदशत्रिष्टुप्छन्दस्क-यज्ञेन यज्ञमित्यादिकाण्डिकासमेत-षोडशकाण्डिकानां यद्यपि पुरुषमेधयज्ञे प्रोक्षणीयपुरुषस्यान्तर्यामिचैतन्यपुरुषस्तुतावुवट-प्रभृतिभिर्यजुर्वेदभाष्यकारैर्विनियोगो व्याख्यातस्तथापि [3]आद्यायावाहयेद्देवमित्यादि-षोडश्योद्वासनङ्कुर्यादित्यन्तग्रन्थेन षोडशानामेव काण्डिकानां पूजायां नरसिंहपुराणे ( ६२, ९-१३ ) विनियोगप्रतिपादनादस्माभिरविरोधाद् विश्वव्यापकस्य विश्वान्तर्यामिनो विज्ञानमयस्यानन्दस्वरूपिणो भगवतः[4] पुरुषस्य पूजायामुपयोगो वर्णितः ।

---

१ ङ—ज—बृहन्मनुः ।
२ क—ख—त—न—पृथगेव । ङ—पृथगर्भा ।
३ घ—अनया ।
४ क—च—पुस्तकयोर्नास्ति ।

अस्य च षोड़शर्चस्य सूक्तस्य नारायण ऋषिरनुष्टुप् छन्दोऽन्त्यस्य त्रिष्टुप् छन्दो[1] जगद्बीजपुरुषो देवता।

यथा नरसिंहपुराणम् [ ६२, ७ ]

आनुष्टुभस्य सूक्तस्य त्रिष्टुबन्तस्य[2] देवता।
पुरुषो यो जगद्बीजमृषिर्नारायणः परः॥

विनियोगश्च पुरुषमेधे यज्ञे प्रोक्षणीयपुरुषस्तुतौ कल्पसूत्रकृता कात्यायनेनोक्तः ( का श्रौ २१, ११ )।

**सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्।**
**स भूमिꣳ सर्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम्॥ ६७**

[ ऋ स १०, ९०, १—स भूमिं विश्वतो वृत्वा। वा स ३१, १—सर्वतः स्पृत्वा। का स ३५, १ ]

यः पुरुषो नाभेरूर्ध्वं दशाङ्गुलम् अति अतिक्रम्यार्थवशात् [3]हृत्पद्मे विज्ञानरूपः[3] अतिष्ठत्। किम्भूतः—सहस्रशीर्षा। सहस्रशब्दोऽयमसंख्यातवचनः। तेनासङ्ख्यातशिराः। किम्भूतः—सहस्राक्षः। अक्षशब्दोऽत्र बुद्धीन्द्रियाणामुपलक्षकः। तानि च षट्[4]। सहस्रपात्। पादशब्दोऽपि कर्मेन्द्रियाणामुपलक्षकः। तानि च पञ्च। एतेन त्रैलोक्योदरवर्तिप्राणिनां यानि शिरांसि बुद्धीन्द्रियाणि कर्मेन्द्रियाणि च तानि सर्वाण्यस्यैव पुरुषस्येत्यर्थः। एतेनासौ सहस्रशीर्षा सहस्राक्षः सहस्रपात्। किं कृत्वा अतिष्ठत्—भूमिं सर्वतः स्पृत्वा व्याप्य। भूमिशब्दो भूम्यारब्धप्राणिदेहवचनः। तेन सर्वतोभावेन त्रैलोक्यवर्तिनां पार्थिवदेहान् व्याप्येत्यर्थः। अनेन च सहस्रशीर्षेत्यादिना यद् व्यापकत्वमुपक्रान्तं तदेव स्फुटीकृतम्। सर्वदेहिनां हृदयस्थं विज्ञानरूपं पुरुषं सहस्रशीर्षत्वादिरूपोत्कीर्तनेनाभिमुखीकृत्य [5]सोऽस्यां मत्क्रियमाणायां[5] पूजायां सान्निध्यमुपकल्पयत्विति[6] वाक्यार्थः। अत्र नाभेरूर्ध्वं दशाङ्गुलमतिक्रम्य हृदयं भवतीति सकललोकानुभवसिद्धमेव। तत्र पुरुषस्तिष्ठतीत्यत्र

यमो वैवस्वतो देवो यस्तवैव हृदि स्थितः।

इति मनुवचन [ ८, ९२ ] प्रमाणम्। अत्र सङ्ख्यासुपूर्वस्येत्यनेन (पा ५, ४, १४०) सहस्रपूर्वस्य पादशब्दस्याकारलोपः। तेन सहस्रपादिति भवति। स्पृत्वेति स्पृङ् व्यायाम इत्यस्माद्धातोः क्त्वाप्रत्ययेन रूपम्। सर्वतस्पृत्वेति कस्कादित्वाद्विसर्जनीयस्य सः।

---

१ क—च—त—पुस्तकेषु नास्ति।
२ नरसिंहपु—विष्णुस्तस्य च।
३ का२— पद्मोपरि स्थान ४ ङ— पद्मे विज्ञातरूपी।
४ क—पञ्च।
५ त—संयच्छमानायां।
६ क—सान्निध्यं भवत्विति।

**पुरुष एवेदꣳ सर्वं यद्भूतं यच्च भाव्यम् ।**
**उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ ६८**

[ ऋ स १०, ९०, २ । वा स ३१, २ । का स ३५, २ ]

इदं यत्किञ्चिद्वर्तमानकालीनं तत् सर्वं पुरुष एव क्षेत्रज्ञ एवेत्यर्थः। न केवलं वर्तमानकालीनं पुरुषः यद्भूतं यदतीतकालीनं यच्च भाव्यं यदपि भविष्यत्कालीनं तदपि सर्वं पुरुष एव। एतेन वर्तमानभूतभविष्यत्कालगोचरो भगवानविज्ञतस्वरूपः[१] इति दर्शितम्। न केवलमेवम् उत एवञ्च यत् अन्नेन अदनीयेन भक्तादिना अतिरोहति अतिशयेन जन्म लभते तत् सर्वञ्च पुरुष एव। ये मनुष्यादयो जङ्गमा भक्ताद्याहारेण जन्म लभन्ते ते ये च स्थावरा वृक्षशैलादयो जलसन्तर्पणरूपेणाहारेण जन्म लभन्ते ते सर्वं एव तत्पुरुषस्वरूपा इत्यर्थः। पुनः किम्भूतोऽसौ पुरुषः—अमृतत्वस्य मोक्षस्य ईशानः प्रभुः। मोक्षदाता च स एव पुरुषः[२] इत्यर्थः। अत्राप्यनेन मन्त्रेणाभिमुखीकृत्य[३] भगवानस्मिन् कुशादिमये[४] अस्माभिर्दत्ते आसने उपवेशनं करोत्वित्याशंसा वाक्यार्थः।

**एतावानस्य महिमातो ज्यायांश्च पूरुषः ।**
**पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥ ६९**

[ ऋ स १०, ९०, ३ । वा स ३१, ३ । का स ३५, ३ ]

अस्य पुरुषस्य एतावान् महिमा यत् पूर्वकाण्डिकाद्वयोक्त-सर्वदेशकाल-व्यापित्व-संसारापवर्गप्रभुत्वरूपं नाम। अतः अस्मात् कारणात् पुरुषो ज्याया-महत्तरः[५]। यतोऽयं ज्यायान्[६] अतः पादश्च अस्य विश्वा विश्वानि भूतानि चराचरात्मकाणि पञ्च महाभूतानि। अस्य पुरुषस्य अपरश्च त्रिपात पादत्रयम् ऋग्यजुःसामात्मकं सूर्यस्वरूपम् अमृतं मोक्षद्वारम्। कस्मात्—दिवि सूर्य-मण्डलभेदनद्वारेण गच्छतां मुमुक्षूणां परमात्मनि लयात् तन्मोक्षद्वारमिति भावः। एतेनास्य भगवतो विश्वं पाद इति पादं[७] स्तुत्वा तस्मै पादं दीयते ॥

**त्रिपादूर्ध्व उदैत् पुरुषः पादोऽस्येहाभवत् पुनः ।**
**ततो विष्वङ् व्यक्रामत् साशनानशने अभि ॥ ७०**

[ ऋ स १०, ९०, ४ । वा स ३१, ४ । का स ३५, ४ ]

---

१ क२—भगवान् विश्वरूप।
२ क—एव इत्यधिकम्।
३ क—क१—ख—°मुखीभूय।
४ क—ख—त—प—कुसुमादिमये।
५ प—अनुत्तमः भूयस्तमः।
६ क—ख—पुस्तकयोर्नास्ति।
प—श्रेष्ठ इत्यधिकम्।
७ घ—नास्ति।

अस्य चतुष्पाल्लक्षणस्य पुरुषस्य योऽसौ त्रिपात् पुरुष ऋग्यजुःसामलक्षणो भगवानादित्यः सः अभ्युदैत् अभ्युदितवान्। किम्भूतः—ऊर्ध्वः कर्मबन्धनिबद्धानां[1] स्थावरजङ्गमानामुपरिभूत इत्यर्थः। किञ्च अस्य चतुष्पाल्लक्षणस्य पुरुषस्य यः पादश्चतुर्थोऽंशः स हिरण्यगर्भतया इह जगति अभवत् प्रथमतः सत्तामात्रेणात्मानमकरोत्। इह किम्भूते जगति—साशनानशने भोक्तर्यभोक्तरि च। येषां सुकृतदुष्कृतेऽधिकारस्ते भोक्तारो ब्राह्मणादयो येषामनधिकारस्ते अभोक्तारः कृमिवृक्षप्रभृतयः[2]। तदेवं कर्मणोऽधिकारिण्यनधिकारिणि च जगति अपरः पादो व्यापकतयाऽभवत्। प्रथमं सत्तामात्रेणातिष्ठत्। ततः पुनः तदनन्तरं विष्वङ् सर्वतो व्यक्रामत् व्याप्तवान्[3]। कर्माधिकारिणां कर्मानधिकारिणाञ्च शरीराणि व्याप्यावस्थानमकरोदिति यावत्। अत्र च [4]विषुशब्दपूर्वादञ्चु गतिपूजनयोरित्यस्माद्धातोः क्विप् प्रत्ययेन विष्वङिङति रूपम्। अभ्युदैदित्यत्र साशनानशने अभीत्यत्र व्यवधानस्थितोऽप्यभिरुपसर्गः क्रियया सम्बध्यते व्यवहिताश्चेति (पा १, ४, ८२) पाणिनिवचनात्[5]। अत्र च यो भगवान् त्रिपाल्लक्षणोऽहरहरभ्युदेतीति नित्यातिथिरूपः स्तूयते तस्मै अर्घ्यमनेन दीयते।

**ततो विराडजायत विराजो अधि पूरुषः।**
**स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः॥ ७१**

[ऋ स १०, ९०, ५—तस्माद्विराडजायत। वा स ३१, ५। का स ३५, ५]

ततः पुरुषाद्धिरण्यगर्भात् विराट् अजायत ब्रह्माऽभवदित्यर्थः। अथो अनन्तरं तस्माद्विराजो ब्रह्मणः पुरुषो मनुः अध्यजायत। [6]स मनुः[6] पुरः अग्रे पश्चात् अपि जातः सन् भूमिम् अत्यरिच्यत अतिरिक्तोऽभूत् अधिकोऽभूदिति यावत्। अत्र च भूमिपदं देशोपलक्षणार्थम्। पुरः पश्चादिति कालोपलक्षकम्। एतेन सृष्टौ क्वचिदपि देशे काले च तस्य मनोः पुत्रपौत्रसम्बन्धिभिः[7] प्रतिपन्नोऽग्रे पश्चादपि नाभूदित्यभिप्रायः। अनेन मन्त्रेणाभिमुखीकृत्यास्मद्दत्तमाचमनीयं भगवान् गृह्णात्विति व्याक्यार्थः।

**तस्माद् यज्ञात् सर्वहुतः सम्भृतं पृषदाज्यम्।**
**पशूꣳस्ताꣳश्चक्रे वायव्यानारण्या ग्राम्याश्च ये॥ ७२**

[ऋ स १०, ९०, ८— नारण्यान्। वा स ३१, ६। का स ३५, ६]

---

१ च—कर्मवर्त्मनिबद्धानां।
२ च—वृक्षभूमिप्रभृतयः।
३ च—त—प्राप्तवान्।
४ क—ख—च—विष्वशब्द।
५ क—च—पाणिनिसूत्रस्मरणात्।
६ क—मनुः। ख—समुत्पन्नः।
७ क—च—पुत्रपौत्रसम्बन्धिरिति।

तस्मादिति येन पादेन सकलचराचरात्मकं विश्वमितद्ग्राह्यमिति पादोऽस्येहाभवत् पुनरित्युपरितनकाण्डिकया प्रतिपादितं तस्मात् पुरुषस्य चतुर्थपादात्। किम्भूतात्—सर्वहुतः सर्वहुत्संज्ञयज्ञस्वरूपात्[1] पृषदाज्यं हविः संभृतम् उत्पन्नम्। तत् पृषदाज्यं कर्तृभूतं[2] पशून् चक्रे क्वतवान्। कान् पशून्—ये आरण्या ये ग्राम्याश्च तान्। किम्भूतान्—वायव्यान् वायुदेवत्यान्। अत्रापि पुरुषमभिमुखीकृत्यास्मद्दीयमानं[3] स्नानीयं स भगवान् गृह्णात्वित्याशंसा वाक्यार्थः।

**तस्माद् यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे।**

**छन्दाꣳसि जज्ञिरे तस्माद् यजुस्तस्मादजायत ॥ ७३**

[ ऋ स १०, ९०, ९। वा स ३१, ७। का स ३५, ७ ]

तस्मात् सर्वहुतः सर्वहुत्संज्ञयज्ञस्वरूपात् पुरुषात् ऋचः सामानि जज्ञिरे ऋग्वेदः सामवेदश्च जात इत्यर्थः। तस्मादेव छन्दांसि च गायत्र्युष्णिगादीनि जज्ञिरे जातानि। तस्मादेव यजुर्वेदोऽजायत जात इत्यर्थः। एतेन [4]ब्राह्मणादिवर्णचतुष्टयावरणभूता त्रयी सकलमन्त्राणामाच्छादनभूतं छन्दो भगवत एव समुत्पन्नमित्युक्तं भवति। त्रयी प्रावरणमित्यत्र विष्णुपुराणम् [ ३, १७, ५ द्र: ]

सर्वेषामेव वर्णानां त्रयी प्रावरणं स्मृतम्।

तामुत्सृजन्ति ये मोहात्ते नग्नाः परिकीर्तिताः ॥

छन्दसाञ्च छादनत्वे योगियाज्ञवल्क्यः [ १, ३८ ]

छादनाच्छन्द उद्दिष्टं वाससी इव चाकृतिः।

तदयमभिप्रायः त्वत्त एव भगवत उत्पन्नमाच्छादनं तुभ्यं ददामीति।

**तस्मादश्वा अजायन्त ये के चोभयादतः।**

**गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः ॥ ७४**

[ ऋ स १०, ९०, १०। वा स ३१, ८। का स ३५, ८ ]

तस्मात् सर्वहुतसंज्ञयज्ञस्वरूपात् पुरुषात् अश्वा ये के च उभयादतः उभयतोदन्ताः पशवस्तेऽपि अजायन्त जाताः। तस्मादेव गावश्च जज्ञिरे जाताः। तस्मादेव अजावयश्च जाताः छागा मेषाश्च जाता इत्यर्थः। उभयादत इति अन्येषामपि दृश्यत इति (पा ६, ३, १३७) दीर्घः। गावो ह इति हकारोऽव्ययं समुच्चये। अत्र काण्डिकात्रये यत् किञ्चिद्विराडात्मकं यज्ञसाधकं विध्यर्थवादमन्त्रात्मकास्त्रयो वेदाश्च तत् सर्वं पुरुषोत्तमादेव पुरुषमेधयागस्वरूपाज्जातमिति

---

१ क—यज्ञसंज्ञपुरुषात्।

२ ङ—कर्मभूतं।

३ ज—कृत्वास्मद्दत्तं।

४ क—ब्राह्मणादिजातिचतुष्टया।

वाक्यार्थः। तदत्रापि भगवन्तमभिमुखीकृत्यानेन मन्त्रेण भगवानस्माभिर्दीयमानं यज्ञोपवीतं गृह्णात्विति मन्त्रार्थः।

**तं यज्ञं बर्हिषि प्रौक्षन् पुरुषं जातमग्रतः।**
**तेन देवा अयजन्त साध्या ऋषयश्च ये॥ ७५**

[ऋ स १०, ९०, ७। वा स ३१, ९। का स ३५, ९]

तं पुरुषं यज्ञं यज्ञसाधनभूतं बर्हिषि कुशे संस्थाप्य देवा ब्रह्मप्रभृतयः साध्याः साध्यनामानो गणदेवा ऋषयश्च मरीचिप्रभृतयः प्रौक्षन् प्रोक्षितवन्तः। न केवलं प्रौक्षन् अपि तु तेन पुरुषेण यज्ञसाधनभूतेन अयजन्त यागं कृतवन्तः। अत्र यज्ञशब्देन कार्ये कारणोपचारात् यज्ञसाधनमभिधीयते। प्रोक्षणग्रहणं सकलसंस्कारोपलक्षणार्थम्। एतेनैतदुक्तं भवति[1] तं[2] पुरुषं [3]पृषदाज्यादिरूप-यज्ञसाधनभूतं प्रोक्षणादिसंस्कारैः संस्कृत्य[3] तेन पृषदाज्यादिरूपेण देवादयो यागं कृतवन्तः। अत्राप्यभिमुखीकृत्यास्मद्दत्तं गन्धं स भगवान् गृह्णात्विति मन्त्रार्थः।

**यत् पुरुषं व्यदधुः कतिधा व्यकल्पयन्।**
**मुखं किमस्यासीत् किं बाहू किमूरू पादा उच्येते॥ ७६**

[ऋ स १०, ९०, ११। वा स ३१, १०। का स ३५, १०]

अत्र कण्डिकायां कर्तृपदं न श्रूयते अतस्तदत्र कल्पनीयम्। तत्कल्पने च पूर्वकण्डिकोपात्ता [4]देवादय एवानुषञ्जनीयाः[4]। इयं कण्डिकायोजना। देवादयो यत् प्रोक्षितं पुरुषं[5] व्यदधुः कृतवन्तः। तं कतिधा कतिप्रकारं व्यकल्पयन् विकल्पितवन्तः तस्य कतिधा भेदं कृतवन्त इत्यर्थः। तस्य पुरुषस्य मुखं किमासीत् किं मुखं बभूव+ बाहू किमुच्येते। किमुरू उच्येते। पादौ किमुच्येते। पादा उच्येते इत्यत्र पादौ इत्यस्यावादेशे कृते लोपः शाकल्यस्येति (पा ८, ३, १९) वकारलोपः। वक्ष्यमाणकण्डिकादिभिः पुरुषस्तुतौ आकाङ्क्षा-जनकतया इयमपि कण्डिका[6] स्तुतिरेव। तदनयापि स्तुत्याभिमुखीकृत्यास्मद्दीय-मानं पुष्पं गृह्णात्विति मन्त्रार्थः।

---

१ क—ङ—च—पुस्तकेषु भवतीति नास्ति।
२ क—च—पुस्तकयोर्नास्ति। त—भूतम्।
३ पञ्चांशोऽयं ङ-पुस्तके नास्ति। क—संस्कृते। क२—संस्कृतेन।
४ क—देवादय एवाह सञ्जनीयाः। प—देवादयस्त एवानुसम्बन्धनीयाः।
५ क—च—पशु।
६ क—च—कण्डिकायाः।

**ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः ।**
**ऊरू तदस्य यद्वैश्यः पद्भ्याᳫँ शूद्रो अजायत ॥ ७७**

[ ऋ स १०, ९०, १२ । वा स ३१, ११ । का स ३५, ११ ]

अस्य पुरुषस्य मुखं ब्राह्मण आसीत् बभूव। अस्य बाहू राजन्यः क्षत्रियः कृतः आसीत्। अस्य यदूरू तद्वैश्यः कृतः इति पूर्वेण सम्बन्धः। अस्य पद्भ्यां पादतः शूद्रः अजायत जातवान्। अयमेव पुरुषो ब्राह्मणादिवर्णचतुष्टयजनक इति पुरुषमभिमुखीकृत्यास्मद्दत्तं धूपं गृह्णात्विति मन्त्रार्थः।

**चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत ।**
**श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ॥ ७८**

[ ऋ स १०, ९०, १३ द्वितीयार्धम्—मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत। वा स ३१, १२। का स ३५, १२ ]

अस्येति पूर्वकाण्डिकास्थमत्रापि योज्यम्। तेनास्य पुरुषस्य मनसः सकाशात् चन्द्रमा जातः। चक्षोः चक्षुषः सूर्यः अजायत। श्रोत्रात् कर्णात् वायुश्च प्राणश्च अजायतेत्यनेन सम्बन्धः। मुखादग्निरजायतेति व्यक्तमेव। चन्द्रसूर्य-वायुभ्यो मनश्चक्षुःश्रोत्रप्राणानामुत्पत्तिरिति सामान्येन सृष्टिक्रमः। अत्र त्वचिन्त्य-महिम्नि पुरुषे विपरीतमेतच्चन्द्रसूर्यवायुप्राणानां तस्य पुरुषस्य मनश्चक्षुः-श्रोत्रेभ्य उत्पत्तिरिति पुरुषस्तुतिरेव वाक्यार्थः। यस्य यज्ञपुरुषस्य मुखादग्निः श्रोत्राद्वायुः प्राणश्च चक्षुषः सूर्यो मनसश्चन्द्रमा अभवदिति सर्वतेजसां यो भगवान् कारणं तस्मै सर्वतेजःकारणाय तेजोरूपः प्रदीपोऽनेन मन्त्रेण दीयते। [1]चक्षोरिति वर्णलोपोऽत्र द्रष्टव्यः[1]।

**नाभ्या आसीदन्तरीक्षᳫँ शीर्ष्णो द्यौः समवर्तत ।**
**पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ अकल्पयन् ॥ ७९**

[ ऋ स १०, ९०, १४ । वा स ३१, १३ । का स ३५, १३ ]

नाभ्या नाभितः आसीत् बभूव। किं बभूव—अन्तरिक्षम् आकाशम्। शीर्ष्णः मस्तकात् द्यौः स्वर्गः समवर्तत समभवत्। पद्भ्यां पादतः भूमिः समभवत्। दिशः श्रोत्रात् कर्णात् समभवन्। तथा स एव पुरुषः लोकानपि अकल्पयन् अकल्पयत् देवमनुष्योरगादिनिखिलस्थावरजङ्गमात्मकं त्रैलोक्यमेतत् सृष्टवानित्यर्थः। अकल्पयन्निति वचनव्यत्ययेनैकवचने बहुवचनम्। अनया [2]काण्डिकयाऽभि-मुखीकृत्य नैवेद्यं दीयते।

---

१ सन्दर्भोऽयं—घ—ङ—त—पुस्तकेषु नास्ति। २ ङ—कृत्वाऽभिमुखीकृत्य।

यत् पुरुषेण हविषा देवा यज्ञमतन्वत ।
वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥ ८०

[ ऋ स १०, ९०, ६ । वा स ३१, १४ । का स ३५, १४ ]

पुरुषेण हविषा पशुभूतेन। देवा इत्युपलक्षणम्। साध्या ऋषयश्च। यज्ञमतन्वत कृतवन्तः। अस्य यज्ञस्य वसन्तः ऋतुविशेषः आज्यं घृतमासीत्। ग्रीष्म इध्मः समिद्विशेष आसीत्। शरत् हविः आसीदिति सम्बन्धः। प्रथमत आज्यस्योक्तत्वाद्धविरित्याज्यातिरिक्तं पुरोडाशादि। अस्य मन्त्रस्य स्तावकत्वादञ्जलिकरणं युक्तमेव।

सप्तास्यासन् परिधयस्त्रिः सप्त समिधः कृताः ।
देवा यद् यज्ञं तन्वाना अबध्नन् पुरुषं पशुम् ॥ ८१

[ ऋ स १०, ९०, ११५। वा स ३१, १५ । का स ३५, १५ ]

अस्य यज्ञस्य सप्त समुद्राः परिधयः यज्ञभूवेष्टनानि आसन् भूताः। त्रिः सप्त छन्दांसि समिधः कृताः। सप्त छन्दांसि [1]सप्तातिच्छन्दांसि सप्त व्याहृतयश्च[1] एतान्येकविंशतिच्छन्दांसि समिधः कृताः इत्यर्थः। किम्भूतस्यास्य यज्ञस्य—यत् यं यज्ञं तन्वानाः कुर्वाणा देवा अबध्नन् हतवन्तः। कमबध्नन्—पुरुषं पशुं पशुभूतं पुरुषम्। अत्र सप्त इति सङ्ख्यामात्रं श्रूयते न तु सङ्ख्येयं किञ्चित्। तत्र सङ्ख्येये कल्प्यमाने यज्ञभूमिवेष्टकं तत् कल्पनीयम्। यज्ञभूमिश्च भारतं वर्षं यद्वेष्टकाश्च लवणोदप्रभृतयः[2] सप्त समुद्रा इति त एव कल्पिताः। त्रिः सप्त इत्यत्रापि सङ्ख्येयकल्पनायां छन्दांसि जज्ञिरे तस्मादित्यत्र यज्ञसाधनत्वस्यैकविंशतिच्छन्दसामुक्तत्वात्तेषामेव ग्रहणम्। अयमत्राभिप्रायः[3]—अस्य यज्ञमयस्य विष्णोः सप्त समुद्राः प्रदक्षिणेन वेष्टनद्रव्याणि। तं [4]प्रदक्षिणयतामस्माकं सप्तसमुद्रवेष्टितपृथ्वीप्रदक्षिणफलं भवत्वित्याशंसा वाक्यार्थः।

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥८२

[ ऋ स १०, ९०, १६ । वा स ३१, १६ । का स ३५, १६ ]

---

१ क—ख—ग—सप्तव्याहृतयः।
त—सप्तभिः त्रिकृतयश्च। प—त्रिःकृत्वः।
व—सप्तभिः छन्दांसि संस्कृतयश्च।

२ क—च—लवणादयः।

३ प—अयं मन्त्राभिप्रायः।

४ क—प्रदक्षिणता। त—प—प्रदक्षिणवता।

देवाः इन्द्रादयो यज्ञेन यज्ञसाधनभूतेन पुरुषेण यज्ञं यज्ञपुरुषं पुरुषोत्तमम् अयजन्त पूजितवन्तः। कुतः[1] एतद्दृष्टम्—हिंसात्मकेन[2] कर्मणा पुरुषं पशुं कृत्वा यज्ञः क्रियत इत्यत आह। तानि धर्माणि प्रथमान्यासन्। अत एते देवा एवंरूपेण यज्ञेनेष्ट्वा नाकं सचन्त सङ्गताः। यत्र नाके स्वर्गे पूर्वे साध्यादयो देवा महिमानो महात्मानः सन्ति। अत्र ते ह नाकमित्यत्र हकारश्छान्दसः स्तोभार्थः[3]। सचन्त इति षच समवाये इत्यस्मात् लङ् प्रथमपुरुषबहुवचनम्। बहुलं छन्दस्यमाङ्योगेऽपीति (पा ६, ४, ७५) अडागमनिषेधः। अनया कण्डिकया देवानां स्वर्गो निवासस्थानमिति वासुदेवस्य स्मरणात्[4] स भगवान् अस्माभिः पूजितः सन् स्वस्थानं स्वर्गं पुनर्यात्वित्युद्वासनं मन्त्राभिप्रायः।

इति पुरुषसूक्तमन्त्रव्याख्या।

## अथोत्तरनारायणम्

अस्य चोत्तरनारायणस्य षडर्चस्योत्तर-नारायण ऋषिः पुरुषो देवता आद्यास्तिस्रस्त्रिष्टुभो द्वे अनुष्टुभावन्त्या त्रिष्टुप् सर्वमेधे[5] आदित्योपस्थाने विनियोगः।

**अद्भ्यः संभृतः पृथिव्यै रसाच्च विश्वकर्मणः समवर्त्तताग्रे।**
**तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे॥ ८३**

[वा स ३१, १७। का स ३५, १७]

त्वष्टा आदित्यः अद्भ्यः जलात् पृथिव्यै पृथिवीतोऽपि अग्रे प्रथमं सम्भृतः उत्पन्नः। अत्रापः[6] पृथिवी च पञ्चभूतोपलक्षणार्थाः तेन पञ्चभूतोत्पत्तिपूर्वकाल एव त्वष्टा सम्भूत इत्यर्थः। न केवलं पञ्चभूतेभ्य एव प्रथमं[7] सम्भूतः अपि तु विश्वकर्मणः रसात् इच्छातोऽपि प्रथमं समवर्तत। यदैव विश्वकर्मणो जगन्निर्माणेच्छा

१ ङ—केन।

२ प—हिंसार्थकेन।

३ य ऋगक्षरेभ्योऽधिको न च ते सवर्णः स स्तोभो नामेति मीमांसाभाष्ये (९, २, १९) शबरस्वामी। प्रकृतार्थानन्वितः कालक्षेपमात्रहेतुः शब्दः सामवेदे स्तोभशब्देनोच्यत इति प्रसिद्धम्।

४ विष्णुस्मृतौ (३९, २०)—'दिवि तिष्ठन्ति देवताः' इति पाठो दृश्यते।

५ छ—सूर्यमेधे।

६ क—च—छ—त—प—अत्रापि।

७ छ—पूर्व।

नहि भवति तदैव संभूत: इत्यर्थ:। तस्य आदित्यस्य तत् रूपं मण्डलाकारं मर्त्यस्य आजानं मनुष्याणां सृष्टितोऽपि अग्रे पूर्वं देवत्वं विदधत् धारयत् एति समागच्छतीति ।

**वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ।**
**तमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥ ८४**

[ वा स ३१, १८ । का स ३५, १८ ]

अहम् एतं पुरुषं पुरुषोत्तमं वेद जानामि अस्मदादीनां सर्वेषामेवानुभवसिद्धोऽयमित्यर्थ:। एतं किम्भूतम्—महान्तं सर्वव्यापकम्। पुन: किम्भूतम्—आदित्यवर्णम् आदित्यस्वरूपं ज्योतिर्मयमित्यर्थ:। तथा यथादित्य: स्वप्रकाश: पराण्यपि[1] प्रकाशयति तथायमपि स्वप्रकाशब्रह्मस्वरूपो जगदपि प्रकाशयति। तमस: अविद्यात्मकसंसारस्य परस्तात् परमुत्तीर्णमित्यर्थ:। तमेव पुरुषमेव विदित्वा ज्ञात्वा मृत्युं मरणमति अतिक्रम्य एति गच्छति अपुनरावृत्तये। अयनाय [2]मृत्युमतिक्रम्य गमनाय[2] अन्य: पन्था न विद्यते न तिष्ठति। अयमेव पुरुषो ध्यानगम्यो ज्ञातो मोक्षं ददातीति वाक्यार्थ:।[3]

**प्रजापतिश्चरति गर्भे अन्तरजायमानो बहुधा वि जायते ।**
**तस्य योनिं परि पश्यन्ति धीरास्तस्मिन् ह तस्थुर्भुवनानि विश्वा ॥ ८५**

[ वा स ३१, १९ । का स ३५, १९ ]

प्रजापति: प्रजानां पति: सूर्य: अन्त: चरति प्राणिनां देहमध्ये जीवात्मरूपेण वसतीत्यर्थ:। किम्भूत:—गर्भे अजायमानो नित्यत्वादनुत्पत्तिधर्माऽपि सन् बहुधा विजायते बहुप्रकारस्थावरजङ्गमदेहेषु जन्म लभत इत्यर्थ:। तस्य प्रजापते: योनिम् उत्पत्तिस्थानं धीरा: ब्रह्मविद: परि सर्वतोभावेन पश्यन्ति ध्यानेनोपलभन्त इत्यर्थ:। अस्मिन् प्रजापतौ भुवनानि स्वर्गमर्त्यपातालादीनि तस्थु: स्थितानि आश्रितानि। तानि किम्भूतानि—विश्वा विश्वानि सर्वाणि। हकार: स्तोभार्थ:[4]। विश्वा इति छान्दसो निर्लोप:।

---

१ छ—परान्।

२ त—अनागमनाय।

३ क-खेत्यादिसङ्केतितानां बहूनां ग्रन्थानां लेखका अनायेति पाठं हलायुधगृहीतं मन्यमाना 'अनायेत्यत्र वर्णागमो वर्णविपर्ययश्चेति यकारलोप' इति टीकाग्रन्थमयोजयन्। हलायुधव्याख्यानुसारिणी मत्सम्पादित-मन्त्रार्थदीपिका द्रष्टव्या।

४ क—च—स्तोभनार्थ:। छ—स्तोत्रार्थ:। प—छान्दस:।

यो देवेभ्य आ तपति यो देवानां पुरोहितः ।
पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये ॥ ८६

[ वा स ३१, २० । का स ३५, २० ]

यः सूर्य आतपति आ समन्तात् कारेण[1] तपति । किमर्थम्—देवेभ्यः देवानां प्रयोजनेन । उदिते ह्यादित्ये देवकर्मस्वधिकारो भवति । यो देवानां पुरोहितः पुरः अग्रे हितः आहितः देवानां हविर्दानाय प्रथममग्निरूपेणा-धीयत[2] इत्यभिप्रायमेतत् । यो देवेभ्यः सकाशात् पूर्वो जातः उत्पन्नः । अदितेर्द्वादशात्मा[3] आदित्यः प्रथममुत्पन्न इत्यभिप्रायः । स्थानत्रये [4]यच्छब्द-दर्शनात्तस्मै नम इति योज्यम् । किम्भूताय—रुचाय रोचमानाय । पुनः किम्भूताय—ब्राह्मये ब्रह्मणोऽपत्यं ब्राह्मिस्तस्मै परब्रह्मसम्भूतायेत्यर्थः ।

रुचं ब्राह्मं जनयन्तो देवा अग्रे तदब्रुवन् ।
यस्त्वैवं ब्राह्मणो विद्यात्तस्य देवा असन् वशे ॥ ८७

[ वा स ३१, २१, । का स ३५, २१ ]

देवा ब्रह्मादयो जनयन्तः स्वयमुत्पद्यमानाः तत् ब्राह्मं ब्रह्मणो जातं रुचं प्रकाशरूपमादित्यम् अग्रे प्रथमम् अब्रुवन् उक्तवन्तः । इदमेवास्माकं प्रथमं [5]मुख्यमितुरुक्तवन्तः । हे पुरुषोत्तम त्वा त्वाम् एवम् अनेनाध्यायेन[6] उक्तस्वरूपं यः ब्राह्मणो विद्यात् जानाति तस्य ब्राह्मणस्य वशे इच्छायां देवा असन् भवन्ति । सहस्रशीर्षाध्यायं ग्रन्थतोऽर्थतश्चाधीत्य यो ब्राह्मणः पुरुषोत्तमं जानाति तस्य देवा ब्रह्मादयोऽभिलषितानि सम्पादयन्तीति वाक्यार्थः ।

श्रीश्च ते लक्ष्मीश्च पत्न्या अहोरात्रे पार्श्वे
नक्षत्राणि रूपमश्विनौ व्यात्तम् ।
इष्णन्निषाणामुं म इषाण
सर्वलोकं म इषाण ॥ ८८

[ वा स ३१, २२ । का स ३५, २२ ]

---

१ ख—प्रकारेण ।
२ क— रूपोधीयत । त—प—°रूपेणाभिधीयत ।
३ क—आदित्य द्वादशात्मा । प—आदित्याद ।
४ प—यच्छब्दश्रवणात्तस्मै ।
५ ङ—मुखमितुः । प—मुख्यं स्यादितु° ।
६ ङ—च—प—अनेन ध्यानेन ।

त्रिष्टुप्। हे पुरुषोत्तम ते तव श्रीश्च लक्ष्मीश्च। श्रीः धनदानं[1] यद्वशात् पुरुषोऽनुजीविनामाश्रयणीयो भवति। लक्ष्मीः धनं यद्वशात् पुरुषः सर्वलोकस्य लक्ष्यो दर्शनीयो भवति। ते श्रीलक्ष्म्यौ पत्न्यौ सहचारिण्यौ त्वां न त्यजत इत्यर्थः। एकेनैव चकारेण समुच्चये प्राप्ते चकारद्वयग्रहणेन तुल्यप्रधानता प्रतिपादिता। अहोरात्रे पार्श्वे अहश्च रात्रिश्च पार्श्वद्वयम्। अहःशब्दः परब्रह्मपरः[2] तस्य विद्यात्मकत्वेन प्रकाशरूपत्वात्। रात्रिशब्दश्च संसारपरः तस्याविद्यात्मकत्वेनाप्रकाशकत्वात्। एतेन धर्मार्थकामात्मकः संसारो मोक्षश्च[3] श्रीपुरुषोत्तमस्य पार्श्वद्वयमित्युक्तं भवति। नक्षत्राणि तारागणो रूपं मूर्तिरित्यर्थः। अश्विनौ द्यावापृथिव्यौ एतद् द्वयं तव व्यात्तं विवृतं मुखमित्यर्थः। यथा श्रुतिः (श ब्रा ४, १, ५, १६)—इमे हीदं सर्वं व्यश्नुवाताम्[4]। एवम्भूतं पुरुषोत्तमं त्वां याचे। इष्णन् इच्छन्तं सकामम् इषाण इच्छ। न केवलमेवम्। मे मम अमुम् इहलोकमिषाण। मे मम सर्वं लोकं भूरादिसत्यान्तं लोकसप्तकमिषाण। अयं वाक्यार्थः। यः कश्चिद् यत् किञ्चित् स्वर्गपुत्रादिकं कामयमानोऽनेन सहस्रशीर्षाध्यायेन त्वां स्तौति पूजयत्युपतिष्ठते तमिच्छ। ममापि पुत्रधनपश्वादियुक्तमिहलोकमिच्छ। परलोकमपि स्वर्गमोक्षात्मकमिच्छ। तव चेच्छामात्रेणैव सर्वं संपद्यते सत्येच्छत्वादित्यभिप्रायः। अत्र पत्न्या अहोरात्रे इति पत्न्यौ अहोरात्रे इति स्थिते आवादेशे कृते लोपः शाकल्यस्येति (पा ८, ३, १९) वकारलोपः। इष्णन्निति इषु इच्छायामित्यस्य धातोः शप्रत्यये कृते शत्रा रूपम्। द्वितीयार्थे प्रथमा। इषाण इति तस्यैव धातोर्लोट्सिपि श्नाप्रत्यये कृते शत्रा हलः श्नः शानज्झाविति (पा ३, १, ८३) शानजादेशे रूपम्[5]।

इत्युत्तरनारायणम्।

इत्यावसथिक-धर्माधिकृत-हलायुधकृतौ ब्राह्मणसर्वस्वे सहस्रशीर्षाध्यायव्याख्या ॥

---

१ प—धनदारं।

२ ख— ब्रह्मस्वरूपः। घ—°ब्रह्मवाचकः।
छ—परमब्रह्मपरः। प—परब्रह्मरूपः।

३ छ—मोक्षकश्च।

४ क—व्यश्नवताम्। च—व्यश्नवताम्।
प—व्यस्नुवताम्। शतपथ ब्रा— मश्नुवाताम्।

५ छ—ग्रयमंशो नास्ति।

## अथ त्र्यम्बकमन्त्रेण शिवपूजा

तत्र त्र्यम्बकमन्त्रस्य माहात्म्यम्

लिङ्गपुराणोपरिभागे [ उत्तरार्ध, ५४ अ, १-४ ; १३-३५ ]

त्रियम्बकेण[1] मन्त्रेण देवदेवं त्रियम्बकम् ।
पूजयेद्बाणलिङ्गे वा स्वयम्भूतेऽपि[2] वा पुनः ।
[3]आर्षे वा देवके वाऽपि[3] यथावदनुपूर्वशः ॥
अष्टोत्तरसहस्रेण पुण्डरीकेण शङ्करम् ।
कमलेन सहस्रेण तथा नीलोत्पलेन च ॥
संपूज्य पायसं दत्त्वा [4]घृतं चैवौदनं[4] पुनः ।
मुद्गान्नं[5] मधुना युक्तं भक्ष्याणि सुरभीणि च ॥
देवं संपूज्य [6]विधिना जपेत्[6] मन्त्रं त्रियम्बकम् ।
मुच्यते सर्वपापैश्च सप्तजन्मकृतैरपि ।
संग्रामे विजयं लब्ध्वा सौभाग्यमतुलं लभेत् ॥
लक्षहोमेन राज्यार्थी राज्यं [7]लब्ध्वा सुखी भवेत् ।
पुत्रार्थी पुत्रमाप्नोति नियुतेन न संशयः ॥
[8]धनार्थी प्रयुतेनैव जपेनैव न संशयः ।
धनधान्यादिभिः सर्वैः सम्पूर्णः सर्वमङ्गलैः ॥
क्रीडते[9] पुत्रपौत्रैश्च मृतः स्वर्गे च जायते ।
नानेन सदृशो मन्त्रो लोके वेदे च सुव्रताः ॥
तस्मात्त्रियम्बकं देवं तेन[10] नित्यं प्रपूजयेत् ।
अग्निष्टोमस्य यज्ञस्य फलमष्टगुणं लभेत्[11] ॥
त्रयाणामपि लोकानां गुणानामपि यः प्रभुः ।
वेदानामपि देवानां ब्रह्मक्षत्रविशामपि ॥
अकारोकारमकाराणां[12] मन्त्राणामपि[13] वाचकः ।
तथा [14]सूर्यस्य सोमस्य[14] वह्नेरपि[15] त्रयस्य च ॥

---

१ ङ—छ—त्रैयम्बकेन । ट—त्रियम्बकेन ।
२ छ—स्वयम्भूतेन ।
३ क—आर्षे वा वैदिके° । त—आर्षे वा दैविके° । लिङ्गपु—आयुर्वेदविदैर्वापि ।
४ छ—घृतञ्चैवौदकं । लिङ्गपु—सघृतं चौदनं ।
५ क१—सुगन्धं । प—अभग्नं ।
६ छ—विधिवज्जपन् ।
७ छ—प्राप्य ।
८ छ—धर्मार्थी ।
९ छ—क्रीडयेत् ।
१० क—क१—नरो ।
११ छ—भवेत् ।
१२ ङ—अकारोकाराणां । प—अकारोकारकाराणां ।
१३ लिङ्गपु—मात्राणामपि ।
१४ छ—सोमस्य सूर्यस्य ।
१५ क२—छ—प—°रपि° ।

[1]अम्बा उमा महादेवस्त्र्यम्बकस्तु[1] त्रियम्बकः ।
संपुष्पितस्य[2] वृक्षस्य यथा गन्धः सुशोभनः ॥
वाति[3] दूरात्तथा तस्य गन्धः शम्भोर्महात्मनः ।
तस्मात् सुगन्धो भगवान् गां[4] धारयति शङ्करः ॥
गान्धारश्च महादेवो देवानामपि लीलया ।
सुगन्धस्तस्य लोकेऽस्मिन् वायुर्वाति नभस्तले ॥
तस्मात् सुगन्धितं[5] देवं सुगन्धिं पुष्टिवर्धनम् ।
यस्य रेतः पुरा शम्भोर्हरेर्योनौ प्रतिष्ठितम् ॥
तस्य वीर्यमभूदण्डं [6]हिरण्यजमजोद्भवम्[6] ।
चन्द्रादित्यौ सनक्षत्रौ भूर्भुवः स्वर्जनस्तपः[7] ॥
सत्यलोकमतिक्रम्य पुष्टिर्वीर्यस्य तस्य वै ।
पञ्चभूतान्यहङ्कारो बुद्धिः प्रकृतिरेव च ॥
पुष्टिर्वीर्यस्य तस्यैव तस्माद्वै पुष्टिवर्धनः ।
तं पुष्टिवर्धनं देवं घृतेन [8]पयसा तथा[8] ॥
मधुना यवगोधूममाषबिल्वफलेन च ।
कुसुमार्कशमीपत्रगौरसार्षपशालिभिः ॥
हुत्वा[9] लिङ्गे यथान्यायं भक्त्या देवं यजामहे ।
कृतेनानेन[10] मां [11]पापाद्बन्धनात् कर्मयोगतः ॥
मृत्योश्च बन्धनाच्चैव मुञ्चोय तव[12] तेजसा ।
उर्वारुकाणां पक्वानां यथा कालादभूत्[13] पुनः ॥
तथैव कालसंप्राप्तो[14] मन्त्रेणानेन[15] यत्नतः ।
एवं मन्त्रविधिं ज्ञात्वा शिवलिङ्गं समर्चयेत् ॥

---

१ ङ—आद्या उमा महादेवी त्वम्बिकास्तु ।
  क१—छ—आद्या उमा महादेवी त्र्यम्बकस्तु ।
  प—आद्या उमा महादेवस्त्र्यम्बकस्तु ।
२ क—संपुष्टितस्य । ङ—सुपुष्टितस्य ।
३ आदर्शपुस्तकेषु—अति । तै आ १०, ९ द्रः ।
४ ङ—त—गं ।
५ प—सुगन्धिस्थं । लिङ्गपु—सुगन्धिस्तं ।
६ लिङ्गपु—हिरण्मय । छ—हिरण्यं च अलीहम् ।
७ लिङ्गपु—स्वर्महस्तपः ।
८ ङ—छ—पयसापि वा ।
९ छ—ज्ञात्वा ।
१० ङ—कृतेना° । छ—त—कृर्येणा° ।
११ क—पाशाद् । ङ—छ—प्राणाद् ।
१२ त—लिङ्गपु—भव ।
१३ त—फलादभूत् । प—कायादभूत् ।
१४ त—°सम्प्राप्तौ ।
१५ लिङ्गपु—मनुनानेन ।

तस्य [1]पापक्षयोऽतीव भोगिनो[2] मृत्युनिग्रहः ।
त्रियम्बकसमो नास्ति देवो [3]वा घृणयाऽन्वितः[3] ॥
प्रसादशील: प्रीतश्च तथा मन्त्रोऽपि[4] सुव्रताः ।
तस्मात् सर्वं परित्यज्य त्रियम्बकमुमापतिम् ॥
त्रियम्बकेण मन्त्रेण पूजयेत् सुसमाहितः ।
सर्वावस्थां गतो वापि युक्तो वा सर्वपातकैः ॥
शिवध्यानान्न सन्देहो यथा रुद्रस्तथा स्वयम् ।
हत्वा भित्त्वा च भूतानि भुक्त्वा चान्यायतोऽपि[5] वा ॥
शिवमेकं सकृत् स्मृत्वा सर्वपापैः प्रमुच्यते ॥

तथा विष्णुधर्मोत्तरीयद्वितीयकाण्डे ऋग्विधानम् [ २ख, १२४, ८०-८१ ]

त्रिरात्रं नियतोपोष्य[6] श्रपयेत् पायसञ्चरुम् ।
तेनाहुतिशतं पूर्णं जुहुयात्त्र्यम्बकेत्यृचा ॥
समुद्दिश्य महादेवं जीवेदब्दशतं सुखी ॥

तत्र त्र्यम्बकमन्त्रस्य वसिष्ठ ऋषिरनुष्टुप् छन्दस्त्र्यम्बको देवता चातुर्मास्य-त्र्यम्बकेष्ट्यामग्निपरिक्रमणे विनियोगः ( का श्रौ ५, १०, १४ ) ।

**त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।**
**उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥ ८९**

[ ऋ स ७, ५९, १२ । वा स ३, ६० । का स ३, ९८ ]

[7]त्र्यम्बकं महेश्वरं वयं यजामहे पूजयामः । किम्भूतम्—सुगन्धिं शोभनो गन्धो यस्येति सुगन्धिस्तं पुष्टिवर्धनम् पुष्टिरुपचयस्तस्य वर्धयितारम् । यजामह इति दर्शनाद् वयमिति कर्तृपदमध्याह्रियते । उत्तरार्धे च कर्तृपदं कर्मपदञ्च न श्रूयते । अतस्तदुभयकल्पने पूर्वार्धप्राप्तमेव द्वयं विपरिणमय्य योज्यम् । तथा च स त्र्यम्बकोऽस्मान् मुक्षीय मुक्तान् करोतु । कुतः—मृत्योर्मरणात् । मृत्युना चात्र मृत्युजन्मलक्षणः संसार उपलक्षितः । संसारान्मुक्तान् करोत्वित्यर्थः । कमिव कुतः—उर्वारुकमिव बन्धनात् । उर्वारुकं कर्कटीफलं यथा बन्धनाद्विमुक्तं[8]

---

१ क—पापक्षयो° । छ—°क्षयस्तावच्छोगेन ।
२ विष्णुपु—योगिनो ।
३ ख—वा कृपयान्वितः । क—भक्तदयान्वितः ।
४ प—मन्त्रेऽपि ।
५ प—छ—चान्यायतोऽपि । ख—चाप्रियतोऽपि ।
६ सर्वेषु मातृकान्येषु मुद्रिते विष्णुधर्मोत्तरे चैवमेव पाठः । शौनकीय ऋग्विधाने ( २, १४८ ) त्रिरात्रं नियतोऽनश्नन्नित्येवमादिं कृत्वा वचनमिद-मुपलभ्यते ।
७ ख—क—छ—पुस्तकेषु इतः प्राक् त्रियम्बक-मित्यधिकम् ।
८ क—का१ ' ' विमुक्तं ।

पुनर्न संयुज्यते तथा वयमपि संसारान्मोचिताः पुनः संसारं न प्रविशाम इत्यभिप्रायः। मामृतात् अमृतात्[1] मोक्षाख्यपुरुषार्थात्[2] मा मुक्षीय न मोचय। अत्र मुक्षीय इति मुचेराशिषि लिङ्यात्मनेपदोत्तमपुरुषैकवचनस्य इटोऽत् (पा ३, ४, १०६) इत्यदादेशे कृते सीयुडागमे रूपम्। तिङां तिङेति प्रथमपुरुषस्थाने उत्तमपुरुषः।

तथा कुमारीणां विशिष्टपतिलाभकामनया स्त्रीणाञ्च सौभाग्यकामनया द्वितीयत्र्यम्बकमन्त्रेण शिवपूजायां कात्यायनः [ श्रौ सू ५, १०, १५ ]

कुमार्यश्चोत्तरेणोभयत्र पतिकामा भगकामा वेति।

ऋष्यादिकं पूर्ववत् विनियोगस्तु कुमार्या अग्निपरिक्रमणे।

तत्रोत्तरत्र्यम्बकमन्त्रो यथा

**त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम्।**
**उर्वारुकमिव बन्धनादितो मुक्षीय माऽमुतः॥ ६०**

[ वा स ३, ६०। का स ३, ६९ ]

पतिवेदनमिति पतिरीश्वरस्तस्य वेदनं प्रापणं येन [3]तं पतिवेदनम्[3]। त्र्यम्बकस्यैव जन्मान्तरादिषु पूजादिभिराराधितस्य प्रसादेन त्र्यम्बक ईश्वरः प्राप्यत इत्यभिप्रायः। इतो मुक्षीय मामुत इति इतः संसारात् मुक्षीय मा अमुतो मोक्षात्। अपरञ्च सर्वं समानम्।

इति शिवपूजा।

## अथ चण्डीपूजा[4]

तत्र अम्बे अम्बिकेऽम्बालिके इत्यादि मन्त्रव्याख्या।

प्रजापतिर्ऋषिरश्वो देवता अनुष्टुप् छन्दोऽश्वमेधे पत्नीवाचने विनियोगः। अस्य मन्त्रस्याश्वमेधे पत्नीवाचने विनियोगे सत्यपि मन्त्रलिङ्गाच्चण्डिकापूजायां विनियोग उच्यते[5]।

---

१ छ—नास्ति।

२ छ— पुरुषात्।

३ छ—नास्ति।

४ क—क१—चण्डिकापूजायाम्।

५ मन्त्रोऽयमश्वमेधे वाजिसमीपं गच्छन्तीनां यजमानपत्नीनां परस्परसंवादपर इत्यम्बेत्यादीनि त्रीणि नारीविशेषनामानीति तथाऽश्वकशब्दः पशुबोधक इत्युवटादिभिर्व्याख्यायते। इत्याद्युभयव्याख्यानमपूर्वमेतत् पुराणवचनमवादि। बृहन्मार्कण्डेयपुराणे (वङ्गीयसाहित्यपरिषद्ग्रन्थागाररक्षिते 'पुराण ३१३'-संख्यके हस्तलिखितपुस्तके) मन्त्रोऽयं देवीसूक्तनाम्नाभिहितः। तदेतस्यार्थश्चेत्थं दर्शितः।—

कापि स्त्री पतिलाभाय देवीं संस्तौति नामभिः।
अम्बे अम्बिकेऽम्बालिके भक्त्या सम्बोधनत्रयम्॥
... ... ..
अतोऽहं पूजयामि त्वां मम मां पत्युरक्षिकाम्। इति।

अम्बे अम्बिकेऽम्बालिके न मा नयति कश्चन ।
ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम् ॥ ९१

[ वा स २३, १८ । का स २५, १० ]

अम्बा अम्बिका अम्बालिका इति दुर्गानामानि । हे अम्बे हे अम्बिके हे अम्बालिके मा मां कश्चन कश्चिदपि न नयति न प्रापयति स्वामिनं प्रतीति बोद्धव्यम् । तथा च सति अश्वकः ससस्ति अश्वशब्दः स्वामिवचनः । ककारः कुत्सायाम् । कुस्वामीत्यर्थः । ससस्ति शेते । किं कृत्वा—सुभद्रिकां परिगृह्य । परिगृह्येत्यध्याह्रियते साकाङ्क्षत्वात् । सुशोभना चासौ भद्रा चेति सुभद्रा कुत्सिता सुभद्रा सुभद्रिका ताम् । उभयोरपि कुत्सायां कारणमीर्ष्या[1] । किम्भूताम्—काम्पीलवासिनीम् । काम्पीलो नगरविशेषस्तत्र वसतीति[2] काम्पीलवासिनी ताम् । काम्पीले हि सुरूपाः सुभगा विनीताश्च स्त्रियो भवन्ति । अत्र ससस्तीति[3] षस स्वप्ने इत्यस्य धातो रूपम् । अयं वाक्यार्थः—अनेन मन्त्रेण सौभाग्यकामया स्त्रिया भगवती[4] पूज्यते । हे अम्बे इत्यादिभिः दुर्गां सम्बोध्य कश्चिदपि मां स्वामिसमीपं न नयति मया विना मदीयः स्वामी अन्यां गृहीत्वा शेते अतो मया पूजिता भगवती मां स्वामियुक्तां करोत्वित्यभिप्रायः ।

इति चण्डीपूजामन्त्रव्याख्या ।

इत्यावसथिक-महाधर्माधिकृत-हलायुधकृतौ ब्राह्मणसर्वस्वे सूर्य-विष्णु-शिव-चण्डी-मन्त्रव्याख्या ॥

## अथ निरग्नेर्वैश्वदेवः

तत्र छन्दोगपरिशिष्टम् [ २, ३, १ ]

पञ्चानामथ मन्त्राणां महतामुच्यते विधिः ।
यैरिष्ट्वा[5] सततं विप्रः [6]प्राप्नुयाद् ब्रह्म[6] शाश्वतम् ॥

याज्ञवल्क्यः [ ३, ३१० ]

वेदाभ्यासरतं शान्तं[7] महायज्ञक्रियापरम् ।
न स्पृशन्तीह पापानि महापातकजान्यपि ॥

---

१ क—ककारमिष्यते । ख—ककार इष्यते ।
२ ख—वसतिर्यस्याः सा ।
३ उवट-महीधरादिव्याख्यास्वपि ससस्तीत्येकपदम् ।
क—पुस्तकेऽत्र स उपपदे इत्यधिकम् ।
४ क—ख—देवी ।
५ ख—तैरिष्ट्वा ।
६ छन्दोगप—प्राप्नुयात् सद्म ।
७ क—ख—क्षान्तं । ख—दान्तं ।

[ छन्दोगपरिशिष्टम् २, ३, २-४ ]

देवभूतपितृब्रह्ममनुष्याणामनुक्रमात्।
[1]महासत्राणि जानीयादेत एव महामखाः[1] ॥
अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥
श्राद्धं वा पितृयज्ञः स्यात् पित्र्यो बलिरथापि वा।

मनुः [ ३, ६८-६९ ]

पञ्च सूना गृहस्थस्य चुल्ली पेषण्युपस्करः।
कण्डनी चोदकुम्भश्च बध्यते यास्तु वाहयन् ॥
तासां क्रमेण सर्वासां निष्कृत्यर्थं महर्षिभिः।
पञ्च क्लृप्ता महायज्ञाः प्रत्यहं गृहमेधिनाम् ॥

मनुविष्णुयमदेवलाः [ मनु ३, ७१-७२। विष्णु ५९, २६ ]

पञ्चैतान् यो महायज्ञान्न हापयति शक्तितः।
स गृहेऽपि वसन्नित्यं सूनादोषैर्न लिप्यते ॥
देवतातिथिभृत्यानां पितॄणामात्मनश्च यः।
न [2]निर्वपति पञ्चानामुच्छ्वसन्न[2] स जीवति ॥

यमः देवताभ्यः पितृभ्यश्च बलिर्भूतेभ्य एव च।
[3]वैश्वदेवं हि नामैतत्[3] सायं प्रातर्विधीयते।

अत्र वैश्वदेवसमभिव्याहारात् प्रातःशब्दो मध्याह्नवचनः।

सर्वमेतद् यथाशक्ति निर्वपेद्विधिपूर्वकम्।
एवं युक्तो जयेत् स्वर्गं गृहस्थो नात्र संशयः ॥[4]

छन्दोगपरिशिष्टम् [ २, ३, १० ]

सायं प्रातर्वैश्वदेवः कर्तव्यो बलिकर्म च।
अनश्नतापि सततमन्यथा किल्बिषी भवेत् ॥

व्यासः आपद्यपि च कष्टायां पञ्चयज्ञान्न हापयेत्।
स्वर्गापवर्गयोः प्राप्तिं [5]महायज्ञैः प्रचक्षते[5] ॥

---

१ छ—महामन्त्राणि जानीयात्त एव हि महामखाः।
२ छ—निवर्तन्ति या चाग्निमुच्छ्वसन्न।
३ न—वैश्वदेवबलिर्नाम।
४ कृत्यकल्पतरौ ( नियतकालकाण्ड, १५८ पृः ) यमवचनत्वेन धृतमेतत्।
५ प—महापापैः प्रमुच्यते।

कूर्मपुराणम् [ उ १८, ११९ ]

अकृत्वा तु हि यः पञ्च महायज्ञान् द्विजोत्तमाः ।
भुञ्जीत चेह मूढात्मा तिर्यग्योनिं स गच्छति ॥

वराहपुराणे मतङ्गं प्रति धर्मव्याधवाक्यम् [ वराहपु ८, ३१-३३ ]

दैवो भौतस्तथा पैत्रो मानुषो ब्राह्म एव च ।
एते पञ्च महायज्ञा ब्रह्मणा निर्मिताः पुरा ॥
ब्राह्मणानां हितार्थाय इतरेषान्तु तन्मखाः[1] ।
क्षत्रादीनान्तु वर्णानां ब्राह्मणैः कारिताः शुभाः ॥
एवं कृत्वा जङ्गमात्वं[2] स्थावरात्वं[3] च शुध्यति ।
अन्यथा व्रीहयोऽप्येते[4] एकैका मृगपक्षिणः ॥
मतङ्ग दात्रभोक्तृणां वृथामांसन्तु तत् स्मृतम् ।

तत्र वैश्वदेवानुष्ठाने[5] छन्दोगपरिशिष्टम् [ २, ४, ४ ]

अग्न्यादिर्गौतमेनोक्तो होमः शाकल एव च ।
अनाहिताग्नेरेवैष[6] युज्यते[7] बलिभिः[8] सह ॥

तथा गौतमः [ गौ ध सू ५, ११ ]

अग्नावग्निर्धन्वन्तरिर्विश्वेदेवाः प्रजापतिः स्विष्टकृदिति होमाः ।

योगियाज्ञवल्क्यः[9]

अन्नं व्याहृतिभिर्हुत्वा तथा मन्त्रैश्च शाकलैः ।
भूतेभ्यश्च बलिं दत्त्वा ततोऽश्नीयादनग्निमान्[10] ॥

कात्यायनः क्रव्यादमग्निं मन्त्रेण संस्कृताग्नावनग्निमान् ।
वैश्वदेवं ततः कृत्वा जुहुयाच्छाकलेन तु[11] ॥

एतदेव वचनद्वयं मूलमुपदर्श्य निरग्निभिर्वाजसनेयिभिरनुष्ठात्र-परम्परयाऽनुष्ठीयमानस्य[12] वैश्वदेवस्य मन्त्रा व्याख्यायन्ते। तत्र पञ्चभू-

---

१ क—तद्यथा। घ—प—तन्मुखाः।
छ—न—तन्मुखात्।
२ क—जङ्गमत्वं। न—प—जङ्गमार्थं।
३ क—स्थावरत्व। न—प—स्थावरार्थं।
४ छ—व्रीहयस्ते हि।
५ क—छ—न—वैश्वदेवासदाने।
प—वैश्वदेवार्थव्याख्याने।
६ प—°रप्येष।
७ प—उच्यते।
८ क—पिवृभिः।
९ वीरमित्रोदये ( आह्निक ४११ ) वचनमिदमग्नि-पुराणनाम्नोद्धृतं कर्मप्रदीपटीकाभूते परि-शिष्टप्रकाशे (२, ४, ४—१६ पृः) वीरमित्रोदये च प्रसङ्गान्तरे ( आह्निक ४१६ ) प्रणवपरिशिष्ट-नाम्ना। वह्निपुराणे ( १६ ख पत्रे ) इदमुप-लभ्यते न तु मुद्रित-योगियाज्ञवल्क्ये।
१० प—वीरमि—°वनग्निकः।
११ क—त—°च्छाकलानि तु।
घ—°च्छाकलादिभिः। छ— शाकलानि च।
१२ क—विधीयमानस्य। छ—क्रियमाणस्य।

संस्कारान्[1] कृत्वा आत्मदक्षिणेऽग्निमुपस्थाप्य ज्वलत्कुशेन क्रव्यादांशं त्यजे-दनेन मन्त्रेण

**क्रव्यादमग्निं प्र हिणोमि दूरं यमराज्यं गच्छतु रिप्रवाहः ।**
**इहैवायमितरो जातवेदा देवेभ्यो हव्यं वहतु प्रजानन् ॥ ९२**

[ ऋ स १०, १६, ९—यमराज्ञो । वा स ३५, १९ । का स ३५, ५२ ]

प्रजापतिर्ऋषिरग्निर्देवता त्रिष्टुप् छन्दोऽग्निसंस्कारे विनियोगः ।

अग्निं प्रहिणोमि प्रस्थापयामि । किम्भूतम्—दूरम् लोकान्तरप्रापकम् । पुनः किम्भूतम्—क्रव्यादम् मांसादम् । असौ मानुषानन्तुमभिलषतीत्यमङ्गल्यत्वाद् यमराज्यं गच्छतु यमस्याधिकारं यातु । किम्भूतः—रिप्रवाहः रिप्रं पापं वहति प्रापयतीति रिप्रवाहः । अयमितरः क्रव्यादादन्यो जातवेदाः जात-ज्ञानोऽग्निः इहैव गृह एव हव्यं वहतु प्रापयतु । केभ्यः—देवेभ्यः । किम्भूतः—प्रजानन् स्वीयमधिकारं जानन्नित्यर्थः । अत्र क्रव्यादममङ्गल्यमग्निं दूरं प्रेषयाम्यसौ यमराज्यं गच्छत्वित्यग्नेः प्रस्थापनं पूर्वार्धस्य वाक्यार्थः । अयमितरो मङ्गल्य इह मदीये गृह एव वैश्वदेवे स्वीयमधिकारं जानन् देवेभ्यो हविः[2] प्रापयत्वि-त्याशंसा[3] उत्तरार्धस्य वाक्यार्थः । अनेन मन्त्रेण क्रव्यादांशं परित्यज्य संस्कृतस्थानेऽनुष्ठातृपरम्परानुष्ठानप्रामाण्यादग्न्यारोपणं[4] परिस्तरणकुशप्रदानञ्च कर-णीयम् ।

तत्राग्न्यारोपणमन्त्रो यथा

**अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः ।**
**तं जानन्नग्न आ रोहाथा नो वर्धया रयिम् ॥ ९३**

[ ऋ स ३, २९, १०—आ रोहाथा नो । वा स ३, १४ । का स ३, २० ]

प्रजापतिर्ऋषिरनुष्टुप् छन्दोऽग्न्युपस्थापने[5] विनियोगः ।

काष्ठमभिप्रेत्य—हे अग्ने ते तव अयं योनिः उत्पत्तिस्थानम् । किम्भूतः—ऋत्वियः ऋतौ ऋतौ प्राप्यः[6] सर्वकालीन इत्यर्थः । यतः यस्माद्योनेः जातः उत्पन्नः सन् अरोचथाः दीप्तो भवसि तं योनिम् आरोह तस्मिन्[7] योनौ काष्ठे

---

१ च—पुस्तके "सम्मार्जनोपलेपनाभ्युक्षणरेखा-करणोद्धरणञ्चे"ति अधिकं लभ्यते ।

२ क—च—हव्यं ।

३ क—च—वहत्वित्याशंसा ।

४ छ—°प्रमाणादग्न्यारोपणम् ।

५ छ—°छन्दोऽग्निर्देवता ऋषयोऽपि अग्न्युपस्थाने ।

६ प—प्राप्तः ।

७ त—प—अस्मिन् ।

आरूढ़ो भव। किं कुर्वन्—जानन् विद्वान्। अथ अनन्तरं नः अस्माकं रयिं धनं वर्धय वृद्धियुक्तं कुरु इत्याशंसा मन्त्रार्थः। अनेनैव मन्त्रेण गार्हपत्याहवनीयाग्न्योररण्योः[१] समारोपणञ्च क्रियते। अत्र अथा वर्धया इत्यत्र द्वयेऽपि आकारः पदे न पठ्यते। अनेनाग्निमारोप्याग्नेः पूर्वे उदगग्रं परिस्तरणकुशं दद्यात्।

तत्र परिस्तरणकुशमन्त्रा यथा

अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्।
होतारं रत्नधातमम्॥ ९४

[ऋ स १, १, १। तै. स ४, ३, १३, ३]

इषे त्वोर्जे त्वा वायव स्थ।
देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे॥ ९५

[वा स, का स १, १]

अग्न आ याहि वीतये गृणानो हव्यदातये।
नि होता सत्सि बर्हिषि॥ ९६

[ऋ स ६, १६, १०। सा स १, १]

शन्नो देवीरभिष्टय आपो भवन्तु पीतये।
शंयोरभि स्रवन्तु नः॥ ९७

[ऋ स १०, ९, ४—रभिष्टये शन्नो भवन्तु। वा स, का स ३६, १२। अ स—पैप्पलादशाखा १, १, १, शौनकशाखा १, ६, १]

इति पूर्वादिदिक्परिस्तरणं कृत्वा अग्निं प्रज्वाल्य पर्युक्ष्य घृताक्तमन्नं हस्तेनैव जुहुयात्। एते मन्त्रा ब्रह्मयज्ञप्रस्तावे (१०८—११० पृ) व्याख्याताः।

तत्र व्याहृत्याहुतित्रयं कृत्वा गोतमोक्ताग्न्यादिपञ्चाहुतीश्च हुत्वा शाकलमन्त्रैः षड़ाहुतयः।

तत्र शाकलमन्त्रो यथा

देवकृतस्यैनसोऽवयजनमसि स्वाहा॥ ९८

[वा स ८, १३। का श्रौ १०, ८, ६]

अग्निरत्र देवता। यथानुक्रमणिका (सर्वानुक्रमसूत्र ३० द्र)—देवकृतस्यैनस इत्याग्नेयानि षड् यजूंषि। तेन हे अग्ने एनसः पापस्य अवयजनं नाशनम् असि

---

१ प—°हवनीयाग्न्योरग्ये:।

भवसि। अवपूर्वो यजतिर्नाशने वर्तते। किम्भूतस्य एनसः—देवकृतस्य देवकर्मण्यसाङ्गतादिकृतस्येत्यर्थः[१]। अतः तुभ्य स्वाहा।

**मनुष्यकृतस्यैनसोऽवयजनमसि स्वाहा ॥ ९९**

[वा स ८, १३]

मनुष्यकृतस्य मनुष्यविषये अतिथिविषये असाङ्गतादिकृतस्य[२]। यद्वा मनुष्यहिंसादिना कृतस्य। अपरं समानम्।

**पितृकृतस्यैनसोऽवयजनमसि स्वाहा ॥ १००**

[वा स ८, १३]

पितृकृतस्य पित्र्यकर्मण्यसाङ्गतादिकृतस्य। अपरं समानम्।

**आत्मकृतस्यैनसोऽवयजनमसि स्वाहा ॥ १०१**

[वा स ८, १३]

आत्मकृतस्य आत्मनिन्दादिकृतस्य। अपरं समानम्।

**एनस एनसोऽवयजनमसि स्वाहा ॥ १०२**

[वा स ८, १३]

एनसः पापस्य सम्बन्धेन संसर्गेण[३] पुनः पुनः करणेन वा यदेनः सम्भूतं तस्य। अपरं समानम्।

**यच्चाहमेनो विद्वांश्चकार यच्चाविद्वांस्तस्य सर्वस्यैनसोऽवयजनमसि स्वाहा ॥ १०३**

[वा स ८, १३]

अहं यच्च यदपि एनः पापं चकार कृतवानस्मि। किम्भूतः—विद्वान् जानन्। यच्च यदपि अविद्वान् अजानन् चकार तस्य एनसः अवयजनं नाशनम् असि। किम्भूतस्य—सर्वस्य सावशेषस्य।

इति होमं समाप्याग्निं पूजयेदनेन मन्त्रेण।

**सप्त ते अग्ने समिधः सप्त जिह्वाः**
**सप्त ऋषयः सप्त धाम प्रियाणि।**
**सप्त होत्राः सप्तधा त्वा यजन्ति**
**सप्त योनीरा पृणस्व घृतेन स्वाहा ॥ १०४**

[वा स १७, ७९। का स १८, ७९। तै स १, ५, ३, ८—पृणस्वा]

---

१ क—देवकर्मण्यसांगकृताकृतस्येत्यर्थः। २ क—असाङ्गकृताकृतस्य। ३ क—सवर्गेण।

त्रिष्टुप्। हे अग्ने ते तव सप्त सप्तसङ्ख्याः समिधः समिन्धनहेतवः[1]। ते सप्त जिह्वाः आवहप्रवहोद्वहसंवहविवहनिवहपरिवहनामानः[2] सप्त वायव एव ते सप्त जिह्वा इत्यर्थः। ते सप्त ऋषयः [मरीच्यादयः]। ते सप्त धाम धामानि स्थानानि सप्त च्छन्दांसि। किम्भूतानि—प्रियाणि हृद्यानि। सप्त होत्राः सप्त होतारः। के ते[3]—होता मैत्रावरुणिर्ब्राह्मणाच्छंसी अच्छावाकः पोता नेष्टा अग्नीध्रः। त्वा त्वां यजन्ति। कथम्—सप्तधा ज्योतिष्टोमादिसप्तसंस्थसोमयागेन। सप्त योनीः चितिस्वरूपाः। सप्तचितिकोऽग्निरिति श्रुतेः (श ब्रा ८, ७, ३, ४४, ६, ६, १, १४) आपृणस्व सुप्रीतो[4] भव। केन—घृतेन। स्वाहा सुहुतं भवतु। अत्र धाम इति बहुवचनस्थाने एकवचनम्। अग्निस्तुतिपूर्वकं सुहुतत्वाशंसनेनाग्नेरुपस्थानमनेन क्रियते।

इति देवदेवमन्त्रव्याख्या।

## अथ शान्तिः

ततो यथोक्तान् बलीन् दत्त्वा ऋचं वाचमित्यध्यायेन शान्तिं कुर्यात्। अत्र वेदमन्त्रव्याख्यापरत्वाद्ग्रन्थस्य बलीनां च वैदिकमन्त्रशून्यत्वाद् बलयो न व्याख्याताः।

अत्र यद्यपि[5] सर्वासामेव काण्डिकानामृषिच्छन्दोदेवताविनियोगा विद्यन्त एव तथापि[6] अमीभिर्मन्त्रैः कर्मान्तरे क्रियमाणे ते स्मर्तव्याः। शान्तिकर्मणि त्वध्यायपाठस्य[7] श्रुतत्वान्नैतेषां स्मरणं न[8] कर्तव्यमेव।

**ऋचं वाचं प्र पद्ये मनो यजुः प्र पद्ये साम प्राणं**
**प्र पद्ये चक्षुः श्रोत्रं प्र पद्ये।**
**वागोजः सहौजो मयि प्राणापानौ ॥ १०५**

[ वा स ३६, १। का स ३६, १ ]

१ ख—समिन्धनानि।
२ क—प्रवहावहोद्वहसवहनिवहविवहपरिवह°।
ङ—प्रवहावहोद्वहसवहविवहपरिवहनिवह°।
छ—प्रवहावहोद्वहसवहविवहपरावहानुवह°।
प—प्रवहप्रावहोद्वहविवहनिवहपरिवहसंवह°।
३ छ—सप्तर्षय इत्यधिकम्।
४ क—प—प्रीतो।
५ ङ—शान्त्यध्यायसम्बन्धिनीनामित्यधिकम्।
६ घ—तथाप्यत्र। प—ततोऽपि।
७ क—ङ—स्वाध्यायपाठस्य।
छ—तु स्वाध्यायपाठस्य।
८ छ—नास्ति।

एतेषां यजुषां दध्यङ्ङाथर्वण ऋषिर्विश्वेदेवा देवता महावीराद्यन्तयोः शान्तिकरणे विनियोगः ।

अहम् ऋचम् ऋग्वेदं वाचम् वाणीञ्च प्रपद्ये शरणं यामि । तथा मनः इन्द्रियं यजुः यजुर्वेदं च प्रपद्ये । तथा साम सामवेदं प्राणम् प्राणवायुं च प्रपद्ये । तथा चक्षुः श्रोत्रं च इन्द्रियद्वयं प्रपद्ये । किमर्थमेतेषु शरणगमनम्—वाक् वचनं ओजो बलं प्राणपानौ वायू एतानि सह एकीभूय वर्तन्तामित्यध्याहार्यम् । द्वितीय-मोजोग्रहणमादरार्थम् । महावीरकर्मणो भीषणत्वेन [1]वागादिविरोधसम्भावनायां तेषामविरोधाय शान्तिकर्मेत्याशयः । [2]वाङ्मनःप्राणापानानां स्थित्यर्थमृगादि-वेदत्रयवाङ्मनःप्राणचक्षुःश्रोत्राणि शरणं यामीति वाक्यार्थः ।

**यन्मे छिद्रं चक्षुषो हृदयस्य मनसो वातितृण्णं**
**बृहस्पतिर्मे तद्दधातु ।**
**शं नो भवतु भुवनस्य यस्पतिः ॥ १०६**

[ वा स ३६, २ । का स ३६, २ ]

दध्यङ्ङाथर्वण ऋषिर्बृहस्पतिर्देवता पङ्क्तिश्छन्दो महावीराद्यन्तयोः शान्तिकरणे विनियोगः ।

मे मम चक्षुषोः यत् छिद्रं न्यूनं तथा हृदयस्य बुद्धेर्यच्छिद्रमिति पूर्वेणैव सम्बन्धः । तथा मनसो वा वा शब्दः समुच्चये[3] मनसश्च यत् अतितृण्णम् अतिहिंसितं [4]परहिंसाचिन्तनादिना यन्न्यूनमित्यर्थः[4] । तत् सर्वं मे मम बृहस्पतिः देवाचार्यो दधातु सम्पूर्णं करोत्वित्यर्थः । तथा सति भुवनस्य त्रैलोक्यस्य यः पतिः प्रभुर्ब्रह्मा स नः अस्माकं शम् भवतु सुखकारी[5] भवतु । मम चक्षुर्बुद्धिमनसां यन्न्यूनं तद् बृहस्पतिः सम्पूर्णं करोतु । तस्मिंश्च सम्पूर्णे ब्रह्माऽस्माकं सुखकारी भवत्वि-त्याशंसा वाक्यार्थः ।

**भूर्भुवः स्वः । तत् सवितुर्वरेण्यं भर्गो देवस्य धीमहि ।**
**धियो यो नः प्र चोदयात् ॥ १०७**

[ वा स ३६, ३ । का स ३६, ३ ]

तिसृणां महाव्याहृतीनां प्रजापतिर्ऋषिरग्निवायुसूर्या देवता यजुष्टाच्छन्दो

---

१ ख—रागादिविनोद° । ङ—रागादिविरोध° ।
२ क—वाग्वचनप्राणा° । प—वाग्जीवनप्राणा° ।
३ ङ—समन्वये ।
४ ङ—परहिंसाचेतनादीनामन्यूनत्वमित्यर्थः ।
५ प—कल्याणकारी ।

नास्ति। गायत्र्या विश्वामित्र ऋषिर्गायत्री छन्दः सविता देवता महावीराद्यन्तयोः शान्तिकरणे विनियोगः।

भूः पृथिवी भुवः आकाशं स्वः स्वर्गः। एतान् त्रीन् लोकानिति विपरिणमय्य[1] धीमहीति क्रियापदं योज्यम्। तथा तत् तस्य सवितुरादित्यस्य भर्गः वीर्यं तेजो वा धीमहि ध्यायेम चिन्तयामीति यावत्। किम्भूतम्—वरेण्यं सर्ववर्येभ्यः[2] श्रेष्ठम्। किम्भूतस्य सवितुः—देवस्य [3]दानादिगुणयुक्तस्य। पुनः किम्भूतः[4]—यः सविता नः अस्माकं धियो बुद्धीः प्रचोदयात् प्रेरयति सकलपुरुषार्थेषु प्रवर्तयतीत्यर्थः।[5]

**कया नश्चित्र आ भुवदूती सदावृधः सखा।**
**कया शचिष्ठया वृता॥ १०८**

[ ऋ स ४, ३१, १। वा स २७, ३९। का स २९, ४४ ]

वामदेव ऋषिर्गायत्री छन्द इन्द्रो देवता महावीराद्यन्तयोः शान्तिकरणे विनियोगः।

चित्रः[6] चयनकर्मणि प्रयोजक इन्द्रः कया नाम ऊती ऊत्या तर्पणेन नः अस्माकं सदावृधः सर्वदा वृद्धिकारी भुवत् भूयात्। तथा आ भुवदित्यत्र पठित आकारो वृता इत्यनेन सम्बध्यते। कया नाम आवृता क्रियया चित्रः नः सखा मित्रं भुवत् भूयात्। किम्भूतया आवृता—शचिष्ठया शचीति कर्मणो नाम इति निघण्टुः[7] ( २,१,२२ )। तत्रेष्ठन्। सातिशयकर्मवत्येत्यर्थः। केन तर्पणेन कया वा क्रियया[8] इन्द्रोऽस्माकं वृद्धिकारी सखा च भूयादिति प्रश्नो वाक्यार्थः। त्वया कथिते वयं तदनुतिष्ठाम इत्याशयः। अत्र भुवदिति भूधातोर्लिङ्। संज्ञापूर्वको विधिरनित्य इति गुणो न भवति। आगमानुशासनस्यानित्यत्वाद् यासुड् न भवति। तत उवङ्। ऊती इति अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु[9] इत्यस्माद्धातोः ऊतियूतिजूतिसातिहेतिकीर्तयश्चेति ( पा ३, ३, ९७ ) निपातनात् क्तिन्। ज्वरत्वरस्रिव्यविमवामुपधायाश्चेति ( पा ६, ४, २० ) अकारस्य वकारस्य च ऊठ्।

---

१ प—परिणम्य।

२ ङ—ज—सर्वभूतेभ्यः।
छ—सर्वभूतवरेण्य सर्वभूतेभ्यः। क१—°वीर्येभ्यः।

३ ङ—देवनादिगुण°। छ—देवतादिगुण°।

४ प—किम्भूतस्य।

५ क—पुस्तके गायत्रीमन्त्रस्यास्य व्याख्यानं न धृतं लिखित च—व्याख्यानन्तु सन्ध्यायामुक्तत्वान्न पुनरुक्तम्।

६ ङ—प—चित्रे।

७ आदर्शपुस्तकेषु निर्घण्टुः निर्घण्टः इति वा पाठाः।

८ क—ङ—छ—कर्मक्रियया।

९ छ—°दानभाववृद्धिषु।

ऊतिशब्दस्य तृतीयैकवचने छन्दसि इयाडियाजीकाराणामुपसङ्ख्यानमिति ( पा वा ७, १, ३९ ) आकारस्येकारः[1] ॥

**कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः ।**
**दृढा चिदारुजे वसु ॥ १०९**

[ ऋ स ४, ३१, २ । वा स २७, ४० । का स २९, ४५ ]

वामदेव ऋषिर्गायत्री छन्द इन्द्रो देवता महावीराद्यन्तयोः शान्तिकरणे विनियोगः ।

हे इन्द्र कः को रसः त्वा त्वां मत्सत् मत्तं करोति । कस्य रसः—अन्धसः सोमस्य सोमलताया इत्यर्थः । किम्भूतः—सत्यः सोमयागे क्रियमाणेऽवश्यम्भावी । पुनः किम्भूतः—मदानां मध्ये मंहिष्ठः अतिशयेन मदजनकः । येन मदेन मत्तस्त्वं वसु वसूनि धनानि आरुजे आरुजसि भञ्जयसि । किम्भूतानि—दृढा दृढ़ानि । चित् अप्यर्थः । दृढ़ान्यपि सुवर्णप्रभृतीनि धनानि यागकर्तृभ्यो दातुं भञ्जयसीत्यर्थः । हे इन्द्र केन मदेन मत्तस्त्वं सुवर्णादीनि ददासीति प्रश्नो वाक्यार्थः । त्वया कथिते वयं तदनुतिष्ठाम इत्याशयः । अत्र मंहिष्ठ इति महि वृद्धौ तृचि नुमि कृते मंहितेत्यत्रातिशयविवक्षायां तुश्छन्दसीति ( पा ६, ३, ५९ ) इष्ठन् । तुरिष्ठेमेयःस्विति ( पा ६, ४, १५४ ) तृचो लोपः । मत्सदिति मदधातोर्लेटि तिप् । इतश्च लोपः परस्मैपदेष्विति (पा ३, ४, ९७) इकारलोपः । सिब्बहुलं लेटीति (पा ३, १, ३४) सिप्प्रत्ययः । लेटोऽडाटाविति (पा ३, ४, ९४) अडागमः । आगमानुशासनस्यानित्यत्वादिट् न भवति । दृढ़ा इति दृढ़ानीत्यत्र [2]वर्णागमो वर्णविपर्ययश्चेति निलोपः[2] । आरुजे इति मध्यमपुरुषे उत्तमपुरुषः । वस्विति बहुवचने एकवचनम् ।

**अभी षु णः सखीनामविता जरितॄणाम् ।**
**शतं भवास्यूतिभिः ॥ ११०**

[ ऋ स ४, ३१, ३ । वा स २७, ४१—भवास्यूतये । का स ३६, ६ ]

वामदेव ऋषिः पादनिचृद्गायत्री छन्द इन्द्रो देवता महावीराद्यन्तयोः शान्तिकरणे विनियोगः ।

---

१ सुपां सुलुक् पूर्वसवर्णाच्छे इत्यादिना ( पा ७, १, ३९ ) पूर्वसवर्णे कृते ऊतीति पदं सिध्यतीत्यन्ये भाष्यकाराः । इत्वायुधेन त्वीकारादेशं कृत्वा पदमिदं साध्यते । इयाडियाजीकाराणामिति वार्तिके ईकारादेशविधानस्योदाहरणं मृग्यमिति भट्टोजिदीक्षितेन लिखितम् ।

२ पृषोदरादित्वान्नलोपः । बहुष्वेतादृशस्थलेषु शेश्छन्दसि बहुलमिति सूत्रमुल्लिखितम् ।

हे इन्द्र नः अस्माकं तथा सखीनां मित्राणां तथा जरितॄणाम् स्तोतॄणाम् अविता पालयिता भवासि भव। केन प्रकारेण—अभि आभिमुख्येन। तथा सु सुष्ठु यथा भवति। किम्भूतः सन्—शतं स्वयं शतधा बहुधा भूत्वेत्यर्थः। कैरविता भव—ऊतिभिः बहुप्रकारै रक्षणैः। हे इन्द्र[1] त्वं बहुमूर्तिर्भूत्वाऽस्माक-मस्मत्सखीनां स्तोतॄणां च बहुप्रकारं पालयिता भवेत्याशंसा वाक्यार्थः। अभीषुण इति अभि सु न इति स्थितौ[2] इकः सुञीति (पा ६, ३, १३४) दीर्घत्वम्। सुञ इति (पा ८, ३, १०७) मूर्धन्यादेशः। नश्च धातुस्थो रुषुभ्य इति (पा ८, ४, २७) णत्वम्। जरितॄणामिति धातूनामनेकार्थत्वात् स्तोतॄणामिति बोद्धव्यम्। भवासीति लेण्मध्यमपुरुषैकवचनम्॥

**कया त्वं न ऊत्याभि प्र मन्दसे वृषन्।**
**कया स्तोतृभ्य आ भर॥ १११**

[ऋ स ८, ९३, १९। वा स ३६, ७। का स ३६, ७]

दध्यङ्ङाथर्वण ऋषिर्गायत्री छन्द इन्द्रो देवता महावीराद्यन्तयोः शान्ति-करणे विनियोगः।

हे वृषन् इन्द्र कया नाम ऊत्या आगमनेन नः अस्मान् अभिप्रमन्दसे अभि सर्वतोभावेन प्रमोदयसि। तथा कया नाम ऊत्या इति पूर्वेणैव सम्बन्धः। आभर आहरसि अर्जयसि[3] अर्थाद्धनपुत्रादिकमिति। किमर्थम्—स्तोतृभ्यः स्तव-कारिणां प्रयोजनेनेत्यर्थः। हे इन्द्र कथमागत्यास्मान् प्रमोदयसि कथञ्च [4]स्तवकारिणामर्थेन धनपुत्रादिकमर्जयसीति[4] प्रश्नो वाक्यार्थः। त्वया कथिते तथा वयमनुतिष्ठाम इत्याशयः। अत्राभिप्रमन्दसे इति मदी स्तुतिमोदमदस्वप्नकान्ति-गतिषु इत्यस्य धातो रूपम्। आभरेति आहरेति[5] प्राप्ते हृग्रहोर्भश्छन्दसीति (पा वा ३, १, ८४) हकारस्य भकारः। लडर्थे लोट्।

**इन्द्रो विश्वस्य राजति।**
**शं नो अस्तु द्विपदे शं चतुष्पदे॥ ११२**

[वा स ३६, ८। का स ३६, ८]

---

१ 'क—इत्य' इत्यधिकम्।
२ क—स्थिते।
३ ख—क—अर्पयसि। प—नास्ति।
४ प—स्तवकारिणामर्थेन पुत्रादिकेन धीजयसीति। क—स्तवकारिणामनेन पुत्रादिकमर्जयसीति।
५ क—नास्ति।

दध्यङ्ङाथर्वण ऋषिर्द्विपदा विराट् छन्द इन्द्रो देवता महावीराद्यन्तयोः शान्तिकरणे विनियोगः।

इन्द्रो विश्वस्य सर्वस्य जगतः राजति दे‍दीप्यते[1]। तस्य प्रसादेन नः अस्माकं द्विपदे मनुष्यस्य भार्यापुत्रादिकस्य शं सुखम् अस्तु। तथा चतुष्पदे गवादिकस्य शम् अस्त्विति पूर्वेणैव सम्बन्धः। विश्वप्रभोरिन्द्रस्य प्रसादेनास्माकं भार्यापुत्रगवादीनां सुखं भवत्वित्याशंसा वाक्यार्थः। द्विपदे चतुष्पद इति षष्ठ्यां सप्तमी।

**शं नो मित्रः शं वरुणः शं नो भवत्वर्यमा।**

**शं न इन्द्रो बृहस्पतिः शं नो विष्णुरुरुक्रमः॥ ११३**

[ ऋ स १, ९०, ९। वा स—का स ३६. ९ ]

दध्यङ्ङाथर्वण ऋषिरनुष्टुप् छन्द इन्द्रो देवता महावीराद्यन्तयोः शान्तिकरणे विनियोगः।

अनेन शान्तिकर्मणा नः अस्माकं मित्रश्चन्द्रः[2] शं भवतु सुखाय भवतु। तथा वरुणः शं भवतु। अर्यमा सूर्यश्च नः शं भवतु। तथा इन्द्रः बृहस्पतिश्च नः शं भवतु तथा विष्णुः नः शं भवतु। किम्भूतो विष्णुः—उरुक्रमः उरुर्बहुः क्रमो यस्य स उरुक्रमः त्रिविक्रम इत्यर्थः। भवत्विति क्रियापदमेकत्र पठितं सर्वत्र सम्बध्यते। मित्रवरुणार्यमेन्द्रबृहस्पतिविष्णवोऽस्माकं सुखाय भवन्त्वित्याशंसा व्याक्यार्थः॥

**शं नो वातः पवताᳬं शं नस्तपतु सूर्यः।**

**शं नः कनिक्रदद्देवः पर्जन्यो अभि वर्षतु॥ ११४**

[ वा स—का स ३६, १० ]

दध्यङ्ङाथर्वण ऋषिरनुष्टुप् छन्दो वायुसूर्यपर्जन्या देवता महावीराद्यन्तयोः शान्तिकरणे विनियोगः।

वातः वायुः नः अस्माकं शं सुखाय पवतां वहतु। सूर्यः नः शं सुखाय तपतु अदाहको भूत्वेत्यर्थः। पर्जन्यः मेघः नः शं सुखाय अभिवर्षतु। किम्भूतः —कनिक्रदत् आक्रन्दमानः गर्जन्नपि [3]सुखायाभिवर्षत्वित्यर्थः। वातसूर्यपर्जन्या अस्माकं सुखाय सुक्रियां[4] कुर्वन्त्वित्याशंसा[5] वाक्यार्थः।

---

१ छ—दीप्यते।

२ ङ—पुस्तके चन्द्र इति नास्ति।

३ छ—सुखाय भवत्वित्यर्थः।

४ क१—ङ—सुखक्रियां। छ—सुक्रियाय।

५ छ—भवन्त्वित्याशंसा।

**अहानि शं भवन्तु नः शꣳ रात्रीः प्रति धीयताम् ॥**
**शं न इन्द्राग्नी भवतामवोभिः शं न इन्द्रावरुणा रातहव्या ।**
**शं न इन्द्रापूषणा वाजसातौ शमिन्द्रासोमा सुविताय शंयोः ॥११५**

[ वा स—का स ३६, ११ ]

दध्यङ्ङाथर्वण ऋषिरहानि शं द्विपदा गायत्री छन्दः शन्न इन्द्राग्नी त्रिष्टुप् छन्द इन्द्रो[1] देवता महावीराद्यन्तयोः शान्तिकरणे विनियोगः ।

अहानि दिवसा नः अस्माकं शं सुखाय भवन्तु । तथा रात्रिः शं सुखाय प्रतिधीयताम् प्रतिदधातु भवत्विति यावत् । तथा इन्द्राग्नी नः शं सुखाय भवताम् । कैः—अवोभिः पालनैः । तथा इन्द्रावरुणा इन्द्रावरुणौ नः शं सुखाय भवताम् । किम्भूतौ—रातहव्या दत्तहव्यौ । तथा इन्द्रापूषणा इन्द्रापूषणौ नः शं सुखाय भवताम् । कस्मिन् विषये—वाजसातौ वाजः अन्नं तस्य सातिर्दानं तस्मिन्नित्यर्थः । तथा इन्द्रासोमा इन्द्रसोमौ शं सुखाय भवताम् । किमर्थम्—सुविताय साधुगमनाय उत्तमगतिप्राप्तये । न केवलमेवं[2] शंयोः कल्याणयोगाय च ।

**शं नो देवीरभीष्टय आपो भवन्तु पीतये ।**
**शंयोरभि स्रवन्तु नः ॥ ११६**

[ अ स पैप्प १, १, १ । ऋ स १०, ९, ४ । वा स—का स ३६, १२ ]

पूर्ववद्विनियोगः । मन्त्रोऽयं ब्रह्मयज्ञप्रस्तावे [ मध्याह्नस्नाने ८२ पृः ] व्याख्यातः ।[3]

**स्योना पृथिवि नो भवानृक्षरा निवेशनी ।**
**यच्छा नः शर्म सप्रथाः ॥ ११७**

[ ऋ स १, २२ १५—स्योना पृथिवि भवा॰ ; शर्म सप्रथः । वा स ३५, २१ । ३६, १३ ]

मेधातिथिऋर्षिर्गायत्री छन्दः पृथिवी देवता महावीराद्यन्तयोः शान्तिकरणे विनियोगः ।

---

१ घ—इन्द्राग्नी ।

२ घ—न केवलं सुविता अपि तु ।
प—पुस्तके नास्ति ।

३ घ—ङ—प—पुस्तकेष्वत्र प्राक्कृत-मन्त्र-व्याख्यानस्य पुनरावृत्तिर्दृश्यते ।

हे पृथिवि नः अस्माकं स्योना सुखरूपा[1] भव। तथा[2] अनृक्षरा भव। ऋक्षरः कण्टकः सोऽस्या नास्तीत्यनृक्षरा निष्कण्टका। तथा निवेशनी भव निवेशोऽवस्थानं तद्योग्या भव। एवंविधा च भूत्वा नः अस्माकं शर्म सुखं यच्छ देहि। किम्भूता सती—सप्रथाः सविस्तारा अतिविस्तारा इत्यर्थः। हे पृथिवि अस्माकं सुखरूपा अकण्टकाऽवस्थानार्हा च भूत्वा सुखं देहीति याच्ञा व्याख्यार्थः। सप्रथा इति प्रथ प्रख्यान इत्यस्यासुन्प्रत्ययान्तस्य प्रथमैकवचनम्।

आपो हि ष्ठा मयोभुव स्ता न ऊर्जे दधातन।
महे रणाय चक्षसे॥
यो वः शिवतमो रसस्तस्य भाजयतेह नः।
उशतीरिव मातरः॥
तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ।
आपो जनयथा च नः॥ ११८—१२०

[ऋ स १०, ९, १—३। वा स—का स ३६, १४—१६]

त्रयाणां सिन्धुद्वीप ऋषिर्गायत्री छन्द आपो देवता महावीराद्यन्तयोः शान्तिकरणे विनियोगः।

एतन्मन्त्रत्रयं प्रातःसन्ध्यायां [स्नान-प्रकरणे २४-२५ पृः] व्याख्यातम्। अतस्तत्रैवानुसन्धेयम्[3]।

द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी
शान्तिरापः शान्तिरोषधयः शान्तिः।
वनस्पतयः शान्तिः शान्तिरेव शान्तिः॥ १२१

[वा स ३६, १७—वनस्पतयः शान्तिरित्यस्यानन्तरं 'विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः' तथा मन्त्रान्ते 'सा मा शान्तिरेधि' इत्यधिको मन्त्रपाठः। का स ३६, १७। ष स १९, ९, १४ द्रः]

दध्यङ्ङाथर्वण ऋषिरिन्द्रो देवता। यजुष्ट्वाच्छन्दो नास्ति। महावीराद्यन्तयोः शान्तिकरणे विनियोगः।

द्यौः स्वर्गः शान्तिः सर्वारिष्टोपशमः[4] अस्त्वस्माकमित्यध्याहार्यम्। अन्तरिक्षं शान्तिरस्तु। पृथिवी शान्तिरस्तु। आपः शान्तिः शान्तयः सन्तु। ओषधयो

---

१ छ—सुखदा।
२ ङ—छ—अतः।
३ ङ—छ—पुस्तकयोः मन्त्रत्रयस्यास्य पूर्वकृत-व्याख्यानस्यैव पुनरावृत्तिरस्ति।
४ छ—सर्वविघ्नोप°।

ब्रीह्यादयः शान्तिः शान्तयः सन्तु। वनस्पतयः वृक्षाः शान्तिः शान्तयः सन्तु। एवं या शान्तिः कृता सैव शान्तिरस्तु। अत्र सर्वत्रैव द्यौःप्रभृतिभिः शान्तिरित्यन्तैः पदैस्तत्तत्स्वर्गाद्यधिष्ठात्री देवता अस्माकमरिष्टोपशमनपूर्वकमभीष्टसम्पादनाय भवन्त्वित्याशंसा वाक्यार्थः। आपः शान्तिरित्यादिषु सुपां सुपो भवन्तीति [1]बहुवचने एकवचनम्[1]।

दृते[2] दृꣳह मा मित्रस्य मा चक्षुषा
सर्वाणि भूतानि समीक्षन्ताम्।
मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे।
मित्रस्य चक्षुषा समीक्षामहे॥ १२२

[ वा स—का स ३६, १८, ]

दध्यङ्ङाथर्वण ऋषिरिन्द्रो देवता। यजुष्टाच्छन्दो नास्ति। महावीरादान्तयोः शान्तिकरणे विनियोगः।

हे इन्द्र अनेन शान्तिकर्मणा मा मां दृंह दृढीकुरु। कुत्र—दृते[3] मम यत् शरीरभार्यापुत्त्रादि दृतं[3] परिदृढ़ीतं तत्र मां दृढमखण्डितं[4] कुर्वित्यर्थः। किञ्च मा मां सर्वाणि भूतानि प्राणिनः समीक्षन्ताम् पश्यन्तु। केन—मित्रस्य चक्षुषा। मित्रस्य हि चक्षुरहिंसकं भवति। सर्वे प्राणिनः शुभदृष्ट्या मां पश्यन्त्वित्यर्थः। अहञ्च सर्वाणि भूतानि सर्वान् प्राणिनः मित्रस्य चक्षुषा समीक्षे। अहमपि शुभदृष्ट्या सर्वान् प्राणिनः पश्यामीत्यर्थः। एवं सति सर्वप्राणिनोऽहञ्च मित्रस्य चक्षुषा अन्योन्यं समीक्षामहे। मां शरीरभार्यापुत्त्रादिभिः सम्पूर्णं कुरु। सर्वे प्राणिनो मां मित्रवत् पश्यन्तु अहमपि तान् मित्रवत् पश्यामीति याच्ञा वाक्यार्थः।

दृते दृꣳह मा°। ज्योक् ते सन्दृशि जीव्यासं ज्योक् ते संदृशि जीव्यासम्॥ १२३

[ वा स—का स ३६, १९ ]

ऋष्यादिः पूर्ववत्। हे इन्द्र दृते मा मां दृंह। पूर्वकण्डिकायामिव व्याकृतम्। पुनर्वचनमादरार्थम्। किञ्च ते तव संदृशि सन्दर्शने सति ज्योक् चिरं जीव्यासम् अहं जीवेयम्। अत्रापि पुनर्वचनमादरार्थम्। त्वया दृष्टोऽहं चिरं जीवेयमित्याशंसा वाक्यार्थः।

---

१ क—जसः सुः।
२ क—ङ—त—व—न—धृते।
३ क—ङ—त—व—न—धृतं। छ—धनं।
४ प—भग्नतं।

**नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिषे ।**

**अन्याꣳस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यꣳ शिवो भव ॥१२४**

[ वा स १७, ११ , ३६, २० । का स १८, १२ , ३६, २० ]

ऋषिपुत्री लोपामुद्रा ऋषिरग्निर्देवता बृहती छन्दो महावीरादग्न्तयोः शान्तिकरणे विनियोगः ।

हे अग्ने ते तुभ्यं नमः अस्त्वित्युत्तरत्रावस्थितमत्रापि योज्यम् । किम्भूताय तुभ्यम्—हरसे हुतस्य[1] हर्त्रे । पुनः किम्भूताय—शोचिषे दीप्तिकारिणे तथा अर्चिषे अर्चिःस्वरूपाय ते तुभ्यं नमोऽस्तु । किमर्थम्—ते तव हेतयः ज्वालाः अस्मदन्यान् विरुद्धान् तपन्तु दहन्तु । न केवलमेवं त्वं पावकः सन् अस्मभ्यं शिवः कल्याणो भव । इत्येतदर्थञ्च नमस्कृतोऽग्निरस्माकं विरुद्धान् दहत्वस्माकञ्च कल्याणो भवत्वित्याशंसा वाक्यार्थः । अत्र हरसे इति हृञ् हरण इत्यस्य सर्वधातुभ्योऽसुन्नित्यसुन् प्रत्ययः ।

**नमस्ते अस्तु विद्युते नमस्ते स्तनयित्नवे ।**

**नमस्ते भगवन्नस्तु यतः स्वः समीहसे ॥ १२५**

[ वा स—का स ३६, २१ ]

दध्यङ्ङाथर्वण ऋषिरनुष्टुप् छन्द इन्द्रो देवता महावीरादग्न्तयोः शान्तिकरणे विनियोगः ।

हे इन्द्र ते तुभ्यं नमोऽस्तु । किम्भूताय—विद्युते विद्युद्रूपाय । तथा स्तनयित्नवे मेघरूपाय ते तुभ्यं नमः । तथा हे भगवन् सकलैश्वर्यशालिन् ते तुभ्यं नमः अस्तु । केन कारणेन त्वं नमस्क्रियसे—यतः कारणात् स्वः स्वर्गं दातुं[2] समीहसे चेष्टसे । दातुमित्यध्याहारः । हे इन्द्र यतस्त्वं स्वर्गार्थिनां[3] स्वर्गं ददास्यतस्तुभ्यं विद्युद्रूपाय मेघरूपाय ईश्वराय[4] च नमोऽस्त्वित्याशंसा वाक्यार्थः ।

**यतो यतः समीहसे ततो नो अभयं कुरु ।**

**शं नः कुरु प्रजाभ्योऽभयं नः पशुभ्यः ॥ १२६**

[ वा स—का स ३६, २२ ]

दध्यङ्ङाथर्वण ऋषिरिन्द्रो देवता अनुष्टुप् छन्दो महावीरादग्न्तयोः शान्तिकरणे विनियोगः ।

---

१ प—पापं ।
२ छ—गन्तुं । त—त्वं ।
३ च—स्वर्यार्थिनां ।
४ क—च—ङ—पुस्तकेषु नास्ति ।

हे इन्द्र त्वं यतो यतः यस्माद् यस्मादस्मत्कृताद्दुरुपचारात् नः अस्माकं भयं कर्तुं समीहसे चेष्टसे ततः तस्मात् नः अस्माकम् अभयं कुरु। किञ्च नः अस्माकं प्रजाभ्यः पुत्रादिभ्यः शं सुखं कुरु। तथा नः पशुभ्यः गवादिभ्यः अभयं कुर्विति पूर्वेणैव सम्बन्धः। अस्माकं यं दुरुपचारं प्राप्यास्माकं भयाय चेष्टसे तस्मादस्माकं पुत्रादीनां गवादीनाञ्चाभयं सुखञ्च कुर्विति याच्ञा वाक्यार्थः।

**सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु।**
**योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः॥ १२७**

[ वा स—का स ३६, २३ ]

दध्यङ्ङाथर्वण ऋषिरापो देवता। यजुष्ट्वाच्छन्दो नास्ति। महावीरादग्न्तयोः शान्तिकरणे विनियोगः।

आप ओषधयः व्रीह्यादयः नः अस्माकं सुमित्रियाः सन्तु साधुमित्रत्वेनावस्थिता भवन्तु। ये दुर्मित्रिया दुष्टमित्रत्वेनावस्थिताः तस्मै सन्तु। तस्मै कस्मै—यः अस्मान् द्वेष्टि अस्मासु द्वेषं करोति। यञ्च वयं द्विष्मः यस्मिन् वयं द्वेषं कुर्मः। आपो व्रीह्यादयश्चास्माकं साधुमित्रवदभीष्टकारिण्यो[1] भवन्तु। अस्मच्छत्रूणाञ्च दुष्टमित्रवद्विरोधिन्यो भवन्त्वित्याशंसा वाक्यार्थः।

**तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्।**
**पश्येम शरदः शतं जीवेम शरदः शतꣳ**
**शृणुयाम शरदः शतम्॥[2] १२८**

[ वा स—का स ३६, २४ ]

दध्यङ्ङाथर्वण ऋषिः सूर्यो देवतोष्णिक् छन्दो महावीराद्यन्तयोः शान्तिकरणे विनियोगः।

इते इंह इत्यादिषु प्रकृतत्वात्तदित्यनेनादित्यबिम्बं परामृश्यते। तत् पश्येम। तदादित्यबिम्बं चक्षुः त्रैलोक्यचक्षुर्भूतम्। यथा चक्षुषा विना चाक्षुषं किञ्चिन्न प्रकाशते तथानेनापि विना किञ्चिन्न प्रकाशते। तत् किम्भूतम्—देवहितं देवानां हितम्। अस्मिन्नुदिते दैवं कर्म क्रियते। पुनः किम्भूतम्—पुरस्तादुच्चरत् प्राच्यां दिशि ऊर्ध्वं गच्छत्। अपि च किम्भूतम्—शुक्रं शुक्लं निर्मलमिति यावत्। वयं शरदः शतं जीवेम शरदः शतं शृणुयाम। योऽयं

---

१ क—च—छ—ज—°कारिणी।

२ मन्त्रोऽयं प्रातःसन्ध्यायामपि ( ६३ पृ: ) व्याख्यातः।

सर्वदेवमयश्चादित्यः प्रत्यहं प्राच्यामुदेति तस्य प्रसादेन वयमविकलेन्द्रियाः शतवर्षाणि जीवेमेत्याशंसा वाक्यार्थः ।

इति शान्त्यध्यायः [ वा स—का स ३६ ] ।

**मनो ज्योतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोतु ।**
**अरिष्टं यज्ञꣳ समिमं दधातु विश्वे देवास इह**
**मादयन्तामों प्रतिष्ठ ॥ १२९**

[ वा स २, १३—मनोजूति° । का स २ २९ ]

आङ्गिरसो बृहस्पतिर्ऋषिर्विश्वेदेवा देवता । यजुष्टाच्छन्दो नास्ति । समिदनुमन्त्रणे विनियोगः ।

मदीयं मन आज्यस्य मया हूयमानस्य हवनीयद्रव्यस्य फलं जुषतां सेवतां प्राप्नोत्विति यावत् । किम्भूतं मनः—ज्योतिः ज्योतिरिव प्रकाशकमित्यर्थः । बृहस्पतिः इमं यज्ञं प्रकृतं कर्म तनोतु विस्तीर्णं करोतु । किञ्च बृहस्पतिरिमं यज्ञं संदधातु सम्पूर्णं करोतु । किम्भूतम्—अरिष्टं रिष्टहीनम् । तथा विश्वेदेवासः सर्वे देवाः इह प्रकृते कर्मणि मादयन्तां हृष्टा भवन्तु । एवं सति हे यज्ञ त्वम् ओम् अव रक्षण इत्यत ओङ्कारो रक्षणार्थः । रक्षितः सन् प्रतिष्ठ प्रतिष्ठितो भव । यत् किञ्चिद्वैश्वदेवादिकं कृतं तस्य फलं मदीयं मनः प्राप्नोतु । अस्मिंश्च कर्मणि बृहस्पतिना विस्तारिते पूरिते च सर्वे देवा हृष्टा भवन्तु तच्च कर्म प्रतिष्ठितं भूत्वा मदीयाभ्युदयाय सम्पद्यतामित्याशंसा वाक्यार्थः ।

**यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवैति ।**
**दूरङ्गमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसङ्कल्पमस्तु ॥ १३०**

[ वा स ३४, १ । का स ३३, १ ]

शिवसङ्कल्पऋर्षिर्मनो देवता त्रिष्टुप् छन्द आदित्योपस्थानादौ विनियोगः ।

यत् मनो जाग्रतः निद्राहीनस्य दूरम् उदैति गच्छति । किम्भूतम्—दैवं देवस्य ब्रह्मणो विज्ञान-स्वरूपस्य[१] प्रकाशकम् । उ अपिच तत् मनः सुप्तस्य निद्राणस्य तथैव दूरमेव एति आगच्छति । आगमनेन दूरत्वाभिधानं सर्वत्र[२] उपसंहृत-वृत्तित्वज्ञापनार्थम्[३] । किम्भूतं मनः—ज्योतिषां प्रकाशकानां चक्षुरादीन्द्रियाणां मध्ये दूरङ्गमं ज्योतिः दूरगामीन्द्रियम् । अन्यानि चक्षुरादीनि सन्निहितप्रकाशकानि

---

१ ङ—विज्ञानस्वरूप । छ—विज्ञानरूपस्य । प—विज्ञानमात्रस्य ।
२ क—सर्वत ।
३ क—°ख्यापनार्थम् ।

मनस्तु व्यवहितप्रकाशकमपीत्यर्थः। पुनः किम्भूतम्—एकम् उत्तमम्। चक्षुरादीनि स्थूलसन्निहितप्रकाशकानि [1]मनस्त्वसन्निहितसूक्ष्मप्रकाशकम्[1]। अतश्चक्षुरादीनामुत्तममेतत्। तत् मे मम मनः शिवसङ्कल्पमस्तु कल्याणाभिलाषि भवतु इत्याशंसा वाक्यार्थः।

**धामच्छदग्निरिन्द्रो ब्रह्मा देवो बृहस्पतिः।**
**सचेतसा विश्वे देवा यज्ञं प्रावन्तु नः शुभे ॥ १३१**

[ वा स १८, ७६ । का स २०, ४५ ]

मधुच्छन्द ऋषिरनुष्टुप् छन्दो विश्वेदेवा देवताश्चित्युपस्थाने[2] विनियोगः।

अग्निः इन्द्रः ब्रह्मा बृहस्पतिः एते यज्ञं प्रकृतं कर्म नः शुभे अस्माकमभ्युदयाय प्रावन्तु प्रापयन्तु। किम्भूतः—धामच्छत् धाम आश्रयं[3] छादयति पूरयतीति धामच्छत् न्यूनपूरणेनातिरिक्तशातनेन च यथावत्कारीत्यर्थः। पुनः किम्भूतः—देवः दानादिगुणयुक्तः। एतच्च विशेषणद्वयमग्न्यादिभिश्चतुर्भिः सह सम्बध्यते। किञ्च विश्वेदेवा यज्ञं नः अस्माकं शुभे शुभार्थं प्रावन्तु प्रापयन्तु। किम्भूताः—सचेतसः समानचेतसः एकमनस इति यावत्। [4]येऽग्न्यादयो देवता आश्रयभूतं कर्म यथावत् कुर्वन्ति त इम इदं प्रकृतं कर्मास्माकं शुभे प्रापयन्त्वित्याशंसा वाक्यार्थः।

**त्वं यविष्ठ दाशुषो नॄँः पाहि शृणुधी गिरः।**
**रक्षा तोकमुत त्मना ॥ १३२**

[ ऋ स ८, ८४, ३ । वा स १३, ५२ ; १८, ७७ । का स १४, ५४ , २०, ४६ ]

उशनाः काव्य ऋषिरग्निर्देवता गायत्री छन्दश्चित्युपस्थाने विनियोगः।

हे यविष्ठ युवतम अग्ने त्वं नॄन् मनुष्यान् भार्यादिपरिजनानिति यावत्। पाहि रक्ष। कस्य—दाशुषः दत्तवतः हवींषि दत्तवतो ममेत्यर्थः। किञ्च गिरः स्तुतीः स्तुतिवचनानि शृणुधि शृणु। श्रुत्वा च मम तोकम् अपत्यं रक्ष। उत अपिच त्मना आत्मानं गार्हपत्यादिरूपेणावस्थितं रक्षेति सम्बन्धः। हे अग्ने त्वं मद्दत्तानि हवींषि गृहीत्वा स्तुतिवाक्यानि च श्रुत्वा मम भार्यादिपरिजनान् गार्हपत्यादग्नींश्च रक्षेत्यभ्यर्थना वाक्यार्थः। अत्र दाशुष इति दाशृ इत्यस्माल्लिटः क्वसुः। दाश्वान् साह्वान् मीढ्वांश्चेति (पा ६, १, १२)

---

1 प—मनस्तु सूक्ष्मव्यवहितप्रकाशकमित्यर्थः।
2 प—°श्चग्न्युपस्थाने।
3 प—मखेशं।
4 क—ये ये

अद्विर्वचनमनिट्त्वञ्च निपात्यते। दाश्वस्शब्दस्य षष्ठ्येकवचने सम्प्रसारणे कृते रूपम्। त्मना इति मन्त्रेष्वाङ्यादेरात्मन इति ( पा ६, ४, १४१ ) आकारलोपः। द्वितीयार्थे तृतीया।

**एतेन रुद्रावसेन परो मूजवतोऽतीहि।**

**अवततधन्वा पिनाकावसः कृत्तिवासा अहिꣳसन्नः शिवः**

**शान्तोऽतीहि ॥ १३३**

[ वा स ३, ६१—एतत्ते रुद्रावसं तेन परो। शिवोऽतीहि। का स ३, ७० ]

प्रजापतिर्ऋषिरास्तारपंक्तिश्छन्दो[1] रुद्रो देवता त्र्यैयम्बकपुरोडाशासञ्जने विनियोगः।

हे रुद्र अतीहि याहि। [2]केन—अवसेन एतेन[2]। अवसं वत्म सम्बलम्। एतेनोपस्थितेन पुरोडाशरूपेण सम्बलेन। किम्भूतः—मूजवतः परः[3] मूजवन्नाम सुमेरुशृङ्गं भगवतो रुद्रस्य निवासः तस्य परः परस्ताद्गामी। किम्भूतः—अवततधन्वा आरोपितधनुष्कः हिंस्रादीनामलङ्घ्य इत्यर्थः। पुनः किम्भूतः—पिनाकावसः पिनाको रुद्राङ्कुशः तत्र कृतम् अवसं सम्बलं येन स पिनाकावसः। तथा[4] कृत्तिवासाः—कृत्तिश्चर्म वासः परिधानं यस्य एवम्भूतस्त्वं नः अस्मान् अहिंसन् शिवः परमेश्वरः शान्तः सौम्यः अतीहि याहि। पुनर्वचनं पूजार्थम्। एतं[5] पुरोडाशं सम्बलं रुद्राङ्कुशे कृत्वा धनुरारोप्यास्मानहिंसन् सौम्यो भूत्वा मूजवतं स्वस्थानं याहीति [6]प्रेषणं वाक्यार्थः।

**ओं नमो ब्रह्मणे नमोऽस्त्वग्नये नमः पृथिव्यै नम ओषधिभ्यो**

**नमो वाचे नमो वाचस्पतये नमो विष्णवे महते करोमि ॥ १३४**

[ तै आ २, १२, १। आप श्रौ १४, ३४, ५। आ गृ ३, ३, ४ ]

ओङ्कारो रक्षणार्थो मङ्गलार्थो वा। इदं शान्तिकर्म रक्षितं भवत्वित्यर्थः। ब्रह्मणे नमोऽस्तु अग्नये नमोऽस्तु पृथिव्यै नमोऽस्तु। ओषधिभ्यो नमः व्रीह्यादीभ्यो नमोऽस्तु। तथा वाचे नमस्करोमि वाचस्पतये बृहस्पतये नमस्करोमि विष्णवे नमस्करोमि महते महदाख्यतत्त्वाय[7] नमस्करोमि। अनेन शान्तिकर्मणा ममाभ्युदयसिद्धये ब्रह्मादीन्नमस्करोमीति व्याख्यार्थः।

---

१ छ—°ऋषिर्विष्टारपंक्तिश्छन्दो।
२ छ—केनैतेन अवसेचनेन।
३ घ—पारमित्यधिकम्।
४ छ—च इत्यधिकम्।
५ छ—एवं।
६ छ—प्रेरणं।
७ छ—महत्तत्त्वाय।

**ये देवासो दिव्येकादश स्थ पृथिव्यामध्येकादश स्थ ।**
**अप्सुक्षितो महिनैकादश स्थ ते देवासो यज्ञमिमं जुषध्वम् ॥१२५**

[ ऋ स १, १३९, ११ । वा स ७, १९ । का स ७, २० ]

परुच्छेप[1] ऋषिर्विश्वेदेवा देवता त्रिष्टुप् छन्द आग्रयणग्रहणे[2] विनियोगः ।

हे[3] देवासः देवा ये यूयं दिवि स्वर्गे एकादश स्थ एकादशकोटिसंख्याः तिष्ठत । तथा पृथिव्याम् अधि पृथिव्युपरि एकादश स्थ । तथा अप्सुक्षित अप्सु इत्येवंरूपः शब्द आकाशवाचो तत्र क्षितः स्थिताः[4] आकाशस्था इत्यर्थः । एकादशकोटिसंख्याः स्थ । केन स्थिताः—महिना महिम्ना माहात्म्येनेत्यर्थः । हे[5] देवास इमं यज्ञं शान्तिकरणरूपं[6] जुषध्वं सेवध्वम् । स्वर्गाकाशपृथिवीस्थास्त्रयस्त्रिंशत्कोटिसंख्या देवा इदं शान्तिकर्माधिष्ठायास्माकमभ्युदयं कुर्वन्त्विति अभ्यर्थना वाक्यार्थः ।

इत्यावसथिक-महाधर्माधिकृत श्रीहलायुधविरचिते ब्राह्मणसर्वस्वे वैश्वदेव-मन्त्रव्याख्या
शान्तिकाध्यायव्याख्या च समाप्ता ॥

## अथातिथिपूजा

तत्र मनुः [ ३, १०८ ]

वैश्वदेवे तु निर्वृत्ते यद्यन्योऽतिथिराव्रजेत् ।
तस्याप्यन्नं यथाशक्ति प्रदद्यान्न बलिं हरेत् ॥

शातातप-पराशरौ [ परा १, ४० ]

प्रियो वा यदि वा द्वेष्यो मूर्खः पण्डित एव वा ।
वैश्वदेवे तु सम्प्राप्तः[7] सोऽतिथिः स्वर्गसंक्रमः ॥

बलिदानानन्तरं विष्णुपुराणम् [ ३, ११, ५६-५८ ]

ततो गोदोहमात्रं वै कालं तिष्ठेद् गृहाङ्गणे ।
अतिथिग्रहणार्थाय तदूर्ध्वं वा यथेच्छया ॥
अतिथिं तत्र संप्राप्तं पूजयेत् स्वागतादिना ।
तथासनप्रदानेन पादप्रक्षालनेन च ॥

---

१ क१—पुरुच्छदा । छ—पुरुच्छेप ।
त—प—शुनःशेप ।
२ क—घ—ङ—छ—आग्रयग्रहणे ।
३ त—ते ।
४ छ—नास्ति ।
५ त—ते ।
६ छ—शान्तिकर्मणे यूयं ।
७ क१—सम्प्राप्ते ।

श्रद्धया चान्नदानेन प्रियप्रश्नोत्तरेण च ।
गच्छतश्चानुयानेन प्रीतिमुत्पादयेद्गृही ॥
अज्ञातकुलनामानमन्यतः समुपागतम् ।
पूजयेदतिथिं सम्यङ् नैकग्रामनिवासिनम् ॥

बलिदानानन्तरं शङ्खलिखितौ

[१]आगोदोहमात्रं कालमाकाङ्क्षेदतिथिम्[१] । श्रोत्रियो वेदव्रती यतिधर्मा नैष्ठिकः समानवृत्तिर्योऽन्यो वाऽभ्यागच्छेत्तस्मिन् काले तमर्चयित्वाऽश्नीयात् । कृशवृत्तेरपि[२] ब्राह्मणो ह्यनश्नन् सुकृतमादत्ते पर्यश्नतः । [३]प्रजां क्रन्तति[३] वाग्दुरितेनाग्नयः शाम्यन्ति तस्मादाकिंतांश्चिनर्नानृतवादी न पूर्वाशी न [४]शुक्तवाक्याभिधायी भवेत् ।

एवं ह्याह— अपि शाकं पचानस्य शिलोञ्छेनापि जीवतः ।
जुह्वानस्याग्निहोत्रं तु नाऽतिथिर्विमना भवेत् ॥
अग्नयोऽतिथिमिच्छन्ति सोऽतिथिः स्वर्गमिच्छति ।
स्वर्गोऽपीच्छति दातारं सम्यक् सुकृतकारिणम् ॥
प्रार्थयन्ते यथा सर्वे निपानं मृगपक्षिणः ।
एवं गृहस्थं सम्पन्नं प्रार्थयन्ते हि साधवः ॥

अतिथ्यधिकारे हारीतः

तस्यैष[५] यदाह स्वागतमिति गृहदेवतास्तेन प्रीणाति । यत् पादावनेजनं[६] कुरुते पितॄंस्तेन प्रीणाति[७] । यदन्नेनाभिपूजयति प्रजापतिं तेन प्रीणाति । यदेनं यान्तमनुयाति श्रेयस्वी ब्रह्मवर्चस्वस्तेन[८] सर्वान् कामानवाप्नोति ।

मनुः [ ३, १०२ ]

एकरात्रन्तु निवसन्नतिथिर्ब्राह्मणः स्मृतः ।
अनित्यं हि स्थिता यस्मात्तस्मादतिथिरुच्यते ॥

याज्ञवल्क्यः [ १, १११ ]

अध्वनीनोऽतिथिर्ज्ञेयः श्रोत्रियो वेदपारगः ।
मान्यावेतौ गृहस्थस्य ब्रह्मलोकमभीप्सतः ॥

---

१ कृत्यक, नियत १७६—वीरमि, श्राद्धि ४४२—गोदोहनमात्रं कालमन्वाकाङ्क्षेत् अतिथिः ।
२ क—कृशवृत्ति° । क१—छ—कृषिवृत्ते° । क२—कुशूलवृत्ति° ।
३ त—पूजां क्रन्तति । वीमि, श्राद्धि—पूजां कुर्वन्ति ।
४ छ—सूक्तवाक्या ।
५ क२—घ—तस्यैव ।
६ क—ङ—त—°सेचनं । छ—°पादसेचनं ।
७ प—तर्पयति ।
८ ङ—ब्रह्मवर्चस्वं तेन ।

पराशरः [ १, ४१ द्र: ]

अचिन्तितमनाहूतं देशकाल उपस्थितम् ।
अतिथिं तं विजानीयान्नातिथिः पूर्वमागतः ।

तथा क्षुधार्तस्तृषितः [1]श्रान्तो [2]दूरादध्वन आगतः ।
तं पूजयेत् प्रयत्नेन सोऽतिथिः स्वर्गसंक्रमः ॥

मनुः [ ३, १०३ ]

नैकग्रामीणमतिथिं विप्रं साङ्गतिकं तथा ।
उपस्थितं गृहे विद्याद्भार्या यत्राग्नयोऽपि वा ॥

शङ्खः न यज्ञैर्दक्षिणावद्भिर्वह्निशुश्रूषया तथा ।
गृही स्वर्गमवाप्नोति यथा त्वतिथिपूजनात् ॥

यमः नाग्निहोत्रेण दानेन नोपवासोपलेपनैः[3] ।
देवताः परितुष्यन्ति यथा त्वतिथिपूजनात् ॥
[4]विप्रपादोदकक्लिन्ना यावत्तिष्ठति मेदिनी ।
तावत् पुष्करपात्रेण पिबन्ति पितरो जलम् ॥
यस्याध्वखिन्नाः पथिका गृहमायान्ति कर्षिताः ।
पूज्यन्ते [5]तृणभूम्याद्यैः पितरस्तेन पुत्रिणः ॥

बौधायनः [ बौ ध २, ५, १२ ]

यदा बहूनां न शक्नुयादेकस्मै गुणवते दद्याद् यो वा प्रथममागतः[6] स्यात् ।

पैठीनसिः

विशेषतोऽन्नमतिथये दद्यात् । पुत्रं जातमुदीक्षन्ते श्रोत्रियं भोजयिष्यतीति [7]वल्गन्ति नृत्यन्ति पितरः पितामहाश्च स्वागतेनाग्निरासनेनेन्द्रः प्रचेताः पाद्येनाऽऽद्येन प्रजापतिः[7] ।

---

१ क—श्रान्तो ।
२ ङ—क—दैवाद° ।
३ क—नोपवास फलेन च । त—°पसेवनैः ।
४ क—पुनर्यमः इत्यधिकम् । इत आरभ्य पठितं पुत्रिण इत्यन्तं श्लोकद्वयं कृत्यकल्पतरौ ( नियतकाल १९८ ) बृहस्पतिवचनत्वेनोद्धृतम् ।
५ प—गृहभूम्याद्यैः ।
६ क—प्रथमतः ।
७ क१—इति वल्गन्ति नृत्यन्ति पितरः प्रपितामहः । प्रीयते स्वागतेनाग्निरासनेन शतक्रतुः । पितरः पाद्यदानेन अन्नाद्येन प्रजापतिः ॥ प्रीयत इत्यादिवचनं किञ्चित्परिवृत्त्या कृत्यकल्पतरौ ( नियत १९८ ) वीरमित्रोदये ( आह्निक ४३४ ) च बृहस्पतिनाम्नोद्धृतम् । क—इति वल्गन्ति नृत्यन्ति पितामहाः प्रपितामहाश्च । स्वागतेनाग्नयः प्रीतास्त्वासनेन शतक्रतुः । पितरः पादशौचेन भोजनेन प्रजापतिः ॥ तथा ।

मनुः [ ३, १०५ ]

अप्रणोद्योऽतिथिः सायं सूर्योढो गृहमेधिना ।
काले प्राप्तस्त्वकाले[1] वा नास्याऽनश्नन् गृहे वसेत् ॥

तथा [ ३, १००-१ ]

शिलानप्युञ्छतो नित्यं पञ्चाग्नीनपि जुह्वतः ।
सर्वं सुकृतमादत्ते ब्राह्मणोऽनर्चितो वसन् ॥
तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता ।
एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन ॥

विष्णुपुराणम् [ ३, ११, १०५ ]

[2]दिनेऽतिथौ तु विमुखे गते यत् पातकं नृप[3] ।
तदेवाष्टगुणं पुंसां सूर्योढे विमुखे गते ॥

इत्यतिथिपूजाप्रकरणम् ॥

## अथ श्राद्धमन्त्रव्याख्या

लक्ष्मणक्षोणिपालस्य धर्माध्यक्षो हलायुधः ।
[4]निखिलश्राद्धमन्त्राणां व्याख्यां ख्यापितवानिमाम् ॥

तत्र यद्यपि नित्याह्निकप्रसङ्गवशात्[5] प्रथमतो नित्यश्राद्धमन्त्रव्याख्यैव कर्तुं युज्यते तथापि सर्वेषामेवान्येषां सपिण्डीकरणनित्यश्राद्धैकोद्दिष्टश्राद्धादीनां प्रकृतिभूतसर्वप्रधानपार्वणश्राद्धविध्यन्तर्भावित्वेन[6] पार्वणश्राद्धमन्त्रव्याख्यानादेव सकलनित्यनैमित्तिककाम्यश्राद्धमन्त्रव्याख्यानस्य सिद्धेः[7] पार्वणमन्त्रव्याख्यानमेव प्रथमतः क्रियते। ये तु सपिण्डीकरणवृद्धिश्राद्धयोर्मन्त्रा अत्र न प्राप्यन्ते तेऽप्यस्यैव शेषे व्याख्येयाः ।

अथ पार्वणश्राद्धम्

तत्र कुशासनदानानन्तरं विश्वेदेवानामावाहनम्। आसनेषु दर्भानास्तीर्य विश्वान् देवानहमावाहयिष्ये इति पृच्छति ।

---

१ क—प्राप्ते त्वकाले ।
२ क—दिवातिथौ ।
३ क—वृथा ।
४ क१—लिलेख श्राद्ध° ।
५ क—नित्याह्निकप्रशंसावशात् ।
६ क१—त—व—°विध्यन्तर्गाहित्वेन ।
७ क—सिद्धितः ।

आवाहयेत्यनुज्ञातो विश्वेदेवास इत्यृचा ।
यवैरन्ववकीर्याथ भाजने सपवित्रके ॥

इति याज्ञवल्क्यः [ १, २२८ ]।

आवाहयेत्यनुज्ञातो विश्वेदेवास आगतेत्यनयाऽवाह्येति कात्यायनः [ का श्राद्ध २ ]

तत्र गृत्समद ऋषिर्विश्वेदेवा देवता गायत्री छन्दोऽग्निष्टोमे वैश्वदेवग्रहणे विनियोगः।

विश्वे देवास आगत शृणुता म इमᳬ हवम् ।
एदं बर्हिर्निषीदत ॥ १३६

[ ऋ स २, ४१, १३ । वा स—का स ७, ३४ ]

यवविकिरणानन्तरं जपः। यथा[१] कात्यायनः [ का श्रा २ ]

अवकीर्य विश्वेदेवाः शृणुतेममिति जपित्वेति ।

तत्र[२] सुहोत्र ऋषिर्विश्वेदेवा देवता त्रिष्टुप् छन्दः सर्वमेधे[३] वैश्वदेवग्रहणे विनियोगः।

विश्वे देवाः शृणुतेमᳬ हवं मे ये अन्तरिक्षे य उप द्यवि ष्ठ ।
ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन् बर्हिषि मादयध्वम् ॥ १३७

[ ऋ स ६, ५२, १३ । वा स ३३, ५३ । का स ३२, ५३ ]

एतन्मन्त्रद्वयस्य व्याख्यानं मध्याह्नसन्ध्यायां तर्पणविषये ( ११६, ११७ पृः ) कृतम्। तेनात्र न कृतम्।

एतज्जपानन्तरं पितॄणामावाहनम् यथा कात्यायनः [ का श्राद्ध २ ]

उशन्तस्त्वेत्यनया आवाह्येति ।

तत्र शङ्ख ऋषिस्त्रिष्टुप्[४] छन्दः पितरो देवता सौत्रामण्यामग्न्युपस्थाने[५] विनियोगः।

उशन्तस्त्वा नि धीमह्युशन्तः समिधीमहि ।
उशन्नुशत आ वह पितॄन् हविषे अत्तवे ॥ १३८

[ ऋ स १०, १६, १२ । वा स १९, ७० । का स २१, ७० ]

---

१ क—तथा।
२ क—अत्र।
३ क—अश्वमेधे।
४ क—ऋषिरनुष्टुप्।
५ क—सौत्रामण्युपस्थाने।

अस्य मन्त्रस्य व्याख्यानं तर्पणप्रस्तावे ( ११८ पृः ) कृतम्। तर्पणदेयस्य जलस्य पानार्थमित्यत्र श्राद्धदेयस्य हविषो भक्षणायेति विशेषः।

आवाहनानन्तरं जपः। यथा कात्यायनः [ का श्रा २ ]

अवकीर्यायन्तु न इति जपित्वेति।

तत्र शङ्ख ऋषिरनुष्टुप्[1] छन्दः पितरो देवता [2]सौत्रामण्यामन्त्रप्रस्थाने विनियोगः।

**आ यन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः।**
**अस्मिन् यज्ञे स्वधया मदन्तोऽधि ब्रुवन्तु तेऽवन्त्वस्मान् ॥१३९**

[ वा स १९, ५८। का स २१, ५९ ]

[ मन्त्रोऽयं तर्पणप्रस्तावे ( ११९ पृः ) व्याख्यातः। तत्रत्ये 'तर्पणरूपे पितृयज्ञे' इत्यत्र 'अस्मिन् श्राद्धे' तथा 'तर्पणजलेन' इत्यत्र 'श्राद्धदत्तेनान्नेन' इति विशेषव्याख्यानम्। ]

ततः पात्रेषु जलदानं कात्यायनः [ का श्रा २ ]

यज्ञियवृक्षचमसेषु पवित्रान्तर्हितेष्वेकैकस्मिन्नप आसिञ्चति शन्नो देवीरिति।

तत्र दध्यङ्ङाथर्वण ऋषिरापो देवता गायत्री छन्दो महावीराद्यन्तयोः शान्तिकरणे विनियोगः।

**शं नो देवी° ॥ १४०**

[ स्नानप्रस्तावे ( ९२ पृः ) ग्रहपूजायाञ्च ( १३० पृः ) मन्त्रोऽयं व्याख्यातः ]

ततो दैवपात्रे यवदानम्।

तत्र प्रजापतिर्ऋषिर्यवो देवता। यजुष्ट्वाच्छन्दो नास्ति। [3]अग्निष्टोमेऽप्सु यवक्षेपे[3] विनियोगः।

**यवोऽसि यवयास्मद्द्वेषो यवयारातीः ॥ १४१**

[ वा स ५, २६। का स ५, ३३। तै स १, ३, १, ८ ]

यवः असि पृथक्कारी भवसि। अस्मद्द्वेषः अस्मद्दुरुपचारजातशत्रून्[4] यवय पृथक्कुरु परस्परभिन्नान् संहतिरहितान् कुर्वित्यर्थः। न केवलं द्वेषः[5] अरातीः

---

१ छ—ऋषिस्त्रिष्टुप्।
२ छ—सौत्रामण्युपस्थाने।
३ छ—अग्निष्टोमे।
४ क—°द्दुरुपचारजातशत्रून्।
क१—अस्मदपचारजातश्शत्रून्।
क२—°द्दुरुपचारगतशत्रून्।
ङ—°दुपचारजातशत्रून्।
छ—°दुपचारजातशत्रून्।
प—°दुपचारकान्।
५ द्वेष इति मातृका-पुस्तकेषु न

सहजशत्रूंश्च यवय असंहतान् कुरु। यतस्त्वं पृथक्कार्यतोऽस्माकं शत्रून् भिन्नान् कुर्विति वाक्यार्थः। द्वेष इति कृत्रिमशत्रुवाची। अरातिः सहजशत्रुः। अत्र यु मिश्रण इत्यस्य धातोः पचाद्यच् ( पा ३, १, १३४ ) इत्यच्प्रत्यये कृते यव इति कर्तरि रूपम्। यवय इति तस्यैव धातोर्ऋदोरप् ( पा ३, ३, ५७ ) इत्यप्-प्रत्ययेन यवः। तत् करोति तदाचष्ट इति ( गणसू ) णिच्प्रत्यये लोण्मध्यम-पुरुषैकवचने रूपम्। द्वेष इति द्विष इति प्राप्ते छान्दसत्वादिकारस्य स्थाने एकारः। अरातिशब्दः स्त्रीलिङ्गोऽपि वेदे दृश्यते। [1]यथा उत स्वस्या अरात्या इति प्रदेशान्तरे ( ऋ स ८, ९८, ३ ) पठ्यते[1]।

ततः पितृपात्रेषु तिलप्रक्षेपे कात्यायनः [ का श्राद्ध २ ]

एकैकस्मिन्नेव तिलानावपति तिलोऽसीत्यादि।

**तिलोऽसि सोमदैवत्यो गोसवो देवनिर्मितः।**

**प्रत्नमद्भिः पृक्तः स्वधया पितॄँल्लोकान् प्रीणाहि नः स्वाहा॥ १४२**

[ का श्राद्ध २। आ गृ ४, ७, ११ ]

तिलः त्वम् असि भवसि। किम्भूतः—सोमदैवत्यः सोमो देवता अस्येति सोमदैवत्यः। पुनः किम्भूतः—गोसवः गां स्वर्गं सूते। तिलो हि दत्तः सन् दातुः पापक्षयं कुर्वाणः स्वर्गं जनयति। अपि किम्भूतः—देवनिर्मितः देवेन विष्णुना निर्मितः उत्पादितः। अपि किम्भूतः—अद्भिः पृक्तः जलेन मिश्रितः। यतस्त्वमेवम्भूतस्तस्मादस्माकं पितॄन् लोकान् पितृपितामहादीन्[2] प्रत्नं चिरकालं स्वधया स्वधाकारेण प्रीणाहि प्रीतान् कुरु। स्वाहाकारस्तिलप्रक्षेपे। तिलोऽसी-त्यादि स्वधयेत्यन्तेन तिलं स्तुत्वा त्वमस्माकं पितॄन् प्रीतान् कुर्विति याच्ञा वाक्यार्थः। अत्र प्रीणाहीति प्रीञ्धातोः लोट्सिपि वा छन्दसीति [ पा ३, ४, ८८ ] विकल्पेन पित्त्वे सति ङित्त्वाभावात्तन्निबन्धन ईकारो न[3] भवति। यद्यपि स्वाहा देवहविर्दाने [ अमरः ३, ४, ८ ] इति दर्शनादत्र पितृकर्मणि स्वाहाकारोऽयुक्तस्तथापि कात्यायनेन महर्षिणा ( का श्राद्ध २ ) स्वाहान्तस्यैव मन्त्रस्य पाठादनुपपत्तिर्नाशङ्कनीया।

---

१ यथेत्यादिः पठ्यत इत्यन्तोऽंशो ङ-च-पुस्तकयो-र्नास्ति। त-पुस्तके—यथा उ तस्या अरात्या इति पाठः।

२ क—पितृप्रभृतीन्।
क१—ङ—छ—पितृपितामहप्रभृतीन्।

३ छ—नास्ति।

[ व्याख्यातस्यास्य मन्त्रस्य आश्वलायनगृह्यसूत्रे ( ४, ७, ११ ) पाठा एवमुपलभ्यन्ते—

तिलोऽसि सोमदैवत्यो गोसवे देवनिर्मितः

प्रत्नवद्भिः प्रत्तः स्वधया पितॄनिमाँल्लोकान् प्रीणया हि नः ॥ ] १४२

एकैकस्यैकैकेन ददाति या दिव्या इति कात्यायनः [ का श्राद्ध २ ]।

**या दिव्या आपः पयसा सम्बभूवुर्या**

**आन्तरिक्षा उत पार्थिवीर्याः।**

**हिरण्यवर्णा यज्ञियास्ता न आपः शिवाः शꣳ**

**स्योनाः सुहवा भवन्तु ॥ १४३**

[ का श्राद्ध २। आ गृ ४, ७, १५—या दिव्या आपः पृथिवी सम्बभूवुर्या अन्तरिक्ष्याः। स्योना भवन्तु। प्रथमार्धमात्रम् तै ब्रा २, ७, १५, ४—अन्तरिक्ष उत ]

आपः पानीयानि पयसा क्षीरेण सम्बभूवुः संगता[1] बभूवुः माधुर्य-शीतत्वादिना[2] एकीभूता इत्यर्थः। कास्ता आपः—या दिव्याः दिवि स्वर्गे भूताः[3]। उत अपि या आन्तरिक्षा आकाशे भूताः। उत अपि याः पार्थिवीः पृथिव्यां भूताः। उतशब्द उभाभ्यां सम्बध्यते। किम्भूताः—हिरण्यवर्णाः हिरण्यं रजतं[4] [5]तत्समानवर्णाः शुभ्रवर्णाः[5]। पुनः किम्भूताः—यज्ञियाः यज्ञार्हाः। ता आपः नः अस्माकं शिवाः क्षेमा भवन्तु। न केवलं शिवा अपि तु[6] शं कल्याण्यो भवन्तु। स्योनाः सुखदा भवन्तु। सुहवाः सुष्ठु[7] ब्राह्मणहस्ते[8] हुताः। भवन्त्वित्यनेनैव सम्बन्धः। अत्र पार्थिवीरिति प्रथमाबहुवचने विभक्ति-व्यत्ययेन[9] द्वितीयाबहुवचनम्[10]। स्योनमिति सुखनाम निरुक्ते [ ८, ९ ] पठ्यते। वाक्यार्थस्तु—या दिव्या इत्यादिना यज्ञिया इत्यन्तेनापः स्तुत्वा ता अस्माकं क्षेमाः कल्याण्यः सुखाः सुहुताश्च[11] भवन्त्वित्याशंसा। १४३

प्रथमपात्रे संस्रवं समवनीय पात्रं न्युब्जीकरोतीति कात्यायनः [का श्रा २]।

**पितृभ्यः स्थानमसि ॥ १४४**

[ का श्रा २। याज्ञ १, २३४ ]

---

१ ङ—छ—संहता।

२ छ—°शीलत्वादिना।

३ क—घ—च—भवाः।

४ क—च—पुस्तकयोर्हिरण्यं रजतमिति नास्ति।

५ क—रजतसमानवर्णाः।

प—तत्सवर्णा शुक्लवर्णा इत्यर्थः।

६ छ—अपि च।

७ छ—नास्ति।

८ ङ—°हस्तेन।

९ छ—वा इत्यधिकम्।

१० क—च—जस्स्थाने शस्।

११ छ—स्वर्गदाश्च।

हे पात्र पितृभ्यः पितॄणां स्थानम् असि भवसि। अत्र पितृभ्य इति षष्ठ्यर्थे चतुर्थी। यतस्त्वं पितॄणां स्थानं भवस्यतस्त्वं पितॄणामवस्थानाय न्युब्जीकृतमित्यभिप्रायः। तत्र च पितरस्तिष्ठन्तीति स्मृतिः[1] [ आ गृ ४, ७, १४ द्रः ]

आवृतास्तत्र तिष्ठन्ति पितरः श्राद्धदेवताः॥ १४४

उद्धृत्य घृताक्तमन्नं पृच्छत्यग्नौ करिष्ये इति कात्यायनः [ का श्रा ३ ]।

तत्राग्नौकरणहोममन्त्रद्वयस्य प्रजापतिर्ऋषिर्देवो देवता। यजुष्ट्वाच्छन्दो नास्ति। अग्नौकरणहोमे विनियोगः।

**अग्नये कव्यवाहनाय स्वाहा॥ १४५**

[ वा स २, २९। का स २, ५४ ]

अग्नये स्वाहा। किम्भूताय—कव्यवाहनाय कव्यं पितॄणामन्नं तत् पितृभ्यो वहति प्रापयतीति कव्यवाहनस्तस्मै। १४५

**सोमाय पितृमते स्वाहा॥ १४६**

सोमाय स्वाहा। किम्भूताय—पितृमते पितरोऽस्य सन्तीति पितृमान् तस्मै। १४६

हुतशेषं दत्त्वा पात्रमालभ्य जपति। पृथिवी ते पात्रमिति कात्यायनः [ का श्रा ३ ]।

**पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहा॥ १४७**

[ का श्रा ३। ]

हे अग्नौकरणशेष ते तव पात्रम् आधारः पृथिवी विश्वस्याधारभूता। अपिधानम् आवरणं द्यौः आकाशम्। त्वाम् अमृतं हुतशिष्टं ब्राह्मणस्य मुखे जुहोमि। किम्भूते—अमृते अनष्टे अभक्ष्यभक्षणादिभिरदूषिते इत्यर्थः। अत्र ते इति युष्मच्छब्दप्रयोगदर्शनात् प्रकृतत्वाच्च हे अग्नौकरणशेष इति सम्बोधनमध्याहृतम्। अमृतमिति विशेषणपदप्रदर्शनात् त्वामिति विशेष्य कर्मपदं

---

[1] त—बृहस्पतिः। प—श्रुतिः।
नोद्धरेत् प्रथमं पात्रं पितॄणामर्घ्यपातितम्।
आवृतास्तत्र तिष्ठन्ति पितरः शौनकोऽब्रवीत्॥
इत्याश्वलायनगृह्यसूत्रे ( ४, ७, १४ ) वचनमुपलभ्यते। वीरमित्रोदये ( श्राद्धप्रकाश २२१ ) पुनरेतदापस्तम्बनाम्नोद्धृतम्। तत्र चतुर्थचरणपाठे विशेषः—यावद्विप्रविसर्जनमिति।

कल्पितम्। पृथिवी ते पात्रमित्यनेन भोजनपात्रं स्तुतम्। द्यौरपिधानमित्यनेन चानावृतं हविर्येन केनापि दूष्यत[1] इति शङ्का निराकृता। ब्राह्मणस्य मुखे अग्निसदृशे त्वामम्नृतं जुहोमीति याच्ञा वाक्यार्थः। जुहोमीति होमप्रतिपादनात् स्वाहापदसमावेशः। ब्राह्मणस्याग्निसदृशत्वे श्राद्धाधिकारे आपस्तम्बः [ आप ध २, १६, २ ] पितरोऽत्र देवता ब्राह्मणास्त्वाहवनीयार्थे इति। १४७

वैष्णव्यर्चा यजुषा वाङ्गुष्ठमन्नेऽवगाह्येति कात्यायनः [ का श्रा ३ ]।

मेधातिथिर्ऋषिर्विष्णुर्देवता गायत्री छन्दोऽग्निष्टोमे वत्सहोमे विनियोगः।

**इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्।**
**समूढमस्य पाᳬसुरे॥ १४८**

[ ऋ स १, २२, १७। वा स ५, १५। का स ५, २० ]

विष्णुर्भगवान् इदम् अन्नं विचक्रमे आक्रान्तवान्। विष्णुरेव पदं निदधे निहितवान्। कथम्—त्रेधा त्रिप्रकारं पृथिव्यामाकाशे स्वर्गे च। अस्य विष्णोः पदं पांसुरे पांशुयुक्तायां[2] भूमौ[3] समूढं सम्यङ्निविष्टम्। अयमत्र वाक्यार्थः—यो विष्णुः पृथिव्यामाकाशे स्वर्गे च पदमर्पितवान् यस्य च पदं पृथिव्यां विशेषतः सम्यङ्निविष्टं स विष्णुरिदमन्नमाक्रान्तवान्। अतो राक्षसा[4] अपसरन्त्विति तात्पर्यार्थः। [ मन्त्रोऽयं मध्याह्नस्नानप्रस्तावेऽपि ( ८९ पृ ) व्याख्यातः। ] १४८

अपहता इति तिलान् विकीर्येति कात्यायनः [ का श्रा ३ ]।

तत्र प्रजापतिर्ऋषिरसुरा देवता। यजुष्टाच्छन्दो नास्ति। पिण्डपितृयज्ञे रेखाकरणे विनियोगः।

**अपहता असुरा रक्षाᳬसि वेदिषदः॥ १४९**

[ वा स २, २९। का स २, ५४ ]

असुरा अपहताः अपसारिताः। किम्भूताः—वेदिषदः वेदिः [5]श्राद्धार्थं संस्कृता[5] भूमिः तत्र सीदन्ति तिष्ठन्तीति वेदिषदः। न केवलमसुरा रक्षांसि राक्षसाश्च। अपसारिता इति सम्बन्धः[6]। अनेन विकीर्णतिलेन श्राद्धभूमिस्थिता असुरा राक्षसाश्च निराकृता इति वाक्यार्थः। १४९

---

१ छ—दृश्यत।
२ ङ—छ—धूलिकायां।
३ ङ—छ—पृथिव्यां।
४ प पुस्तकेऽतः परमपहता इत्यधिकम्।
५ प—परिष्कृता।
६ ङ—छ—अर्थः।

अन्नं मधुमयं ज्ञात्वा मधुवातेति मन्त्रितमिति यमः ।[१]

तत्र गोतम ऋषिर्विश्वेदेवा देवता गायत्रीच्छन्दश्चयने[२] कूर्मस्य[३] दधिमधु-घृताभ्यञ्जने विनियोगः ।

**मधु वाता ऋतायते मधु चरन्ति सिन्धवः ।**
**माध्वीर्नः सन्त्वोषधीः ॥**
**मधु नक्तमुतोषसो मधुमत् पार्थिवꣳ रजः ।**
**मधु द्यौरस्तु नः पिता ॥**
**मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः ।**
**माध्वीर्गावो भवन्तु नः ॥ १५०—१५२**

[ ऋ स १, ९०, ६—८ । वा म १३, २७—२९ । का म १४, २९—३१ ]

वाता मधु ऋतायन्ते वायवो मधु वहन्त्वित्यर्थः । सिन्धवो मधु चरन्तु नद्यो मधु स्रवन्तु । ओषधीः माध्वीः सन्तु ओषधयो[४] धान्यादयो मधुयुक्ता भवन्त्वित्यर्थः । नः अस्माकमिति स्थानत्रयेऽपि योज्यम् ।

नक्तं मधु अस्तु रात्रिर्मधुमती भवतु । उत न केवलं रात्रिः उषसः अपि मधु सन्त्विति[५] पूर्वेणैव सम्बन्धः । उषः प्रभातम् । पार्थिवं रजः मधुमत् अस्तु पृथिवी मधुमती भवत्वित्यर्थः । द्यौः स्वर्गो मधु अस्तु मधुमती भवतु । किम्भूता द्यौः—पिता पितेव सर्वस्यानुकूला[६] । अत्रापि न इति सर्वत्रैव योज्यम् ।

वनस्पतिः नः मधुमान् अस्तु । वनस्पतिः सोमः । सूर्यः नः मधुमान् अस्तु । गावः नः माध्वीः माध्व्यो भवन्तु ।

अत्र ऋतायते इति निघण्टौ[७] प्रापणार्थः । ऋतधातोर्लेट्प्रत्यये[८] कृते तिङां तिङो भवन्तीति बहुवचनस्थाने एकवचनेन ऋतायत इति रूपम् । तथा चरन्तीत्याशंसायां लेट्[९] । माध्वीरोषधीरिति च सुपां सुपो भवन्तीति प्रथमा-बहुवचनस्थाने द्वितीयाबहुवचनम् । अस्य काण्डिकात्रयस्य वाय्वादि सर्वमेतदस्मत्-पितॄणां मधुमयं भवत्वित्याशंसा वाक्यार्थः ।[१०] १५०—१५२

---

१ छ—कात्यायनः ।
२ घ—ङ—ज—छ—च्यवने ; न—च्यावने ; प—पवने ।
३ ङ—छ—कर्मस्य , ज—न—कर्मस्थ ।
४ छ—ओषध्यो ।
५ ङ—छ—स्रवन्त्विति ।
६ प— स्याघ्नानुगुणाः ( स्यानुगुणाः ) ।
७ क—का१—छ—व—निर्घण्टे । त—निर्घण्टुः । प्रापणार्थं ऋतधातुर्यास्क-व्याख्याते निघण्टौ न दृश्यते । ऋतायते इति पदं क्यच्प्रत्ययान्तात् यज्ञवाचिन ऋतशब्दात् शत्रन्तस्य ऋतायत्पदस्य चतुर्थ्येकवचनरूपमिति भाष्यान्तरेषु व्याख्यातम् ।
८ क—त—न—व—लोट् प्रत्यये । प—लिटि प्रत्यये ।
९ प—लोट् ।
१० छ—अपहृता इति व्याख्यातमेष इत्यधिकम् ।

पिण्डदानानन्तरमत्र पितर इत्युदक्षोदङ् ङास्ते इति कात्यायनः [ का श्रौ ४, १, १३ ]।

तत्र प्रजापतिर्ऋषिः पितरो देवता बृहती[1] छन्दः पिण्डपितृयज्ञे जपे[2] विनियोगः।

**अत्र पितरो मादयध्वं यथाभागमावृषायध्वम् ॥ १५३**

[ वा स २, ३१। का स २, १५ ]

हे पितरः अत्र पिण्डे मादयध्वम् मुदयुक्ता[3] भवत[4]। किञ्च यथाभागम् आवृषायध्वं स्वं स्वं भागं प्राप्य वृषा इव बलिनो भवत। अत्राङ्पूर्वाद्वृषशब्दात् कर्तुः क्यङ् सलोपश्चेति क्यङ् ( पा ३, १, ११ ) प्रत्ययः। स्वेच्छया पितॄणां पिण्डोपभोगार्थमभ्यर्थना वाक्यार्थः। १५३

आवृत्यामीमदन्तेति जपतीति कात्यायनः [ का श्रौ ४, १, १४ ]

तत्र प्रजापतिर्ऋषिः पितरो देवता। यजुष्ट्वाच्छन्दो नास्ति। पिण्डपितृयज्ञे जपे[5] विनियोगः।

**अमीमदन्त पितरो यथाभागमावृषायिषत ॥ १५४**

[ वा स २, ३१। का स २, १५ ]

पितरः अमीमदन्त मदं प्राप्तवन्तः[6] मद्दत्तेन पिण्डेन हर्षयुक्ता भूता[7] इत्यर्थः। किञ्च यथाभागम् आवृषायिषत स्वं स्वं भागं प्राप्य वृषा इव बलिनो भूताः। अमीमदन्तेति मदी [8]हर्षग्लपनयोरित्यस्माद्धातोः स्वार्थिकणिजन्ताच्चङि रूपम्। पूर्वमन्त्रकृते अभ्यर्थने प्रत्युत्तरं[9] वाक्यार्थः। १५४

नीविं विस्रंस्य नमो व इत्यञ्जलीन् करोतीति कात्यायनः [ का श्रौ ४, १, १५ ]।

तत्र षण्णां मन्त्राणां प्रजापतिर्ऋषिर्यथासंख्यं ग्रीष्मशिशिरवर्षावसन्तहेमन्तशरदः षड्ऋतवो देवता। यजुष्ट्वाच्छन्दो नास्ति। पितृपिण्डयज्ञे षडञ्जलिकरणे[10] विनियोगः।

---

१ छ—बृहस्पति।
२ ङ—छ—जपे इति नास्ति।
३ क—छ—मदयुक्ता।
४ छ—भवन्ति।
५ ङ—छ—जपे इति नास्ति।
६ प—प्राप्नुवन्तु।
७ प—भवन्तु।
८ छ—हर्षग्लानयोः।
९ छ—सप्तमील्युत्तरं।
१० प—षडुक्तिकरणे।

**नमो वः पितरः शुष्माय । नमो वः पितरस्तपसे ।**
**नमो वः पितरो यज्जीवं तस्मै । नमो वः पितरो रसाय ।**
**नमो वः पितरो घोराय मन्यवे । स्वधायै वः पितरो नमः ॥१५५**

[ वा स २, ३२ । का स २, ५७ । तै म ३, २, १५, १९ ]

[ मन्त्रस्यास्य व्याख्यानारम्भेऽव प-पुस्तके हलायुध-परिगृहीतात् काण्व-वाजसनेयिमन्त्रपाठात् प्राक् माध्यन्दिन-संहिता-पाठो धृतः—नमो वः पितरो रसाय नमो वः पितरः शोषाय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो घोराय नमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो वो गृहान्न. पितरो दत्त सतो वः पितरो देष्मै तद्वः पितरो वास इति माध्यन्दिने इति । तैत्तिरीयसंहितायामपि प्रायेण माध्यन्दिनीय-वाजसनेयिनामिव पाठा दृश्यन्ते । ]

[1]हे पितरो वः युष्मभ्यं नमः शुष्माय च नमः । शुष्माय शोषकारिणे ग्रीष्मायेत्यर्थः । हे पितरः वः युष्मभ्यं नमः तपसे च नमः । तप इति माघमासस्य नाम । तेन माघफाल्गुनात्मकशिशिरर्तोरेकदेशोल्लेखेन[2] तस्यैव नमस्कारः कृतः । हे पितरः वः युष्मभ्यं नमः यज्जीवं जलं तस्मै च नमः । अनेन वर्षानमस्कारः कृतः । हे पितरः वः युष्मभ्यं नमः रसाय च नमः । रसः पुष्परसस्तदुल्लेखेन[3] तत्कारणभूतस्य वसन्तस्य नमस्कारः कृतः । हे पितरः वः युष्मभ्यं नमः घोराय मन्यवे च नमः । हेमन्तायेत्यर्थः । हेमन्तः शीतप्रचुरत्वात् प्राणिनां भयहेतुत्वेन घोरः । मन्यवे क्रोधाय[4] । यथा क्रोधः[5] कश्चिद्[6] दुःखं जनयति तथायमपि शीतो दुःखं जनयतीत्यर्थः । हे पितरः वः युष्मभ्यं नमः स्वधायै च नमः । स्वधायै शरदे । यथा श्रुतिः [ श ब्रा १३, १, ८, ४ ] स्वधा वै शरत् स्वधो वै पितॄणामन्नमिति । एभिः षडृतुनमस्कारैः षड् वा ऋतवः पितर इति श्रुत्या [ श ब्रा ८, ४, ३, ८ ] प्रतिपादितेन ऋतुभिः सह पितॄणामभेदेनोभयनमस्कारः कृत इति वाक्यार्थः । १५५

एतद्व इत्युपास्यति[7] सूत्राणि प्रतिपिण्डमिति कात्यायनः [ का श्रौ ४, १, १७ ] ।

तत्र प्रजापतिर्ऋषिः पितरो देवता । यजुष्ट्वाच्छन्दो नास्ति । पिण्डपितृयज्ञे सूत्रदाने विनियोगः ।

**एतद्वः पितरो वासः ॥ १५६** [ वा स २, ३२ । का स २, ५७ ]

हे पितरः वः युष्मभ्यं एतत् वास आच्छादनम् । १५६

---

१ 'ब्राह्मणसर्वस्वे हलायुध' इति कृत्वा काण्वशाखि-पाठ-व्याख्यानमिदं रघुनन्दनेन श्राद्धतत्त्वे समुद्धृतम् ।

२ क—°देशोद्भवेन । ङ—°देशच्छेदेन । छ—°देशात् उद्भवेन ।

३ ङ— तदुद्भवेन ।

४ क—क२—क्रु द्धाय ।

५ क—क२—प—क्रु द्धः ।

६ क—क२—ङ—छ—कश्चिद

७ क—त—इत्युपास्थास्यति ।

ऊर्जमित्यपो[1] निषिञ्चतीति कात्यायनः (का श्री ४, १, १८)।

**ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम्।**

**स्वधा स्थ तर्पयत मे पितॄन्॥ १५७**

[वा स २, ३४। का स २, ६०]

स्वमात्मीयं धाः पोषणमनेनेति स्वधा। अस्यार्षादिकं व्याख्यानञ्च तर्पण-प्रस्तावे [१२० पृ] उक्तम्। १५७

आधत्तेति मध्यमं पिण्डं पत्नी प्राश्नाति पुत्रकामेति कात्यायनः (का श्री ४, १, २२)।

तत्र प्रजापतिर्ऋषिः पितरो[2] देवता गायत्री छन्दः पिण्डपितृयज्ञे पत्न्या मध्यमपिण्डप्राशने विनियोगः।

**आधत्त पितरो गर्भं कुमारं पुष्करस्रजम्।**

**यथेह पुरुषोऽसत्॥ १५८**

[वा स २, ३३। का स २, ५९]

हे पितरः गर्भम् आधत्त। किम्भूतम्—कुमारं पुत्रम्। तमपि किम्भूतम्—पुष्करस्रजं पुष्करस्य पद्मस्य[3] स्रक् माला अनयोरिति पुष्करस्रजावश्विनौकुमारौ ताविव पुष्करस्रजं दीर्घायुषं नीरुजं[4] सुरूपञ्चेत्यर्थः। यथा इह पुरुषः असत् येन प्रकारेणेहैववर्ती पुरुषो देवपितृमनुष्याणामभीष्टपूरयिता भूयात्। तथा गर्भम् आधत्त इत्यभिप्रायः। असदिति अस् भुवीत्यस्माद्धातोर्लिङः प्रथम-पुरुषैकवचने शप्। तस्य बहुलं छन्दसीति (पा २, ४, ७३) लुग्भवति। आगमानुशासनस्यानित्यत्वात् यासुडागमो न भवति। १५८

वाजे वाजेऽवतेति विसृज्येति कात्यायनः (का श्रा ३)

तत्र वसिष्ठ ऋषिस्त्रिष्टुप् छन्दोऽश्वा देवता वाजपेये बार्हस्पत्य-चर्वाघ्राणे[5] विनियोगः।

**वाजे वाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः।**

**अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः॥ १५९**

[ऋ स ७, ३८, ८। वा स ९, १८; २१, ११। का स १०, २४; २३, १२]

---

१ छ—°त्यापो।

२ छ—श्यापो।

३ घ—कमलस्य।

४ छ—निरुक्तं।

५ क—घ—च—°स्पत्यवर्च्चवघ्राणे।

ङ—स्पत्यवर्चवङ्घ्राणे। छ—स्पत्यवर्षवदघ्राघ्राणे।

त—स्पत्ययज्ञे। प—स्पत्ये वर्षवघ्राणे।

व—स्पत्यचर्वं च घ्राणे।

हे वाजिनः पितरः। वाजोऽन्नम् अस्यास्तीति वाजी तच्च श्राद्धे दत्तं पितृणामस्तीति पितर एव वाजिनः। अवत रक्षत। कुत्र—नः अस्माकं वाजे वाजे अन्नेऽन्ने यद्यदस्माकं[1] कृतमकृतञ्चान्नं श्राद्धार्थमुपस्थापितं तत्र सर्वत्र। न केवलं तत्र—धनेषु अन्नातिरिक्तश्राद्धीयद्रव्येषु च। किम्भूता यूयम्—विप्राः विप्रमूर्तयो विप्रदेहस्था इति यावत्। अपि किम्भूताः—अमृताः अमरधर्माणः। पुनः किम्भूताः—ऋतज्ञाः सत्यज्ञानशालिनः। रक्षित्वा च अस्य मध्वः पिबत एतदन्नसम्बन्धिनो मध्वः रसस्य पिबत। पीत्वा च मादयध्वम् तृप्यध्वम्। तृप्ताः सन्तः पथिभिर्यात वर्त्मभिर्गच्छत। किम्भूतैः—देवयानैः यैर्वर्त्मभिर्देवा यान्ति तैरित्यर्थः। अयं वाक्यार्थः—हे पितरो विप्रदेहस्था अस्माकं श्राद्धे दत्तमन्नं रक्षत रक्षित्वा तस्य रसं पीत्वा तृप्ताः सन्तो देवसेवितैर्वर्त्मभिः स्वर्गं गच्छतेति। मध्व इति मधुशब्दस्य षष्ठ्येकवचने रूपम्। आगमशासनानित्यत्वान्नुम् न भवति। संज्ञापूर्वकविधेरनित्यत्वाद् गुणश्च न भवतीति। १५९

आ मा वाजस्येत्यनुव्रज्य प्रदक्षिणीकृत्योपविशेदिति[2] कात्यायनः (का श्रौ ?)।

तत्र बृहस्पतीन्द्रावृषी त्रिष्टुप् छन्दः प्रजापतिर्देवता वाजपेये यजमानस्य नैवारचर्वारम्भे[3] विनियोगः।

> आ मा वाजस्य प्रसवो जगम्यादेमे
> द्यावापृथिवी विश्वरूपे।
> आ मा गतं पितरा मातरा युवमा मा
> सोमो अमृतत्वाय गम्यात्॥ १६०

[ वा स ९, १९—आ मा गन्तां पितरा मातरा चा मा सोमो अमृतत्वेन गम्यात्। का स १०, २५ ]

वाजस्य अन्नस्य प्रसवः फलं मा माम् आजगम्यात् पुनः पुनरागच्छतु। अस्मिन् श्राद्धे कृतस्यान्नदानस्य फलं मां प्रत्यागच्छत्वित्यर्थः। किञ्च इमे द्यावापृथिवी मा माम् आजगम्याताम् पुनः पुनरागच्छताम्। किम्भूते द्यावापृथिवी—विश्वरूपे विश्वं सर्वं रूपं ययोस्ते विश्वरूपे। एतेन पृथिवीसम्बन्धि कल्याणं स्वर्गसम्बन्धि च मामागच्छत्वित्याशंसा[4]। किञ्च—हे पितरा मातरा

---

१ छ—यद्यद्देवास्माकम्।

२ क—ङ—छ—°कृत्य प्रविशेदिति।
प—°कृत्य अपेदिति।

३ क—नैवारचर्वालम्भे। क२—नैवार्चारम्भे।
ङ—नैवारचरारम्भे।

४ क—च—समागच्छत्वित्याशंसा। ङ—मामागताभिप्रायः। छ—मामागच्छतु इति आशास्ते।

युवं युवां मा माम् आगतम्[1] आगच्छतम्। यदा यदाहं श्राद्धं करोमि तदा तदा मम मातापितरावागच्छतामित्यर्थः। किञ्च सोमः पितॄणां राजा मा माम् आगम्यात्[2] आगच्छतु। किमर्थम्—अमृतत्वाय मोक्षाय। श्राद्धं कृत्वा विसर्जितेषु पितृष्वनुव्रजने क्रियमाणे श्राद्धस्य फलं मम भवतु। पार्थिवसुखं मम भवतु स्वर्गो मम भवतु श्राद्धसमये मम मातापितरावागच्छतां मोक्षश्च मम भवत्वित्याशंसा वाक्यार्थः। अत्र आजगम्यादिति गम्लृ सृप्लृ गतावित्यस्य धातोर्मन्त्रादिस्थितेन आ इत्यनेनोपसृष्टस्य यङ्लुकि आशिषि लिङि कृते रूपम्। एतदेव वचनविपरिणामेन द्विवचनान्तम्। जगम्यादित्यस्य [3]परपठितेन आ इत्यनेन सम्बन्धः। द्यावापृथिवी इत्यत्रापि सम्बध्यते। आगतमित्यत्र[4] व्यवहितेन आ इत्यनेन सम्बन्धः। बहुलं छन्दसीति (पा २, ४, ७३) शपो लुक्। पितरामातरा इति मातापितराविति प्राप्ते पितरामातरा च छन्दसीति (पा ६, ३, ३३) निपातः। युवमिति प्रथमायाश्च द्विवचने भाषायामिति (पा ७, २, ८८) [5]भाषाविषय आकारस्य विधानादत्र छान्दसपदे आकारो न भवति[5] तेन युवमिति। आ मा सोमो अमृतत्वाय गम्यादिति व्यवहितेन आ इत्यनेन गम्यादित्यस्य सम्बन्धः।

इति पार्वणश्राद्धम्।

## अथ सपिण्डीकरणम्

प्रेतपात्रं पितृपात्रेष्वासिञ्चति ये समाना इति द्वाभ्यामिति सपिण्डने[6] कात्यायनः [का श्रा ५]।

तत्र प्रजापतिर्ऋषिः पितरो देवता अनुष्टुप् छन्दः सौत्रामण्यां ग्रहहोमे विनियोगः।

**ये समानाः समनसः पितरो यमराज्ये।**
**तेषां लोकः स्वधा नमो यज्ञो देवेषु कल्पताम्॥ १६१**

[वा स १९, ४५। का स २१, ४७]

ये पितरः पितामहप्रपितामहवृद्धप्रपितामहाः समानाः सपिण्डीकरणेन समानं[7] पितृलोकं प्राप्ताः अतएव समनसः समानहृदयाः यमराज्ये यमस्याधिकारे

---

१ क—क१—आगन्तं ; प—आगन्तां।

२ छ—आजगम्यात्।

३ छ—पूर्वपठितेन। त—अन्तपठितेन।

४ क—क१—क२—ङ—प—आगन्तमि°।

५ क-च-पुस्तकयोस्तु 'वचनाच्छन्दसि आत्वाभावः' इत्येतावन्मात्रम्। न—पुस्तके इतः परं 'शेषे लोपश्च भवत्येव' इत्यधिकम्।

६ प—सपिण्डन इति नास्ति।

७ क—क१—ङ—छ—लोकमित्यधिकम्।

स्थिताः तेषां यो लोकः स्थानं स एतस्मै[1] प्रेताय स्वधा भवतु। किञ्च नमो नमस्कारकृतो यज्ञो देवश्राद्धमिति यावत्। देवेषु पुरूरवोमाद्रवःप्रभृतिषु[2] कल्पताम् क्लृप्तो[3] भवतु। अनेन सपिण्डनकर्मणा प्रेतस्य[4] पितृलोकप्राप्तिः [5]सदैवतश्राद्धाधिकारस्य भवत्वित्याशंसा वाक्यार्थः।

[6]प्रजापतिर्ऋषिर्यजमानो देवता अनुष्टुप् छन्दः सौत्रामण्यां ग्रहहोमे विनियोगः[6]।

**ये समानाः समनसो जीवा जीवेषु मामकाः।**
**तेषाꣳ श्रीर्मयि कल्पतामस्मिँल्लोके शतꣳ समाः॥ १६२**

[ वा स १९, ४६। का स २१, ४८ ]

जीवेषु सूक्ष्मशरीराधिष्ठानेन कर्मभोक्तृषु मध्ये ये मामकाः मत्सम्बन्धिनो जीवाः सूक्ष्मशरीराधिष्ठानेन कर्मभोक्तारः। किम्भूताः—समानाः समनसः। एतद् द्वयं व्याख्यातमेव। तेषां प्रसादेनेत्यध्याहार्यम्। मयि श्रीः लक्ष्मीः कल्पताम् भवतु। कुत्र—अस्मिन् लोके इहैव जन्मनि। कियन्तं कालम्—शतं समाः शत-वर्षाणि। अनेन सपिण्डनकर्मणा पितृलोकं प्राप्तानां[7] पितॄणां[8] प्रसादेन वर्षशतं मम लक्ष्मीर्भवत्वित्याशंसा वाक्यार्थः। अपरञ्च सर्वं पार्वणेन तुल्यम्।

इति सपिण्डीकरणम्।

## अथ वृद्धिश्राद्धम्

तत्र चार्घ्यपात्रे यवदानमन्त्रः

**यवोऽसि सोमदैवत्यो गोसवो देवनिर्मितः।**
**प्रत्नमद्भिः पृक्तः पुष्ट्या नान्दीमुखान् पितॄँल्लोकान्**
**प्रीणाहि नः स्वाहा॥१६३**

[ आश्वलायन-गृह्यपरिशिष्ट २, १९—सोमदैवत्यो गोसवे ; प्रत्नवद्भिः प्रत्तः ; पितॄनिमाँल्लोकान् प्रीणयाहि। कुमारिलस्वामिकृता आश्वलायनगृह्यकारिका २, १५ (६, ७ श्लो) द्रः—

तिलोऽसीति पदस्थाने यवोऽसीति पदं वदेत्। स्वधेति पदस्थाने पुष्ट्याशब्दं वदेदिह॥
पितॄनिति पदात् पूर्वं वदेन्नान्दीमुखानिति। स्वधानमःपदस्थाने स्वाहाशब्दं वदेदिह॥ ]

---

१ क—एव तस्मै।
२ क—च—पुस्तकयोर्माद्रव इति नास्ति।
३ क—यज्ञो। क२—दृप्तो। प—दृप्तो।
४ कं—पं—पितुरित्यधिकम्।
५ च—स—प—सदैवश्राद्धा।
६ क—च—प—इत्यादिपाठो नास्ति। 'तथा—ये समाना' इत्यादिमन्त्रस्य पाठादनन्तरं 'यज-मानो देवतेत्यस्य विशेषः' इत्येतन्मात्रं दृश्यते।
७ प—प्राप्ताय।
८ प—भवतो।

अत्र मन्त्रे यवैस्तिलार्थं इति कात्यायन-वचनात् तिलस्थाने यवपाठान्मन्त्रेऽपि यवोऽसीति यवस्यैवानुमन्त्रणीयत्वमाश्वलायनेन लिखितम्। तथा न स्वधा प्रयुञ्जीतेति[1] स्वधानिषेधात् स्वधेत्यस्य स्थाने पुष्ट्या इत्याश्वलायनेन[2] पठितम्। तेन नः अस्माकं नान्दीमुखान् लोकान् पुष्ट्या प्रीणाहीति सम्बन्धः। अपरं च सर्वं तिलोऽसीति मन्त्रेण (१७६ पृ) समानम्। अत्रान्ये मन्त्राः पार्वणवद्बोद्धव्याः।

इति वृद्धिश्राद्धम्।

इत्यावसथिक-महाधर्माधिकृत-श्रीहलायुधकृतौ ब्राह्मणसर्वस्वे पार्वणादि-श्राद्ध-मन्त्रव्याख्या ॥

## अथ भोजनविधिः

तत्र विष्णुपुराणम् [ ३, ११, ७४-७५ ]

स्नात्वा यथावत् कृत्वा च देवर्षिपितृतर्पणम्।
प्रशस्तरत्नपाणिस्तु भुञ्जीत प्रयतो गृही ॥
कृतजप्यो हुते चाग्नौ शुद्धवस्त्रधरो नृप।

देवलः स्नात्वा प्रक्षाल्य पादौ च स्रग्गन्धालङ्कृतः शुचिः।
पञ्चयज्ञावशिष्टञ्च यो भुङ्क्ते सोऽमृताशनः ॥

जाबालिः अस्नाताशी मलं भुङ्क्ते अजपी पूयशोणितम्।
अहुत्वा च कृमिं भुङ्क्ते अदत्त्वा विषभोजनम्[3] ॥

भविष्यपुराणम्[4] [ भविष्यपु, ब्राह्म १८४, ७ द्र ]

अकृत्वा वैश्वदेवं तु ये भुञ्जन्त्यबुधा नराः।
तथा विना तु शास्त्रेण मृगयोनिं व्रजन्ति ते ॥

तथा विना तु शास्त्रेणेति भोजनविधिविधायकशास्त्रातिक्रमणेनेत्यर्थः।

मनुः[5] सायं प्रातर्द्विजातीनामशनं देवनिर्मितम्[6]।
नान्तरा भोजनं कार्यमग्निहोत्रसमो विधिः ॥

---

१ का श्राद्धसूत्र ६।

२ आ गृह्यपरिशिष्ट २, १९।

३ का—क२—त—ब—विष्टभोजनम्।
क१—विष्टशोणितम्। ङ—छ—निष्टभोजनम्।

४ त—विष्णुपुराणम्।

५ श्लोकोऽयं मनुसंहितायां न दृश्यते—कुत्रचिदा मनु-पुस्तके द्वितीयेऽध्याये बन्धनीचिह्नान्तर्मुद्रापितो दृश्यते। छन्दोग-परिशिष्टप्रकाशे ( १८३ पृः ) वृहन्मनुवचनत्वेनायमुद्धृतः सायम्प्रातर्मनुष्याणा-मित्येवमादिं कृत्वा।

६ श्रुतिचोदितमित्यापस्तम्बधर्मसूत्रटीकायां ( २, १, २ )- हरदत्तधृतः पाठः।

छन्दोगपरिशिष्टे कात्यायनः [ छ प २, ३, ८ ]

मुनिभिर्द्विरशनं प्रोक्तं विप्राणां मर्त्यवासिनां नित्यम् ।
[1]अहनि च तथा[1] तमस्विन्यां सार्धप्रथमयामान्तः[2] ॥

बौधायनः[3] [ बौ ध २, १३, १ ]

यथैव तूलमैषीकमग्नौ प्रोतं प्रदीप्यते ।
तद्वत् सर्वाणि पापानि दह्यन्ते चात्मयाजिनः[4] ॥

तथा [ बौ ध २, १३, १०-११ ]

गृहस्थो ब्रह्मचारी वा योऽनश्नंस्तु तपश्चरेत् ।
प्राणाग्निहोत्रलोपेन अवकीर्णी भवेत्तु सः ॥
अन्यत्र प्रायश्चित्तात् प्रायश्चित्ते तदेव विधीयते ॥

ब्रह्मपुराणम्

विशिष्टोजनभूमिश्च सुप्रक्षालितपाणिपात् ।
आसनस्थस्तु यो दर्पात् पङ्क्तिमध्य उपस्पृशेत् ॥
स सर्वेषाञ्च यत् पापं तद् गृह्णाति नराधमः ।
तस्माद् बहिरुपस्पृश्य आचान्तः प्रविशेद् गृहम् ॥
उपलिप्ते समे स्थाने शुचौ शुक्लासनान्विते[5] ।
चतुरस्रं त्रिकोणञ्च वर्तुलञ्चार्धचन्द्रकम्[6] ।
कर्तव्यमानुपूर्व्येण ब्राह्मणाद्यैस्तु मण्डलम्[7] ॥
ब्रह्मरुद्रेन्द्रचन्द्रार्कवसवो मण्डलान्तरात् ।
निवेदितं नरैरन्नं यस्माद् गृह्णन्ति नान्यथा ॥
अकृत्वा मण्डलं ये तु भुञ्जतेऽधमयोनयः[8] ।
तेषान्तु यक्षरक्षांसि हरन्त्यन्नस्य यद् बलम् ॥

मनुः

चतुष्कोणं द्विजाग्रस्य त्रिकोणं क्षत्रियस्य तु ।
मण्डलाकृति वैश्यस्य शूद्रस्याभ्युक्षणं स्मृतम् ॥

---

१ का१—अह्नि च—का२—अहन्यपि च ।

२ क—का२—सार्धप्रहरयामान्तः । तथैवोद्धृतः पाठो ग्रन्थान्तरेषु केषुचित्—छ क ( नियत ) २२४ ; वी मि ( आह्नि ) ४६२ ; स्मृतिरत्नावली २१६ । वचनस्यास्य छ-पुस्तकपाठस्तु—मुनिभिर्द्विरशनं प्रोक्तं विप्राणामत्रवासिनाम् । नित्यमह्नि तमस्विन्यां सार्धं प्रथमयामतः ॥

३ क—का१—का२—त—म—व—आपस्तम्बः ।

४ का१—चात्मयाजिनः । छ—चात्मभोजिनः ।

५ शुक्लासनान्विते इति कृत्यकल्पतरूद्धृतः ( नियत २२१ पृः ) पाठः ।

६ क—ङ—छ—°चन्द्रिकम् ।

७ उपलिप्त इत्यारभ्यायं सार्धश्लोकः स्मृतिमुक्ताफले ( आह्निक ४१८ पृ. ) पराशरमाधवे ( १, १, ४१४ पृः ) च बौधायननाम्नोद्धृतः ।

८ क—त—व—भुञ्जते अधमा नराः ।

देवलः उपलिप्ते शुचौ देशे पादौ प्रक्षाल्य वाग्यतः।
प्राङ्मुखोऽन्नानि भुञ्जीत शुचिः पीठमवस्थितः॥

ब्रह्मपुराणम् अन्नं दृष्ट्वा प्रणम्यादौ प्राञ्जलिः कथयेत्ततः।
अस्माकं नित्यमस्त्वेतदिति भक्त्याऽथ वन्दयेत्॥
अन्नं विष्णुः स्वयं प्राह नित्यमेव जनार्दनः।
यो मां ददाति प्राणाय भुञ्जानः शास्त्रविद्द्विजः॥
प्राणार्थं मां सदा ध्यायेत् स मां संपूजयेत् सदा।
वामेन पाणिना पात्रं गृहीत्वा भुवि संस्थितम्।
तेजोऽसीति जपंस्त्वन्नं प्रणमेदमृतञ्च तत्॥

मनुः [ २, ५४-५५ ]
पूजयेदशनं नित्यमद्याच्चैतदकुत्सयन्।
दृष्ट्वा हृष्येत् प्रसीदेच्च प्रतिनन्देच्च सर्वशः॥
पूजितं ह्यशनं नित्यं बलमूर्जञ्च यच्छति।
अपूजितन्तु तद्भुक्तमुभयं नाशयेदिदम्॥

बौधायनः [ बौ ध २, ५, २१ ]
प्रक्षालितपाणिपादोऽप आचम्य शुचौ संवृते[१] देशे अन्नमुपसंगृह्य कामक्रोधलोभमोहानपहृत्य सर्वाभिरङ्गुलीभिः शब्दमकुर्वन् प्राश्नीयात्।[२]

आपस्तम्बः [ आप ध २, १८, १२ ]
सोत्तराच्छादनश्चैव यज्ञोपवीती भुञ्जीत।

[ आप ध २, १८, ५-७ ] कृत्स्नं ग्रासं ग्रसेत् साङ्गुष्ठं [३]न मुखशब्दं कुर्यात्[३] न पाणिञ्चावधूनुयात्।

बौधायनः [ बौ ध २, १२, २ ]
सर्वावश्यकावसाने संमृष्टोपलिप्ते देशे प्राङ्मुख उपविश्य [४]तद्भूतमाह्रियमाणं भूर्भुवः स्वरोमित्युपस्थाय वाचं यच्छेत्। न्यस्तं महाव्याहृतिभिः प्रदक्षिणमन्नमुदकं परिषिच्य सव्येन पाणिनाऽविमुञ्चन्नमृतोपस्तरणमसीति पुरस्तादपः पीत्वा पञ्चान्नेन प्राणाहुतीर्जुहोति।

हारीतः—ओं तेजोऽसीत्यन्नाद्यमाह्रियमाणमभिमन्त्रयेत्। धीस्त्वा ददात्विति दीयमानं भूस्त्वा प्रतिगृह्णात्विति प्रतिगृह्य

---

१ क—ङ—सभृते। क२—संस्कृते। छ—संभृते।
२ मुद्रापिते बौधायन-धर्मसूत्रे सूत्रमिदं किञ्चिदन्यथा पठितं दृश्यते।
३ क२—नखमुखशब्दमकुर्वन्।
४ क१—तदुद्धृत°।

अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतं म आसन्।
अर्कस्त्रिधातूरजसो विमानोऽजस्रो घर्मो हविरस्मि नाम ॥[1]

इति जपेत्।

यमः प्राङ्मुखोऽन्नानि भुञ्जीत पञ्चार्द्रो वाग्यतः शुचिः।
आर्द्रपादस्तु भुञ्जानः शतं वर्षाणि जीवति ॥

मनुः [ २, ५२ ]

आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः।
श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋतं भुङ्क्ते ह्युदङ्मुखः ॥

पुष्टिकामाधिकारे आपस्तम्बः [ आप ध २, १८, १-२ ]

दक्षिणामुखो न भुञ्जीत[2]। अनायुष्यं त्वेवंमुखस्य भोजनं मातुरित्युपदिशन्ति।

विष्णुपुराणम् [ ३, ११, ७७ ]

विशुद्धवदनः[3] प्रीतो भुञ्जीत न विदिङ्मुखः।
अन्नं प्रशस्तं पथ्यञ्च प्रोक्षितं प्रोक्षणोदकैः ॥

ब्रह्मपुराणम् अप्येकपंक्त्या नाश्नीयात् संवृतः स्वजनैरपि।
को हि जानाति किं कस्य प्रच्छन्नं पातकं भवेत्[4] ॥
भस्मस्तम्भजलद्वारमार्गैः पङ्क्तिञ्च भेदयेत् ॥

तथा पात्रेष्वथानुरूपेषु[5] पुत्रभृत्यानुजैः[6] सह।
भूमौ पात्रं प्रतिष्ठाप्य मौनेनान्नं तु भक्षयेत् ॥
पवित्रपाणिः पुण्यञ्च [7]पठेत्तत्राघमर्षणम्।

पराशरः यदीच्छेत् सर्वपापानि हन्तुं निरवशेषतः ॥
मौनेनान्नं समश्नीयादगस्त्यप्रशिरसा स्वपेत् ॥

मनुः [ ४, ६५ ]

न भिन्नभाण्डे भुञ्जीत न भावप्रतिदूषिते।

---

१ ऋ स ३, २६, ७। वा स १८, ६६।

२ वाग्यतो दक्षिणामुखो भुञ्जीतेत्यापस्तम्बीये मुद्रापितः पाठः। कृत्यकल्पतरु-वीरमित्रोदयादिषु च तथैवोद्धृतः। रघुनन्दनेन त्वाह्निकतत्त्वे (जीवानन्द-प्रकाशित स्मृतितत्त्व, १म भाग, २य सं, ४२१ पृ) हलायुधगृहीत एव पाठो धृतः।

३ ङ—विष्टब्धवदनः। मुद्रापिते विष्णुपुराणे बहुषु मातृकाग्रन्थेषु च—विशुद्धवदन।

४ ङ—छ—व—महत्।

५ क-क—°ष्वर्थानुरूपेषु। वी मि—°ष्वन्नानुरूपेषु। क२—ष्वनन्यरूपेषु।

६ त—व—ज्ञात्यनुजैः। क—भृत्यात्मजैः।

७ क२—स्त्वभक्तैवाथ। ङ—छ—स्तमित्तत्राथ।

पैठीनसिः—ताम्ररजतसुवर्णशङ्खशुक्त्यश्मस्फाटिकानां भिन्नमभिन्नमिति न दोषः।

विष्णुपुराणम् [ ३, ११, ८० ]

न चासन्दीस्थिते [1]पात्रे नादेशे[1] च नरेश्वर।
नाकाले नातिसंकीर्णे दत्त्वाग्रञ्च [2]नरो ग्रसेत्[2]॥

[ वि पु ३, ११, ८३ ]

नाशेषं पुरुषोऽश्नीयादन्यत्र जगतीपते।
[3]मध्वम्बुदधिसर्पिभ्यः सक्तुभ्यश्च विवेकवान्॥

दत्त्वाग्रमिति देवपितृप्रभृतिभ्योऽग्रे भक्तं दत्त्वा भुञ्जीतेत्यर्थः।

व्यासः भूमौ पात्रं प्रतिष्ठाप्य यो भुङ्क्ते वाग्यतः शुचिः।
भोजने भोजने चैव त्रिरात्रफलमश्नुते॥

देवलः न भुञ्जीताघृतं नित्यं गृहस्थो भोजनं स्वयम्[4]।
पवित्रमथ हृद्यञ्च सर्पिराहुरघापहम्॥

वसिष्ठः [ १४, २१-२२ ]

हस्तदत्ताश्च ये स्नेहा लवणं व्यञ्जनानि च।
दातारं नोपतिष्ठन्ते भोक्ता भुङ्क्ते च किल्बिषम्॥
तस्मादन्तरितं देयं पात्रेणैव तृणेन वा।
प्रदद्यान्न तु हस्तेन नायसेन कदाचन॥

ब्रह्मपुराणम् एकेन पाणिना दत्तं शूद्रादत्तं न भक्षयेत्।
घृतं तैलञ्च लवणं पानीयं पायसं तथा॥

भविष्यपुराणम् [ ब्राह्मपर्व १८४, २४। अत्रिस्मृतिः १५२ द्रः ]

[5]आयसेन तु पात्रेण[5] यदन्नमुपदीयते।
भोक्ता विष्ठासमं भुङ्क्ते दाता च नरकं व्रजेत्॥

ब्रह्मपुराणम् आपोशानञ्च गृह्णीयात् सर्वतीर्थमयञ्च यत्।
अमृतोपस्तरणमसि विष्णोरन्नमयस्य च॥
हस्तेन लङ्घयेन्नान्नं सोदकेन[6] कदाचन।
हस्ताद् यो लङ्घयेद् [7]भुञ्जंस्तेनान्नं निहतं[8] भवेत्॥
हतञ्चान्नमभक्ष्यत्वं तस्य याति दुरात्मनः।
पञ्च ग्रासांस्तु भुक्त्वादौ क्वचिद्वेश्मनि सङ्कटे॥

---

१ प—पाणावेकदेशे।
२ क—नरोऽग्रये। मुद्रिते विष्णुपुराणेऽपि तथा।
३ क—मध्वम्लदधि°। क२—मध्विक्षुदधि°।
४ क२—भोजनेष्वयम्। त—भोजनं द्वयम्।
५ छ—एकेन पाणिना दत्त।
६ क२—त—नोदकेन।
७ क—भक्तं तेनान्नं।
८ छ—हि हतं। त—निहितं।

पात्रमुद्धृत्य शेषं तु भक्षयेत् साङ्कराद् भयात्।
पित्रे[१] कर्मणि भुञ्जानो भूमौ पात्रं न चालयेत्॥

तथा प्राणेभ्यस्त्वथ पञ्चभ्यः स्वाहाप्रणवसंयुताः।
पञ्चाहुतीस्तु जुहुयात् प्रलयाग्निनिभेषु च॥

विष्णुपुराणम्* [ ३, ११, ८६ ]

पञ्च ग्रासान् महामौनं प्राणाद्याप्यायनाय तत्॥

आपस्तम्बः [ ध सू २, ८, १३ ]

[२]अष्टौ ग्रासा मुनेर्भक्तं वानप्रस्थस्य षोड़श।
द्वात्रिंशत्तु गृहस्थस्य अमितं ब्रह्मचारिणः[२]॥

विष्णुपुराणम् [ ३, ११, ८४-८५ ]

अश्नीयात्तन्मना भूत्वा पूर्वन्तु मधुरं रसम्।
लवणाम्लौ तथा मध्ये कटुतिक्तादिकं ततः॥
प्राग्द्रवं पुरुषोऽश्नीयान्मध्ये च कठिनाशनः।
अन्ते पुनर्द्रवाशी च बलारोग्ये न मुञ्चति॥

ब्रह्मपुराणम्[३]

यस्तु पाणितले भुङ्क्ते यस्तु फूत्कारसंयुतम्।
प्रसृताङ्गुलिभिर्यश्च तस्य गोमांसवच्च तत्॥
नाजीर्णे भोजनं कुर्यात् स्याच्चेन्नातिबुभुक्षितः।
हस्त्यश्वरथयानोष्ट्रप्रासादस्थो[४] न भक्षयेत्॥
श्मशानाभ्यन्तरस्थो वा देवालयगतोऽपि वा।
शयनस्थो न भुञ्जीत न पाणिस्थं न चासने॥
न सन्ध्ययोर्न मध्याह्ने नार्धरात्रे कथञ्चन।
नार्द्रवासा नार्द्रशिरा न चायज्ञोपवीतवान्॥
नोत्थितो न व्रजन् खट्वासंस्थितो वा कदाचन।
न यन्त्रारूढ़गात्रस्तु न च सार्धन्तु भार्यया॥

---

१ ङ—पित्रोः।

* इतः परं पञ्च ग्रासानित्यारभ्य गर्भाधान-प्रकरणे पूषा भगं ते इति मन्त्रप्रसङ्गं यावत् ङ-पुस्तके नास्ति। प-ब-पुस्तकयोस्तु कुकुंरमन्त्रं यावन्नास्ति।

२ मुद्रापित आपस्तम्बीयाः पाठाः किञ्चिद्भिन्नाः।

३ अपरार्ककृता याज्ञवल्क्य-टीका ( १५० पृः ) द्रष्टव्या।

४ क—°रथयानोष्ट्रप्रासादस्थो।
न—°रथयानोश्वप्रासादस्थो।

न प्रसारितपादस्तु पादारोपितपाणिमान्[1] ।
नावसक्थिकसंस्थश्च न च पर्यङ्किकास्थितः ॥
न वेष्टितशिराश्चापि नोत्सङ्गकृतभाजनः ।
नैकवस्त्रो दुष्टमध्ये सोपानत्कः सपादुकः ॥
न चर्मोपरिसंस्थश्च चर्मवेष्टितपार्श्ववान् ।
अन्नस्य जन्मकालुष्यं दुष्पक्तिञ्च न कुत्सयेत्[2] ॥
ग्रासशेषञ्च नाश्नीयात् पीतशेषं पिबेन्न च ।
शाकमूलफलेक्षूंश्च[3] दन्तच्छेदैर्न[4] भक्षयेत् ॥
[5]सञ्चयेन्नान्नमन्नेन विक्षिप्तं पात्रसंस्थितम् ।
बहूनां भुञ्जतां मध्ये न चाश्नीयात्त्वरान्वितः ॥
वृथा न विकिरेदन्नं नोच्छिष्टः कुत्रचिद् व्रजेत् ।
न स्पृशेच्च शिरो विप्रः सोच्छिष्टेनैकपाणिना[6] ॥
तिलकल्कं जलं क्षीरं दधिक्षौद्रघृतानि च ।
न त्यजेदर्धजग्धानि [7]शक्तूंश्चाथ कदाचन[7] ॥

बृहस्पतिः [ वृ आचार ८० ]

न स्पृशेद्वामहस्तेन भुञ्जानोऽन्नं कदाचन ।
न पादौ न शिरो वस्तिं न पदा भाजनं स्पृशेत् ॥

ब्रह्मपुराणम्

सर्वाङ्गुलीभिरश्नीयान्नावधूनेत् करं क्वचित् ।
कुर्यात् क्षीरान्तमाहारं न च पश्चात् पिबेद् दधि ॥
जठरं पूरयेदर्धमन्नैर्भागं जलेन च ।
वायोः सञ्चरणार्थञ्च तुरीयमवशेषयेत्[8] ॥

बौधायनः[9]

भुञ्जानेषु तु विप्रेषु यस्तु पात्रं परित्यजेत् ।
भोजने विघ्नकर्तासौ ब्रह्महा च तथोच्यते ॥
उद्धृत्य वामहस्तेन यत्तोयं पिबति द्विजः ।
सुरापानेन तत्तुल्यं मनुराह प्रजापतिः ॥

---

१ क२— रोपितपाणिना । त— रोपितपादवान् ।
२ त—व—कुत्सयन् । ङ—भोजयेत् ।
३ क— फलादीनि । क१—°फलेचूर्णि ।
४ क२—दन्तच्छेदं न । छ—दन्तच्छेदेन ।
५ क—क१—सञ्चयेनान्न° । छ—सेचयेनान्न ।
६ त—न— नैव पाणिना ।
७ क—शक्तुलाजादिकञ्च यत् । त—शक्तुं शाक
८ क—न—चतुर्थमव° ।
९ प्रथमं वचनं पराशरमाधवीये (१, १, ४२७ पृ) स्मृतिमुक्ताफले ( आह्निक ४२७ ) च गोभिलनाम्नोद्धृतं द्वितीयं च ( प म १, १, ४२६ ) आतातपनाम्ना तथा (स्मृ मु-आह्नि २२४) यमनाम्ना ।

अग्निपुराणम् [ वह्निपु ६ ( १८ ख ) ]

उपलिप्ते समे देशे शुचिः[1] श्रद्धासमन्वितः ।
पात्रे ष्वथानुरूपेषु[2] पुत्रदारादिभिर्वृतः[3] ॥
सुसंस्कृतं हितं स्निग्धं[4] भुञ्जीतान्नमकुत्सयन् ।
यवगोधूमशाल्याद्यं[5] मांसशाकादिभिर्युतम् ॥
तीक्ष्णोष्णकटुभिश्चैव[6] व्यञ्जनैश्च सुगन्धिभिः ।
भक्ष्यप्रकारान् विविधान् कन्दमूलफलानि च ॥
पात्रं भूमौ प्रतिष्ठाप्य यो भुङ्क्ते वाग्यतः शुचिः ।
भोजने भोजने चैव त्रिरात्रफलमश्नुते ॥
यत्नेन धारयेद्विप्रः पवित्रं दक्षिणे करे ।
भुञ्जानस्तु विशेषेण अन्नदोषैर्न लिप्यते ॥

शातातपः
हस्तं प्रक्षाल्य गण्डूषं यः पिबेदविचक्षणः ।
स देवांश्च पितॄंश्चैव आत्मानं चैव घातयेत् ॥

विष्णुपुराणम्[7]
भुक्त्वामृतापिधानार्थं पिबेत्तोयं सकृत् सकृत् ।
येनान्नं न भवेन्नग्नं जीवभूतं जगत्त्रये ।
एवं भुञ्जन् सदा विप्रो ज्ञातिप्राधान्यमाप्नुयात् ॥

इति भोजनविधिः ॥

## अथ भोजनमन्त्रव्याख्या

तत्रानीयमानमन्नमभिमन्त्रयेदनेन मन्त्रेण

**ओजोऽसि सहोऽसि बलमसि भ्राजोऽसि देवानां धामनामासि ।**
**विश्वमसि विश्वायुः सर्वमसि सर्वायुरभिभूः ॥ १६४**

[ तै स २, ४, ३, २ । तै आ १०, ३५ ]

हे अन्न त्वम् ओजः वीर्यम् असि भवसि । तथा सहः उत्साहोऽसि । बलं सामर्थ्यमसि । तथा भ्राजः दीप्तिरसि । तथा देवानामिन्द्रादीनां धामनाम

---

१ क१—चित्ते ।
२ वाक्रपु— ष्वथानुरूपेषु ।
३ वह्निपु—पुत्रशिष्यादिभि ।
४ क१—स्निग्ध ।
५ क—क१—शाल्यन ।
६ क१—तीक्ष्णोष्णलवणैर्द्रव्यैः । वह्निपु—कटु स्वलवणैस्तिक्तैः ।
७ कृत्यकल्पतरौ ( नियत २२७ ) वचनमिदं ब्रह्मपुराणीयत्वेनोद्धृतम् ।

तेजःशब्दवाच्यमसि। किं वा विविच्योच्यते—विश्वं चराचरमसि। तथा विश्वायुः विश्वस्य जीवनमसि। सर्वमसि सर्वायुरसीति पुनरभिधानमादरातिशयप्रदर्शनार्थम्। तथा अभिभूः सर्वेषामदनीयानां श्रेष्ठतया त्वमभिभावकं भवसीत्यर्थः। अन्नस्तुतिर्वाक्यार्थः॥ १६४॥

ओं भूर्भुवः स्वरोमित्यनेन वाऽक्रियमाणान्नाभिमन्त्रणं करणीयम्।

ततो दीयमानमन्नमभिमन्त्रयेदनेन मन्त्रेण

**द्यौस्त्वा ददातु॥ १६५**

[पा गृ ३, १५, २२]

हे अन्न द्यौः आकाशं त्वा त्वां ददातु। आकाशमेव सर्वेषां भूतानामादिभूतमिति तस्य दातृत्वेनोपन्यासः॥ १६५॥

ततस्तदन्नमनेन गृह्णीयात्।

**पृथिवी त्वा प्रति गृह्णातु॥ १६६**

[पा गृ ३, १५, २२]

हे अन्न पृथिवी विश्वधात्री त्वा त्वां प्रतिगृह्णातु॥ १६६॥

ततस्तदन्नं पात्रे कृत्वाऽभिमन्त्रयेदनेन मन्त्रेण

**अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः।**
**प्र प्र दातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे॥ १६७**

[वा स ११, ८३। का स १२, ८४]

हे अन्नपते अन्नस्य पते अग्ने अन्नस्य भागं नः अस्मभ्यं धेहि देहि। किम्भूतस्य—अनमीवस्य अमीवा व्याधिः सोऽस्मिन्नास्तीति अनमीवं तस्य अव्याधिकारिण इत्यर्थः। शुष्मिणः शुष्म बलं तदस्मिन्नस्तीति शुष्मि तस्य बलयुक्तस्य। हे अन्नपते प्रप्रदातारं अन्नस्य प्रकर्षेण दातारं तारिष तारय वर्धय इति यावत्। प्रप्रेति द्वितीयः प्रशब्दो दानस्यातिशयख्यापनार्थः। तथा त्वं नः अस्माकं द्विपदे भार्यापुत्रपरिजनाय[1] चतुष्पदे गवादौ ऊर्जमन्नं धेहि देहि। अस्मभ्यमस्मदीयभार्यापुत्रपरिजनाय[2] गवादिपशवे च अरोगकारि बलकारि चान्नं धेहि अन्नदातारं च वर्धयेत्यग्नौ याच्ञा वाक्यार्थः। अत्र किं देहीति कर्मपदस्याश्रवणादन्नस्येति षष्ठीमात्रश्रवणाच्च भागमिति कर्मपदमध्याहार्यम्॥ १६७॥

---

१ क—भार्यादिपरिजनाय। के१—पुत्रपौत्रादौ। २ क१—मदीयपुत्रादिभ्यो।

ततः [1]पश्चिमादिप्राच्यु सर्वदिक्ष्ववनेजनदानपूर्वकं बलित्रयं दद्यादनेन मन्त्रेण

**भूपतये नमः । भुवनपतये नमः । भूतानां पतये नमः ॥ १६८**

[ वा स २, २ द्र: । का स २, ३ द्र: । कात्या भोजनसूत्र २ । शा श्रौ १, ४, ९ ]

भुवः पृथिव्याः पतिः भूपतिरग्निस्तस्मै नमः । भुवनपतिश्चराचरपतिस्तस्मै अग्नये नमः । भूतानां पृथिव्यादीनां पञ्चानां पतये अग्नये नमः । एतदन्नमिति सर्वत्र बोद्धव्यम् ॥ १६८ ॥

तत एतद्बलित्रयं प्रत्यवनिज्य भोजनपात्रस्थमन्नं जलेन प्रदक्षिणावर्तेन पर्युक्षेदनेन मन्त्रेण

**भूर्भुवः स्वः ॥ १६९**

[ वा स ३, ५ । का स ३, ५ ]

भूः पृथिवी भुव आकाशं स्वः स्वर्गः । एतल्लोकत्रयमन्ने ऽध्यारोप्यते[2] ॥१६९॥

ततो जलगण्डूषं गृह्णीयादनेन

**अमृतोपस्तरणमसि ॥ १७०**

[ तै आ १०, ३२, १ ]

हे अमृत जल [3]पञ्चयज्ञावशिष्टस्यान्नस्य उपस्तरणं शय्या असि भवसि ॥ १७० ॥

ततः पञ्चग्रासीं कुर्यात् ।

**प्राणाय स्वाहा । अपानाय स्वाहा । व्यानाय स्वाहा ।**
**समानाय स्वाहा । उदानाय स्वाहा ॥[4] १७१**

[ तै आ १०, ३३, १—५ । कात्या भोजनसूत्र २ ]

मन्त्रा व्यक्तार्थाः ॥ १७१ ॥

ततो भोजनान्ते [5]अप्रक्षालितपाणिना गण्डूषं गृह्णीयादनेन मन्त्रेण

**अमृतापिधानमसि ॥ १७२**

[ तै आ १०, ३५, १ ]

---

१ क१—क२—पश्चिमादिकसंस्थमवनेजन° ।

२ क—°त्रयमन्नात्मकमेवेत्यभिप्रायः ।

३ क—पञ्चमहायज्ञा° ।

४ प्राणापानादीनां पाठक्रमोऽयं याज्ञवल्क्यस्येति भोजनसूत्रे—याज्ञवल्क्योदितक्रमो वाजसनेयिनामिति ।

५ क१—प्रक्षालित° ।

हे अमृत जल भुक्तान्नस्य अपिधानम् आच्छादनम् असि ।

ब्रह्मपुराणे विप्रस्त्वप उपस्पृश्य पादाङ्गुष्ठे च दक्षिणे ।
हस्ताभ्यां मन्त्रवद् दद्याद् विधिवच्चावनेजनम् ॥
सम्मार्जय[1]बाह्व जानूरू[1] गोप्रदानफलं लभेत् ॥ १७२ ॥

तत आचम्य दक्षिणपादाङ्गुष्ठे हस्तद्वयं निःस्रावयेदनेन मन्त्रेण

**अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठञ्च समाश्रितः ।**
**ईशः सर्वस्य जगतः प्रभुः प्रीणातु विश्वभुक् ॥ १७३**

[ तै आ १०, ३८, १ ]

पुरि देहे शेते पुरुषः परमात्मा उच्यते। प्रीणातु प्रीतो भवतु। किम्भूतः—अङ्गुष्ठमात्रः अङ्गुष्ठपरिमाणः सूक्ष्मत्वाभिप्रायमेतत्। पुनः किम्भूतः—अङ्गुष्ठं च समाश्रितः। चकारोऽप्यर्थः[2]। शिरःप्रभृतीनवयवान् समाश्रित्याङ्गुष्ठमपि समाश्रित इत्यनेन सकलदेहव्यापकत्वं दर्शितम्। पुनः किम्भूतः—प्रभुः देहस्य। अनाधिष्ठित एव देहः सर्वकार्येषु प्रवर्तते। अपि किम्भूतः—सर्वस्य जगतः ईशः ईश्वरः सर्वस्यैव जगतोऽन्नविकारत्वात्। पुनः किम्भूतः—विश्वभुक् विश्वस्य भोक्ता। भोक्तृत्वं च पालकत्वं संहारकत्वं वा। अयमेवंस्वरूपः पुरुषो देहमभिव्याप्य स्थितोऽनेन हस्तनिःस्रवेण जलेन प्रीणात्वित्याशंसा वाक्यार्थः।

विष्णुपुराणम् [ ३, ११, ८७-९५ ]

[3]भुक्त्वा सम्यगथाचम्य प्राङ्मुखो वाऽप्युदङ्मुखः ॥
आचान्तः पुनराचामेत् पाणी प्रक्षाल्य मूलतः[4] ।
स्वस्थः प्रशान्तचित्तस्तु कृतासनपरिग्रहः ।
अभीष्टदेवतानान्तु कुर्वीत स्मरणं नरः ॥
[5]अग्निराप्याययत्वन्नं पार्थिवं[5] पवनेरितः ।
दत्तावकाशं [6]नभसा जरयत्वस्तु मे सुखम् ।
अन्नं बलाय मे भूमेरपामग्न्यनिलस्य च ।
भवत्वेतत् परिणतौ ममास्त्वव्याहतं सुखम् ॥
प्राणापानसमानानामुदानव्यानयोस्तथा ।
अन्नं पुष्टिकरञ्चास्तु ममास्त्वव्याहतं सुखम् ॥

---

१ क—बाहुजानु च ।
२ क—ख—परोऽप्यर्थः ।
३ इतः प्राक् क-क१-क२-पुस्तकेष्वधिकम्—अद्भिः प्राणान् समालभ्य नाभिं पाणितलेन वा । इति ।
४ क—ख—च—जानुतः ।
५ क—क१—क२—अग्निराप्याययता धातून् पार्थिवान् ।
६ क—क१—क२—दत्तावकाशी ।

अगस्तिरग्निर्वडवानलश्च भुक्तं मयान्नं जरयत्वशेषम् ।
सुखञ्च मे तत्परिणामसम्भवं यच्छत्वरोगो मम चास्तु देहे ॥
विष्णुः समस्तेन्द्रियदेहदेहिप्रधानभूतो भगवान् यथैकः ।
सत्येन तेनान्नमशेषमेतदारोग्यदं मे परिणाममेतु ॥
विष्णुरत्ता तथैवान्नं परिणामश्च वै यथा ।
सत्येन तेन मे भुक्तं जीर्यत्वन्नमिदं तथा ॥
इत्युच्चार्य स्वहस्तेन परिमृष्य तथोदरम् ।
अनायासप्रदायीनि कुर्यात् कर्माण्यतन्द्रितः ॥

दक्षः [२, ६८] भुक्त्वा तु सुखमास्थाय तदन्नं परिणामयेत् ।
इतिहासपुराणाद्यैः षष्ठसप्तमकौ नयेत् ॥ १७३ ॥

इत्यावसथिक-धर्माध्यक्ष श्रीहलायुधकृतौ ब्राह्मण-सर्वस्वे भोजनमन्त्रव्याख्या ॥

## अथ सायंसन्ध्या

तत्र देवलादिवचनं प्रातःसन्ध्यायामुक्तम् । तदेवं सति सायंसन्ध्यामन्त्र-व्याख्याने कर्तव्ये प्रातःसन्ध्या-सायंसन्ध्ययोर्मन्त्राणां तुल्यत्वात्तद्व्याख्यानं प्रातः-सन्ध्यायामेवानुसन्धातव्यम् ( ३०-८५ पृः ) ।

आचमनमन्त्रे तु विशेषः सूर्यश्चेत्यत्राग्निश्चेति रात्रेरत्यत्राह्नेत्यहरित्यत्र रात्रिरिति तथा सूर्ये इत्यत्र सत्ये इति ।

**अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्ताम् ।**
**यदह्ना पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना ।**
**[1]रात्रिस्तदवलुम्पतु यत् [2]किञ्चिद्दुरितं मयि ।**
**इदमहमापोऽमृतयोनौ[3] सत्ये ज्योतिषि जुहोमि स्वाहा ॥ १७४**

[ तै आ १०, २४, १ ]

अस्य मन्त्रस्य व्याख्यानं प्रातःसन्ध्याचमनमन्त्रव्याख्यानतुल्यमतस्तत्रानु-सन्धेयम् ( ५९ पृः ) ।

---

१ तैत्तिरीयारण्यकेऽत्र अहस्तदिति पाठः। तद्विषयको विचारो भूमिकायां द्रष्टव्यः।

२ तै आ—किञ्च।

३ तै आ—इदमहं माममृतयोनौ।

तथा गायत्रीजपे विशेषमाह याज्ञवल्क्यः [ याज्ञ स्मृ १, २४ ]

जपन्नासीत सावित्रीं प्रत्यगा तारकोदयात् ॥

[ शौनकः ][1] प्रागुत्तानौ करौ कृत्वा सायञ्चाधोमुखौ तथा ।

मध्ये ऊर्ध्वकराभ्यान्तु जप एवमुदाहृतः ॥

इति सायंसन्ध्या मन्त्र-व्याख्या ।

## अथ सायंवैश्वदेवः

तत्र छन्दोगपरिशिष्टम् [ २, ३, १० ]

सायं प्रातर्वैश्वदेवः कर्तव्यो बलिकर्म च ।

अनश्नतापि सततमन्यथा किल्बिषी भवेत् ॥

विष्णुपुराणम् [ ३, ११, १०२ ]

पुनः पाकमुपादाय सायमप्यवनीपते ।

वैश्वदेवनिमित्तं वै पत्न्यमन्त्रं[2] बलिं हरेत् ॥

मनुः [ ३, १२१ ]

सायं त्वन्नस्य सिद्धस्य पत्न्यमन्त्रं[2] बलिं हरेत् ।

वैश्वदेवं हि नामैतत् सायं प्रातर्विधीयते ॥

मध्याह्नबलिदानानन्तरं गोभिलः [ गो गृ १, ४, १८ ]

स्त्री ह सायं प्रातः पुमान् ।

इति सायंवैश्वदेवः ॥

## अथ सायंभोजनम्

तत्र मनुः[3]

सायं प्रातर्द्विजातीनामशनं देवनिर्मितम् ।

नान्तरा भोजनं कार्यमग्निहोत्रसमो विधिः ॥

---

१ पराशरमाधवीये ( १, १, ३०५ ) स्मृतिमुक्ताफले ( आह्निक ३४० ) वीरमित्रोदये ( आह्निक ३०६ ) च शौनकनामेदमुद्धृतम् । तत्र प्रथमचरणस्य पाठः— ऊर्ध्वोत्तानौ करौ प्रातरिति । तृतीयचरणस्य प मा— स्मृ मु—स्तम्भकराभ्यां । वी मि—स्तम्भकराभ्यां ।

२ क—पत्न्या सार्धं । न—पत्न्या सह ।

३ वचनमिदं संवर्तस्मृतौ ( १२ श्लो ) लभ्यते । प्रागपि १८७-तम-पृष्ठे ५म-टिप्पणी द्रष्टव्या ।

छन्दोगपरिशिष्टम् [ २, ३, ८ ]

मुनिभिर्द्विरशनं प्रोक्तं विप्राणां मर्त्यवासिनां नित्यम् ।
अहनि च तथा तमस्विन्यां सार्धप्रथमयामान्तः ॥[१]

भोजनाधिकारे आपस्तम्बः[२]

स एवमहरहः सायंप्रातर्जुहुयादग्निर्वा सायम् ।

तथा [ आप ध २, १, १-३ ]

पाणिग्रहणादधि गृहमेधिनोर्व्रतम् । कालयोर्भोजनम् । अतृप्तिश्चान्नस्य ।

इति सायंभोजनविधिः ॥

## अथ शयनविधिः

तत्र विष्णुधर्मोत्तरद्वितीयकाण्डे [ २, ८४, १-३ ][३]

शून्यालये श्मशाने [४]च नैकवृक्षे[४] चतुष्पथे ।
महादेवगृहे वापि मातृवेश्मनि न स्वपेत् ॥
यक्षदेवतायतने स्कन्दस्यायतने तथा ।
कूलच्छायासु च तथा शर्करालोष्टपांशुषु ॥
प्रस्वपेन्न तथा दर्भे विना दीक्षां कथञ्चन ।
धान्यगोदेवविप्राणां गुरूणाञ्च तथोपरि ॥

तथा न स्वपेदित्यधिकारे [ विष्णुध २, ८४, ८ ]

नाकाशे सर्वतः शून्ये ।

शङ्खलिखितौ

वल्मीकमहावृक्षच्छायासु न पर्वतशिरसि । उत्सवे वा पर्वग्रह-
परागसमये वा ।

विष्णुः [ विष्णुस्मृ ७०, १४-१५ ]

[५]न वृषलमध्ये । नारिमध्ये[५] ।

---

१ भोजनविधौ ( १८८ पृः ) प्रागुद्धृतं वचनमिदं क-घ-च-पुस्तकेष्वत्र नास्ति ।

२ आपस्तम्बनाम्ना धृतं सूत्रद्वयं बौधायनधर्मसूत्रे ( २, १३, ३-४ ) उपलभ्यते ।

३ पराशर-माधवीये ( १भाः १खः ४४२ पृः ) मार्कण्डेयपुराणनाम्ना श्लोका इमे उद्धृताः ।

४ क२—च चैत्यवृक्षे । विष्णुध—वानेकवृक्षे ।

५ विष्णुस्मृतौ—न चपलमध्ये न नारीमध्ये ।

विष्णुपुराणम् [ ३, ११, १०८-९ ]

कृतपादादिशौचस्तु भुक्त्वा सायं ततो गृही।
गच्छेच्छय्यामस्फुटितामपि[1] दारुमयीं नृप॥
नाविशालां न वा भग्नां नासमां[2] मलिनां न च।
न च जन्तुमयीं शय्यामधितिष्ठेदनास्तृताम्॥

विष्णुः [ ७०, १—१२ ]

नार्द्रपादः स्वप्यात्। नोत्तरापरावाक्शिराः। न पालाशे शयने न पञ्चदारुकृते न गजभग्नकृते न विद्युद्दग्धकृते न भिन्ने नाग्निप्लुष्टे[3] न घटासिक्तद्रुमजे।

शङ्खलिखितौ

न च शीर्णखट्वायां नान्यवर्णोपशयितायामनभ्युक्ष्य।

हारीतः न शयनेऽन्यपूर्वे। नाश्मपीठोपधाने। तथा नासने। न प्रगे।

शङ्खलिखितौ न सन्ध्यायां शयीत नाशुचिर्न नग्नः।

मार्कण्डेयपुराणम् [ ४४, ५० ]

नोदक्शिराः स्वपेज्जातु न च प्रत्यक्शिरा नरः।
शिरस्यगस्त्यमाधाय शयीताथ पुरन्दरम्॥

विष्णुपुराणम् [ ३, ११, ११० ]

प्राच्यां दिशि शिरः शस्तं याम्यायामथवा नृप।
सदैव स्वपतः पुंसो विपरीतन्तु रोगदम्॥

पराशरः यदीच्छेत्[4] सर्वपापानि हन्तुं निरवशेषतः।
मौनेनान्नं समश्नीयादगस्त्यशिरसा स्वपेत्॥

व्यासः नोत्तानो नोर्ध्वबाहुश्च न च भार्यां विना तथा॥
न प्रदोपपादः।

उशनाः नोच्छिष्टो न नग्नो न तैलाभ्यक्तशिराश्च स्वपेत्। तथा नैकाकी स्वपेत्।

एवं सुप्त्वा वक्ष्यमाणान् श्लोकान् पठेत्।

स्कन्दपुराणम् नमो नन्दीश्वरायेति[5] यः प्रोच्य[6] स्वपते नरः।
तस्य कुष्माण्डराजेभ्यो न भविष्यति वै भयम्॥

---

१ क—क१—°मस्फुटितामेक।
२ क—घ—च—न रामा। क१—नारामां।
३ क—°प्लुष्टे। क१—°प्लुष्टे।
४ क१—य इच्छेत्।
५ क२—नारायणायेति।
६ क—प्रोक्ता। क१—प्राज्ञः।

महाभारतम् [ आदि ५८, २४ ]

> यो जरत्कारुणा जातो जरत्कारौ महायशाः ।
> आस्तीकः सर्पसत्रे च पन्नगान् योऽन्वरक्षत ॥[1]
> तं स्मरन्तं महाभागा न मां हिंसितुमर्हथ ।[2]

तथा [ महा आदि ५८, २३ ]

> असितश्चार्तिमन्तश्च सुनीथं वापि यः स्मरेत् ॥
> दिवा वा यदि वा रात्रौ नास्य सर्पभयं भवेत् ।

तथा [ महा आदि ५८, २५ ][2]

> सर्पापसर्प भद्रन्ते [3]दूरं गच्छ महाविष[3] ।
> जनमेजयस्य यज्ञान्ते आस्तीकवचनं स्मर ॥

ततो वैदिकमन्त्रेण रक्षां कुर्यात् ।

तत्र विवस्वानृषिः परमात्मा देवता जगती छन्दः शयने रक्षाकरणे विनियोगः ।

**सप्त ऋषयः प्रतिहिताः शरीरे सप्त रक्षन्ति सदमप्रमादम् ।**
**सप्तापः स्वपतो लोकमीयुस्तत्र जागृतो अस्वप्नजौ**
**सत्रसदौ च देवौ ॥ १७५**

[ वा स ३४, ५५ । का स ३३, ४३ ]

सप्तर्षयः प्राणिनां शरीरे प्रतिहिता अवस्थिता इत्यर्थः । के ते सप्तर्षयः— बुद्धिश्चक्षुः श्रोत्रं नासिका जिह्वा त्वक्—[4]एतानि मनसा सह सप्तेन्द्रियाण्येव सप्तर्षयः । त एव सप्त[4] स्वपतः पुरुषस्य लोकं हृदयात्मस्थानम् ईयुर्गच्छन्ति रक्षन्ति च । किं रक्षन्ति—अर्थवशाच्छरीरमेव । न केवलं सप्तर्षय एवैते रक्षन्ति आपश्च सप्त रक्षन्ति । कास्ता सप्तापः—शुक्रशोणितवसामज्जास्नेमास्नु- मूत्राणि । किञ्च तस्य स्वपतः । पुरुषस्य तस्यामवस्थायां देवौ प्राणापानावेव वायू जागृतः जागरणं कुरुतः तस्य सुप्तपुरुषस्य रक्षार्थमिति भावः । किम्भूतौ देवौ—सत्रसदौ सत्रे देहे स्थायिनौ । पुनः किम्भूतौ—अस्वप्नजौ स्वप्नो ययोर्न विद्यत इत्यर्थः ।

---

१ भाण्डारकरप्राच्यविद्यानुसन्धानसमित्या प्रकाशिते महाभारते (५३, २२) श्लोकस्यास्य पाठा एवमुपलभ्यन्ते—
जरत्कारोर्जरत्कार्वां समुत्पन्नो महायशाः ।
आस्तीकः सत्यसन्धो मां पन्नगेभ्योऽभिरक्षतु ॥

२ अर्वाचीनकाले प्रक्षिप्त इति बुद्ध्या तं स्मरन्तमिति सर्पापसर्पेति च सार्धश्लोकः भाण्डारकर-प्राच्य-विद्यानुसन्धानसमितेः प्रकाशिते महाभारते न मूलपाठत्वेन गृहीतः ।

३ का२—गच्छ सर्प वनान्तरम् ।

४ का१—मन एते ऋषयः सप्त । एते

आपस्तम्बः [ १, ३२, ६ ]

सदा निशायां दारान् प्रत्यलंकुर्वीत ।

विष्णुपुराणम् [ ३, ११, ११४ ]

स्नातः स्रग्गन्धधृक् स्त्रीतो नाध्मातः क्षुधितोऽपि वा ।
सकामः सानुरागश्च व्यवायं पुरुषो व्रजेत् ॥

तथा [ ३, ११, ११२-१३ ]

नानिष्टां न प्रकुपितां नाप्रशस्तां न गर्भिणीम् ।
नादक्षिणां नान्यकामां नाकामां नान्ययोषितम् ॥
क्षुत्क्षामां नातिभुक्तां वा स्वयञ्चैभिर्गुणैर्युतः ।

स्त्रियमुपेयादित्यधिकारे विष्णुः [ विष्णुस्मृ ६८, २—१७ ]

न श्राद्धं भुक्त्वा । नोपमन्त्रितः श्राद्धे । न व्रती । न दीक्षितः । न दिवा न सन्ध्ययोः । न मलिनां न मलिनः । नाभ्यक्तां नाभ्यक्तः । न रोगार्तां न रोगार्तः ।

न हीनाङ्गीं नाधिकाङ्गीं तथैव च वयोऽधिकाम् ।
नोपेयाद् गर्भिणीं नारीं दीर्घमायुर्जिजीविषुः ।

तथा अभिगम इत्यधिकारे विष्णुपुराणम् [ ३, ११, १२१ ]

भुवि रोगावहो नृणामप्रशस्तो जलाशये ।

तथा [ विष्णुपु ३, ११, ११५-११६ ]

चतुर्दश्यष्टमी चैव अमावस्याथ पूर्णिमा ।
पर्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च ॥
स्त्रीतैलमांससम्भोगी पर्वस्वेतेषु वै पुमान् ।
विण्मूत्रभोजनं नाम प्रयाति नरकं मृतः[१] ॥

मनुः [ ४, ४० ]

नोपगच्छेत् प्रमत्तोऽपि स्त्रियमार्तवदर्शने ।
समानशयने चैव न शयीत तया सह ॥

वसिष्ठः [ १२, २३ ]

यस्तु पाणिगृहीताया आस्ये[२] कुर्वीत मैथुनम् ।
भवन्ति पितरस्तस्य [३]तन्मांसरेतसो[३] भुजः ॥

---

१ क१—नरः । विष्णुपु—नृप ।
२ मास्ये इति पाठे ऋतावित्यर्थो भवेत् ।
३ क—क२—तं मासं रेतसो । मुद्रापिते वसिष्ठ-धर्मशास्त्रे—तन्मासं रेतसो ।

कठशाखायाम्[1]—अस्माकं[2] याः सजातीयास्ताः स्त्री विजनिष्यमाणाः पतिभिः सह शयीरन्निति स्त्रीभिः प्रार्थिते तथास्त्विति स्त्रीणामिन्द्रेण वरो दत्तः ।

एतेन स्त्रीणां कामलालसत्वं दर्शितम् । तद् यद्यनृतौ स्त्री नोपगम्यते तदा तासां नित्यं रतिलालसतया व्यभिचारोऽपि सम्भाव्येत । तस्मात् स्त्रीणां रक्षार्थमनृतावप्युपगमं कुर्यादित्यभिप्रायः ।

तथा च विष्णुपुराणम् [ ३, ११, १२४ ]

इति मत्वा स्वदारेषु ऋतुमत्सु नरो व्रजेत् ।
यथोक्तदोषहीनेषु सकामेष्वनृतावपि ॥

इत्यावसथिक-महाधर्माधिकृत[3]-श्रीहलायुधकृतौ ब्राह्मणसर्वस्वे शयन-मन्त्रव्याख्या ॥

## अथ दशसंस्काराः

गर्भाधानपुरःसरं दशविधसंस्कारमन्त्राणाम् ।
धर्माध्यक्षहलायुधेन रचितां व्याख्यामिमां शृणुत ॥[4]

अथ गर्भाधानादि-दशकर्म-मन्त्रव्याख्या[5]

तत्र कानि तानि दश कर्माणीत्यपेक्षायां याज्ञवल्क्यः [ १, ११-१२ ]

गर्भाधानमृतौ पुंसः सवनं स्पन्दनात् पुरा ।
षष्ठेऽष्टमे वा सीमन्तः प्रसवे[6] जातकर्म च ॥
अहन्येकादशे नाम चतुर्थे मासि निष्क्रमः ।
षष्ठेऽन्नप्राशनं मासि चूडा कार्या यथाकुलम् ॥

तथा [ याज्ञ १, १४ ]

गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनयनम् ।
राज्ञामेकादशे सैके विशामेके यथाकुलं ।

तथा [ याज्ञ १, ५२ ]

अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ॥

---

1 वसिष्ठधर्मशास्त्रे (१२, २४) इदमित्थमुपलभ्यते—अपि च काठके विज्ञायते । अपि नः श्वो विजनिष्यमाणाः पतिभिः सह शयीरन्निति स्त्रीणामिन्द्रदत्तो वरः । तै स (२, ५, १, ५) द्र:—ता अब्रुवन् वरं वृणामहा·· ·· काममा विजनितोः सम्भवामेति ।

2 क—क२—नोऽस्माकं । क१—नास्माकं ।

3 क१—सान्धिविग्रहिक- ।

4 क२—पुस्तके श्लोकोऽयं नास्ति । क१—पुस्तके पुनरयमधिकः श्लोको दृश्यते—
लक्ष्मणक्षौणीपालस्य धर्माध्यक्षो हलायुधः ।
गर्भाधानादिसंस्कारमन्त्रान् व्याख्याति क्रमशः ॥

5 क—नास्ति । क१— दशकार्यसंस्कारमन्त्र° ।

6 क—मास्येके । मिताक्षरा—मास्येते ।

एवं संस्कारानभिधाय तेषां मन्त्रपूर्वकत्वमाह याज्ञवल्क्यः [ १, १० ]

ब्रह्मक्षत्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः ।
निषेकाद्याः श्मशानान्तास्तेषां वै मन्त्रतः क्रियाः ॥

तथा च मनुः [ २, २६ ]

वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम् ।
कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ॥

गर्भाधानादीनां फलमाह याज्ञवल्क्यः [ १, १३ ]

एवमेनः शमं याति बीजगर्भसमुद्भवम् ॥

मनुः [ २, २७-२८ ]

गार्भैर्होमैर्जातकर्मचौडमौञ्जीनिबन्धनैः ।
बैजिकं गार्भिकञ्चैनो द्विजानामपमृज्यते ॥
स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः ।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ॥

## अथ गर्भाधानम्

इत्थं सामान्येन संस्काराणां फलवत्त्वेऽवधारिते

बौधायनः [ बौ ध २, १६, ११ ]

प्रजामुत्पादयेदौषधमन्त्रसंयोगेन ।

तथा गर्भाधानस्य विशेषफले हारीतः

गर्भाधानवदुपगतो ब्रह्मगर्भं[1] सन्दधाति ।

स्वगृह्योक्तगर्भाधानविधानयुक्तः सन् स्त्रियमुपगतो ब्रह्ममयं गर्भमादधाति ।

तथा गर्भाधानादिचूड़ाकरणान्ताष्टसंस्काराणां प्रत्येकं फलमभिधाय हारीत एव पुनराह

एतैरष्टभिर्गर्भसंस्कारैर्गर्भोपघातात् पूतो भवति ।

ऋतुकालविवेके मनुः [ ३, ४६—४८ ]

ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोड़श स्मृताः ।
चतुर्भिरितरैः सार्धमहोभिः सद्विगर्हितैः ॥
तासामाद्याश्चतस्रस्तु निन्दितैकादशी च या ।
त्रयोदशी च शेषास्तु प्रशस्ता दश रात्रयः ॥

---

१ क—ब्रह्म गर्भम् ।

युग्मासु पुत्त्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु ।
तस्माद् युग्मासु पुत्त्रार्थी संविशेदार्तवे स्त्रियम् ॥
पुमान् पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः ।
समेऽपुमान् पुंस्त्रियौ वा क्षीणेऽल्पे च विपर्ययः ॥

याज्ञवल्क्यः [ १, ७९-८० ]

षोडशर्तुनिशाः स्त्रीणां तासु युग्मासु संविशेत् ।
ब्रह्मचार्येव पर्वाण्याद्याश्चतस्रस्तु वर्जयेत् ॥
एवं गच्छन् स्त्रियं क्षामां मघां मूलञ्च वर्जयेत् ।
सुस्थ इन्दौ सकृत् पुत्त्रं लक्षण्यं जनयेत् पुमान् ॥

तथा विष्णुपुराणम् [ ३, ११, १११ ]

ऋतावुपगमः शस्तः स्वपत्न्यामवनीपते ।
पुन्नामर्क्षे शुभे काले ज्येष्ठयुग्मासु रात्रिषु ॥

तथा गर्भाधानकर्मणि पारस्करः[१] [ १, ११, ८ ]

[२]अथास्यै दक्षिणांसमधि[३] हृदयमालभते यत्ते सुसीम इत्यादि ।

तदेवं स्थिते ऋतुनिशायां निषेकपूर्वसमये पत्नीदक्षिणस्कन्धोपनीतेन हस्तेन हृदयं स्पृष्ट्वा इमं मन्त्रं जपति

**यत्ते सुसीमे हृदयं दिवि चन्द्रमसि श्रितम् ।**
**वेदाहं तन्मां तद्विद्यात् पश्येम शरदः शतं जीवेम शरदः**
**शतꣳ शृणुयाम शरदः शतम् ॥ १७६**

पा गृ १, ११, ९ ]

हे सुसीमे [४]शोभना सीमा अवयवसन्धिर्यस्याः सा सुसीमा[४] हे शोभनावयवसन्धाने[५] ते तव यत् हृदयं मनः तत् अहं वेद जानामि। किम्भूतं

---

१ अतःपरं त-पुस्तके 'पूषा भगं सविता' 'गर्भं धेहि सिनीवालि' 'रेतोमूत्रं [मूत्रं] विजहाति' इति मन्त्रत्रयं सव्याख्यानं मुद्रापितम्। जातकर्मनिबन्धे स्पीजार्-महोदयस्य (Spiejer, Jatakarma, p. 19) टिप्पणी द्रष्टव्या। ङ-क-पुस्तकयोस्तु "अथ गर्भाधानमन्त्राः" इति लिखित्वा 'पूषा भग सविता मे ददातु' इत्यादि मन्त्रेण सह तद्व्याख्यानं किमपि स्वल्पतया प्रदत्तम्। तत्र पुनरित आरभ्य अन्नप्राशन-प्रकरणं यावत् पुंसवन सीमन्तोन्नयन-सोष्यन्तीकर्म-जातकर्म-सूतिकाहोम-मन्त्राणां व्याख्यानमयथावदसम्पूर्णञ्च दृश्यते। तदपि क्वचित् क्वचिदुवटभाष्यादन्यतो वा संगृहीतमिति प्रतीयते।

२ क—अथास्या।

३ क—क१—दक्षिणांशमधिहृत्य।

४ क—पुस्तके नास्ति।

५ क—°वयवसंस्थाने।

हृदयम्—दिवि आकाशे चन्द्रमसि श्रितं सम्बद्धम्। प्रथमतो हि स्त्रीणां चन्द्रः स्वामी। यथा यमः

पूर्वं स्त्रियः सुरैर्भुक्ताः सोमगन्धर्ववह्निभिः इति।

अतस्तदाश्रितं ते हृदयमित्यभिप्रायः। इदानीं तद्धृदयं मां विद्यात् मां पतित्वेन जानातु। किञ्च पश्येम शरदः शतम् आवां शतं वर्षाणि पश्याव। एवं जीवेम शरदः शतं शृणुयाम शरदः शतम्। इयन्तं[1] समयं चन्द्रस्तव पतिरासीत्। एतावता तव हृदयं तस्मिन्नाश्रितमिदानीमहं तव पतिरिति[2] तव हृदयं जानातु। आवामविकलेन्द्रियौ शतं वर्षाणि जीवाव इत्याशंसा वाक्यार्थः। पश्येम जीवेम शृणुयाम [3]इति तिङां तिङो भवन्तीति उत्तमपुरुषद्विवचनस्थाने बहुवचनम्[3] ॥ १७६ ॥

पुनः पारस्करः [ १, १३, १ ]

सा यदि गर्भं न दधीत सिंह्याः श्वेतपुष्प्या उपोष्य पुष्येण मूलमुत्थाप्य चतुर्थेऽहनि स्नातायां निशायामुदपेषं पिष्ट्वा दक्षिणस्यां नासिकायामासिञ्चति इयमोषधीत्यादि।

निषेके यदि गर्भो न भवति तदा पुनर्वसुनक्षत्रयुक्तदिने उपवासं कृत्वा पुष्यानक्षत्रे [4]श्वेतपुष्पकण्टकारिकामूलमुत्पाट्य स्थापयेत्[5]। तत ऋतुस्नान-निशायां तन्मूलं जलेन पिष्ट्वा तेन पत्न्या नस्यं दद्यादनेन मन्त्रेण

**इयमोषधी त्रायमाणा सहमाना सरस्वती।**

**अस्यां बृहत्यां पुत्रः पितुरिव नाम जग्रभत् ॥ १७७**

[ पा गृ १, १३, १—अस्या अहं बृहत्याः पितुरिव नाम जग्रभम्। आपम—(प्रथमार्धमात्रम्) इयमोषधे त्रायमाणा सहमाना सहस्वती ]

इयमोषधी बृहती व्याधिनाशनकारी। किम्भूता—त्रायमाणा रक्षाकरी। सहमाना उत्पन्नदोषमर्षिणी। सरस्वती सरस्वतीव वाक्प्रसादहेतुः। अस्यां बृहत्यां कण्टकारिकायां पुत्रो नाम जग्रभत् प्रकाशकत्वं गृह्णातु। किम्भूतं नाम—पितुरिव पितृसदृशमित्यर्थः। अत्र पूर्वार्धेन [6]बृहतीस्तुतिः उत्तरार्धेनास्याः पुत्रः प्रकाशकत्वं लभतामित्याशंसा वाक्यार्थः। जग्रभदिति ग्रह उपादाने। हृग्रहोर्भश्छन्दसीति ( पा वा ३, १, ८४ ) हकारस्य भकारः ॥ १७७ ॥

इति गर्भाधानम् ॥

---

१ क—इदन्तु। क१—इमन्तं।

२ क—क१— मह्मुपपतिरिति।

३ क—इति वसो मस् व्यत्ययेन।

४ क१—श्वेतकण्टकारिका।

५ क१—स्नापयेत्।

६ क२—बृहती पुत्राशंसा च।

## अथ पुंसवनम्

तत्र हारीतः—पुंसवनात् पुंसीकरोति फलम् ।
तत्र गर्भाधानाद्यष्टौ संस्कारानभिधाय पुनः स एवाह
एतैरष्टभिर्गर्भसंस्कारैर्गर्भोपघातात् पूतो भवति ।

पारस्करः [ १, १४, १—४ ]

अथ पुंसवनम् । पुरा स्पन्दत इति मासे द्वितीये तृतीये वा । यदहः पुंसा नक्षत्रेण चन्द्रमा युज्यते तदहरुपवास्याप्लाव्याहते वाससी परिधाप्य न्यग्रोधावरोहाञ्छुङ्गांश्च निशायामुदपेषं पिष्ट्वा पूर्ववदासेचनं हिरण्यगर्भोऽद्भ्यः सम्भृत इत्येताभ्याम् । कुशकण्टकं सोमांशुञ्चैके ।

तदेवं सति यथोक्तसमये वटावरोहशुङ्गकुशकण्टकशिशिरजलानि पिष्ट्वा नूतनवस्त्रद्वयपरिधानायाः पत्न्या नस्यन्ददाति पतिरेताभ्यां मन्त्राभ्याम्

**हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् ।**
**स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ १७८**

[ ऋ स १०, १२१, १ । वा स १३, ४ । का स १४, ४ ]

**अद्भ्यः सम्भृतः पृथिव्यै रसाच्च विश्वकर्मणः समवर्त्तताग्रे ।**
**तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे ॥ १७९**

[ वा स ३१, १७ । का स ३५, १७ ]

हिरण्यगर्भ ऋषिः प्रजापतिर्देवता त्रिष्टुप् छन्दश्चयने हिरण्यगर्भपुरुषाधाने विनियोगः ।

हिरण्यगर्भः हिरण्यगर्भाख्यः पुरुषः अग्रे समवर्त्तत समभवत् । अग्रे प्रथमम् । यो हिरण्यगर्भो जातो जातमात्रो भूतस्य प्राणिजातस्य एकः अद्वितीयः पतिरासीत् स्वामी बभूव । एवंभूतः स पृथिवीं दधार । न केवलं पृथिवीमुत इमां द्याम् अन्तरिक्षम् । एवम्भूताय कस्मै काय प्रजापतये देवाय हविषा हविः विधेम दद्मः । दधारेति प्राप्ते आकारश्छान्दसः । कायेति प्राप्ते स्मै आदेशश्छान्दसः । हविषेति द्वितीयास्थाने तृतीया । अयं वाक्यार्थः—यो हिरण्यगर्भ एक एव प्राणिजातस्य प्रभुः पृथिवीमन्तरिक्षञ्च धारयति तस्मै प्रजापतिमूर्त्तये हविरपि दीयत इति प्रजापतिस्तुतिः ॥ १७८ ॥

नारायण ऋषिर्जगद्बीजं पुरुषो देवता त्रिष्टुप् छन्दः पुरुषमेधे आदित्योपस्थाने विनियोगः ।

यो विष्णुः अग्रे प्रथमम् अद्भ्यो जलात् पृथिव्यै च पृथिव्या अपि। चकारो भिन्नक्रमः। सम्भृतः समवर्तत उत्पन्नोऽभवत्। जलपृथिव्योरुपादानं पञ्चमहाभूतोपलक्षणार्थम्। कुतो निमित्तकारणात्—रसात् कामात् सिसृक्षारूपात्। विश्वकर्मणः विश्वं सर्वं कर्म यस्य तस्य विष्णोः। रूपं मूर्तिं विदधत् धारयन्। त्वष्टा आदित्यः। अग्रे पुरतः सर्वेषामपरोक्षमित्यर्थः। एति गच्छति। तत् रूपं मर्त्यस्य मनुष्यस्य देवत्वं देवत्वेनैव भवति। किम्भूतम्—आजानम् यावज्जन्म। विष्णुः सृष्ट्यादौ पञ्चमहाभूतेभ्य उपादानकारणेभ्यः सिसृक्षां निमित्तकारणं प्राप्योत्पद्यते। तदनु आदित्यस्तस्य विष्णोर्यद्रूपं धारयन् गच्छतीति सर्वेषां प्रत्यक्षं तद्रूपं मनुष्यस्य देवत्वेन भवतीति वाक्यार्थः। अत्र पृथिव्यै इति पञ्चम्यर्थे चतुर्थी। देवत्वमिति तृतीयार्थे द्वितीया। इत्थं स्तुतः प्रजापतिरस्मिन् गर्भे सन्निधानं करोत्विति अभिप्रेत्य आभ्यां मन्त्राभ्यां पुंसवने नस्यं दीयते ॥ १७९ ॥[1]

पारस्कर: [ १, १४, ५ ]

कूर्मपित्तं चोपस्थे कृत्वा स यदि कामयेत वीर्यवान्त्स्यादिति विकृत्यैनमभिमन्त्रयते सुपर्णोऽसीत्यादि।

पत्न्युपस्थसन्निधौ पानीयमुपस्थाप्याभिमन्त्रयेदनेन मन्त्रेण

**सुपर्णोऽसि गरुत्माꣳस्त्रिवृत्ते शिरः।**
**गायत्रं चक्षुर्बृहद्रथन्तरे पक्षौ ॥**
**स्तोम आत्मा छन्दाꣳस्यङ्गानि यजूꣳषि नाम।**
**साम ते तनूर्वामदेव्यं यज्ञायज्ञियं पुच्छं धिष्ण्याः शफाः ॥**
**सुपर्णोऽसि गरुत्मान्दिवं गच्छ स्वः पत ॥ १८०-१८२**

[ वा स १२, ४-६। का स १३, ४-६ ]

प्रजापतिर्ऋषिर्गरुड़ो देवता [2]कृतिश्छन्दश्चयनस्थानाभिमन्त्रणे विनियोगः।

सुपर्णः शोभनपक्षः गरुत्मान् [3]दूरगत्यादिगुणयोगेन प्रशस्तपक्षवान् त्रिवृत् ओंकारः ते तव शिरः मस्तकम्। गायत्रं साम ते चक्षुः। बृहद्रथन्तरे सामनी ते पक्षौ। स्तोमः स्तोमाख्यपञ्चविंशतिसामानि ते आत्मा स्वरूपम्। छन्दांसि अनुष्टुबादीनि ते अङ्गानि। यजूंषि यजुर्वेदः ते नाम संज्ञा। साम ते तव तनूः शरीरम्। कतमत्—वामदेव्यं साम। यज्ञायज्ञियं साम च पुच्छं लाङ्गूलम्।

---

१ मन्त्रोऽयमुत्तरनारायणे पूर्वं ( १४१ पृः ) व्याख्यातः।

२ क२—प्रकृति°। ङ—विकृति°।

३ क—दूरत्वादि°। ग—दूरगामित्वादि°।

धिष्ण्या अग्नयः ते शफाः नखाः। यतस्त्वं सुपर्णः असि गरुत्मान् च अतो दिवम् आकाशं गच्छ याहि। स्वः स्वर्गलोकं पत याहि। अयं वाक्यार्थः—सुपर्णत्वादिगरुड़-धर्ममारोप्य वेदमयस्त्वमित्यग्निः स्तूयते। पुंसवनेऽग्निजलयोः कार्यकारणभावाद-भेदाश्रयणेनाग्निस्तुत्या जलमेव स्तुतं गर्भस्य वीर्यवत्त्वं करोति ॥ १८०-१८२ ॥

इति पुंसवनम् ॥

## अथ सीमन्तोन्नयनम्

तत्र हारीतः—उन्नयनान्मातापितृजं पाप्मानमपोहति।

तथा[1] गर्भाधानाद्यष्टसंस्काराणां प्रत्येकं फलमभिधाय हारीत एव पुनराह

एतैरष्टभिर्गर्भसंस्कारैर्गर्भोपघातात् पूतो भवति।

पारस्करः [ १, १५, १—३ ]

अथ सीमन्तोन्नयनं पुंसवनवत्। प्रथमगर्भे मासे षष्ठेऽष्टमे वा।

अत्र पुंसवनवदिति पुंनक्षत्रदिनपत्नीस्नानाहतवासोद्वयपरिधानान्यतिदिष्टानि। प्रथमगर्भे इति द्वितीयादिगर्भेषु सीमन्तोन्नयननिषेधार्थम्।

यथा हारीतः

सकृत् संस्कृतसंस्काराः[2] सीमन्तेन द्विजस्त्रियः।
यं-यं गर्भं प्रसूयन्ते स सर्वः संस्कृतो भवेत् ॥

पुनः पारस्करः [ १, १५, ४-५ ]

तिलमुद्गमिश्रं स्थालीपाकं श्रपयित्वा प्रजापतेर्हुत्वा पश्चादग्नेर्भद्रपीठ उपविष्टायाः युग्मेन सटालुग्रप्सेनौदुम्बरेण त्रिभिश्च दर्भपिञ्जूलैस्त्रेण्या शलल्या वीरतरशङ्कुना पूर्णचात्रेण च सीमन्तमूर्ध्वं विनयति भूर्भुवः स्वरिति। [3]प्रतिमहाव्याहृति वा[3]।

भद्रपीठो मङ्गलपीठः। युग्मेन युग्मसंख्यापरिपक्वोदुम्बरफलस्तबकेन। साग्रप्रादेश-मात्रगर्भशून्यकुशपत्रद्वयं पिञ्जूलम्।

यथा छन्दोगपरिशिष्टे कात्यायनः [ १, २, १० ]

अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ॥

---

१ क—पुस्तके नास्ति। २ क१—कल्पितसंस्काराः। ३ क—प्रतिमहाव्याहृतिभिर्वा।

इत्यभिधाय पुनराह [ छ प १, २, ११ ]

एतदेव हि पिञ्जूल्या लक्षणं समुदाहृतमिति ।

त्रेण्या शलल्या त्रिश्वेतशललीकण्टकेन । वीरतरशङ्कुना काष्ठेन । पूर्णचात्रेण सूत्रपूरितेन तर्कुणा[1] ।

पुनः पारस्करः [ १, १५, ६ ]

चिवृतमाबध्नात्ययमूर्जावत इति ।

अत्र त्रिवृतं वेणीम् ।

पुनः पारस्करः [ १, १५, ७-८ ]

अथाह वीणागाथिनौ राजानं संगायेतां यो वाप्यन्यो वीरतर इति । नियुक्तामप्येके गाथामुपोदाहरन्ति सोम एवेत्यादि । यां [2]नदीमुपावसिता भवति[2] तस्या नाम गृह्णाति ।

अत्र नियुक्तामिति पूर्वाचार्यैर्विहितां[3] गाथामपि पठेत् इत्यर्थः ।

पुनः पारस्करः [ १, १५, ९ ]—ततो ब्राह्मणभोजनम् ।

एवं सति यथोक्तसमये प्राङ्गणे पत्नीसमेतः पतिरग्निस्थापनपूर्वकं चरुश्रपणादिकं कृत्वा आघाराज्यभागौ हुत्वा चरुहोमं स्विष्टकृद्धोमञ्च कृत्वा पञ्च वारान् जुहुयादेभिर्मन्त्रैः ( का श्रौ २५, १, ११ द्रः )

**त्वन्नो अग्ने वरुणस्य विद्वान् देवस्य हेडो अव यासिसीष्ठाः । यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांᳩसि प्र मुमुग्ध्यस्मत् ॥१८३**

[ ऋ स ४, १, ४ । वा स २१, ३ । का स २३, ३ ]

वामदेव ऋषिः[4] अग्नीवरुणौ देवते त्रिष्टुप् छन्दः सौत्रामण्यामवभृथेष्टौ विनियोगः ।

हे अग्ने त्वं वरुणस्य देवस्य हेडः क्रोधम् अस्मिन् कर्मणि वैगुण्यजनितं अवयासिसीष्ठा अपनय । किम्भूतस्त्वम्—नः अस्मान् विद्वान् त्वमेवास्माकं कर्मसाक्षित्वेनास्मान् जानासीत्यर्थः । न केवलं वरुणस्य क्रोधमपनय अस्मत् अस्मत्तो द्वेषांसि दौर्भाग्याणि च प्रमुमुग्धि प्रमोचय । किम्भूतानि—विश्वा सर्वाणि । त्वं किम्भूतः—[5]यजिष्ठः यागे सातिशय उत्तमः । पुनः किम्भूतः—वह्नितमः हविषां वहने प्रापणे सातिशयः[5] । पुनः किम्भूतः—शोशुचानः उत्तरोत्तरं दीप्यमानः ।

---

१ क२—सूत्रपूर्णतर्कुशलाकुल्या ।

२ क—क१—°वसितारो भवन्ति ।

३ क—पूर्वाचार्यैर्विहृतां ।
क२—पूर्वाचार्यप्रसिद्धां ।

४ क—क१—क२—अश्विसरस्वतीन्द्रा ऋषयः । सर्वानुक्रमसूत्रे मन्त्रस्यास्य सौत्तरस्य वामदेव ऋषिरित्युक्तः ।

५ क—क१—च—ग—अयमंशो नास्ति ।

हे अग्ने त्वमस्मान् जानासि अतोऽस्माकमस्मिन् कर्मणि प्रमादादिजनितवैगुण्य-कृतं वरुणस्य क्रोधमपनयास्माकं दौर्भाग्याणि च मोचयेति प्रार्थना वाक्यार्थः। हेड इति हेडृ अनादरे इत्यस्य प्रयोगः। द्वितीयैकवचने प्रथमैकवचनम्। शोशुचान इति लिटः कानज्वेति ( पा ३, २, १०६ ) कानचा रूपम् ॥ १८३ ॥[1]

ऋष्यादिकं पूर्ववदुच्चार्य

**स त्वन्नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ।**
**अव यक्ष्व नो वरुणꣳ रराणो वीहि मृडीकꣳ सुहवो न एधि ॥ १८४**

[ ऋ स ४, १, ५ । वा स २१, ४ । का स २३, ४ ]

हे अग्ने स त्वं नः अस्माकं अवमो भव अवितृतमः पालयितृतमो भव। स कः—यस्त्वम् ऊती ऊत्या नेदिष्ठः नित्यं पालकत्वेन सन्निहितः। कस्मिन् समये अवमो भव—अस्या उषसः अस्यैव प्रभातस्य व्युष्टौ समाप्तौ अस्मिन्नेव दिवसे इत्यर्थः। न केवलमेवम्। नः अस्मान् प्रति एधि आगच्छ। किञ्च त्वम्—सुहवः सुखाह्वानः। आगत्य वरुणम् अवयक्ष्व पूजय। किं कुर्वन्—नोऽस्माकं मृडीकं रराणः अस्मत्सम्बन्धि सुखकरं हविर्ददानः। स्वयञ्च वीहि तदेव भक्षय। हे अग्ने यस्त्वं लोकस्य पालनेन नित्यं सन्निहितः स त्वमद्यै-वास्माकं पालको भव अस्मान् प्रत्यागच्छ आगत्य चास्मदीयहविर्दानेन वरुणं पूजय स्वयमपि भक्षय इति प्रार्थना वाक्यार्थः। अवमः अव रक्षणे इत्यस्या-वतमः। तमस्य तकारलोपश्छान्दसः। ऊती अव रक्षणे इत्यस्य ऊतियूतीति (पा ३, ३, ९७) निपातनादूतीति रूपम्। अत्र तृतीयैकवचने सुपां सुलुगित्यादिना ( पा ७, १, ३९ ) पूर्वसवर्णादेशे ऊती रूपम्। रराणः इति रा ला दाने इत्यस्य यङ्लुकि शानचा रूपम्। मृडीकं मृड सुखने इत्यस्य औणादिक ईकन् प्रत्ययः[2] ॥ १८४ ॥

प्रजापतिर्ऋषिर्विराट् छन्दोऽग्निर्देवता प्रायश्चित्तहोमे विनियोगः।

**अयाश्चाग्नेऽस्यनभिशस्तिपाश्च सत्यमित्त्वमया असि।**
**अया नो यज्ञं वहास्यया नो धेहि भेषजम् ॥ १८५**

[ का श्रौ २५, १, ११ । पा गृ १, २, ८ ]

---

१ 'त्वं नो अग्ने' 'स त्वं नो अग्ने' 'अयाश्चाग्ने' तथा 'ये ते शतम्' इति चत्वारो मन्त्रा ङ-ञ-झ-पुस्तकेष्वितः परम् 'आधानाद्यन्त्येष्टिकर्मणां मन्त्रव्याख्या' इत्याख्ये प्रकरणे व्याख्याता अत्र च न पठिताः।

२ उणादिसूत्रं तु (४७२)—मृडः कीकच्-कङ्कणाविति।

हे अग्ने त्वमयाश्च प्राणिनां शुभावहविधिरपि असि। अपरम्—अनभिशस्तिपाश्चासि अविद्यमाना अभिशस्तिर्याच्ञा यस्य पुरुषस्य सोऽनभिशस्तिः तमपि पासि रक्षसीति अनभिशस्तिपाः। अयमर्थः—यस्त्वां रक्षणार्थं न याचते तस्यापि त्वं माहात्म्यात् रक्षको भवसीति। तदित्थंभूतस्त्वम् अया आगच्छ। आगत्य नः अस्माकं यज्ञं वह यद्धविरेतद्धुतं तत् त्वं देवान् प्रापय। किञ्च त्वं सत्यमित् सत्यमेव। अया असि ज्ञातासि जगतः[1] निस्तारोपायं जानासीत्यर्थः। अतोऽपि कारणात् त्वम् अया आगच्छ आगत्य च नोऽस्माकं भेषजं धेहि अस्मन्निस्तारोपायमौषधं परिकल्पय। अत्र यद्यपि लोके शुभावहविधिवाची अयशब्दोऽकारान्तस्तथाप्यसुन्नन्तत्वाच्छन्दसि सकारान्तः। सत्यमिदिति इच्छब्दोऽव्ययमवधारणार्थः। अया नो यज्ञं वहास्यया नो धेहि भेषजमित्यया अया इति क्रियापदद्वयमत्यन्तार्थित्वद्योतनार्थम्। अत्राया इति इण् गतावित्यस्य लेटमध्यमपुरुषैकवचने सिप्। इतश्च लोपः परस्मैपदेष्विति ( पा ३, ४, ९७ ) इकारलोपः। धातोर्गुणः। लेटोऽडाटावित्यडागमः (पा ३, ४, ९४)। आङ्पूर्वस्य गुणस्याकारेण एकादेशे सति वर्णव्यत्ययाद्ह्रस्वत्वम्। अया इति सर्वे गत्यर्था ज्ञानार्था इति कृत्वा एति जानातीत्यसुन्प्रत्ययेन रूपम् ॥ १८५ ॥

**ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः।**
**तेभिर्नो अद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः ॥ १८६**

[ का श्रौ २५, १, ११। ( प्रतीकमात्रम् ) पा गृ १, २, ८ ]

शुनःशेप ऋषिर्जगती छन्दो वरुणः सविता विष्णुर्विश्वे देवा मरुतः स्वर्का देवताः प्रायश्चित्तहोमे विनियोगः।

हे वरुण तव शतं पाशा वितता विस्तीर्णाः। अपि च ये सहस्रम्। शतसहस्रयोरुपादानमतिबहुत्वोपलक्षणार्थम्। किम्भूताः—यज्ञियाः यज्ञेष्वतथाभूतानुष्ठानजनिताः। अपि च किम्भूताः—महान्तः सर्वलोकव्यापकाः। तेभिः तैः पाशैः। नः अस्मान्। अद्य इदानीम्। सविता न केवलं सविता उत विष्णुः विश्वे देवाः मरुतः वायवः स्वर्काः सुष्ठु अर्काः आदित्या मुञ्चन्तु मुक्तान् कुर्वन्तु। अयं वाक्यार्थः—अस्मिन् यज्ञकर्मणि यानि कानिचित् प्रमादादिकृतान्यतथाभूतानुष्ठानजनितानि पापानि दुःखहेतुत्वगुणयोगात् पाशशब्दाभिधेयानि तैः पाशैः सवित्रादयो देवा अनयाहुत्या तोषिता अस्मान् मुक्तान् कुर्वन्तु।

---

१ क१—संसारादित्यधिकम्।

तेभिरिति बहुलं छन्दसीति ( पा ७, १, १० ) ऐसादेशनिषेधे बहुवचने झल्येदिति ( पा ७, ३, १०३ ) एत्वम् ॥ १८६ ॥

शुनःशेफ ऋषिस्त्रिष्टुप् छन्दो वरुणो देवता चयने शिक्यरुक्मपाशयोरुन्मोचने च विनियोगः ।

उदुत्तमं वरुणपाशमस्मदवाधमं वि मध्यमꣳ श्रथाय ।
अथा वयमादित्य व्रते तवानागसो अदितये स्याम ॥ १८७

[ ऋ स १, २४, १५ । वा स १२, १२ । का स १३, १३ ]

हे वरुण उत्तमं पाशम् अस्मत् अस्मत्तः उच्छ्रथय उत् ऊर्ध्वं श्लथं कृत्वा नय । अधमं पाशम् अव अवाचीनं श्रथय । पूर्ववत् । तदेवं मध्यमम् उत्तमाधमयोरन्यत् विश्रथय स्वस्थान एव विशेषेण श्रथय अपनय । अथैवं कृते सति हे आदित्य अदितेः पुत्र वरुण तव व्रते कर्मणि वर्तमाना वयम् अनागसः अनपराधाः सन्तः अदितये अदीनतायै स्याम अदीना भवेम इत्यर्थः । अयं वाक्यार्थः—वरुणे उत्तमाधममध्यमपाशत्रयश्लथीकरणमभ्यर्थ्य वारुणव्रताचरणेन वयमदीना भवेम इत्याशंसा । अत्र श्रथायेति रलयोरैकत्वस्मरणाल्लकारस्य रेफः । श्रथाय अथा वयमित्यत्र द्वयेऽप्याकारः संहितायां पठ्यमानः पदेऽपठ्यमानत्वात् संहितायां छान्दसः । अदितये इति दो अवखण्डने इत्यस्माद्धातोः क्तिन्प्रत्यये कृते दितिरिति रूपम् । न दितिरदितिः । तादर्थ्ये चतुर्थी । अदितये अदीनतायै इत्यर्थः ॥ १८७ ॥

होमं समाप्य पत्नीसीमन्तं शल्लकीकण्टकादिभिरूर्ध्वमुखैः करोत्यनेन मन्त्रत्रयेण

भूर्विनयामि । भुवर्विनयामि । स्वर्विनयामि ॥ १८८-१९०

[ पा गृ १, १५, ४ ]

भूः भूर्लोकं विनयामि पृथक् करोमि ॥

भुवः भुवर्लोकमन्तरीक्षं विनयामि पृथक् करोमि ॥

स्वः स्वर्गलोकं विनयामि पृथक् करोमि ॥

पुंसवने हिरण्यगर्भ इत्यादि मन्त्रद्वयेन नस्यं दत्त्वा त्रैलोक्यपतिस्त्रैलोक्याधारः पुरुषोत्तमो गर्भे आहितः । एतावता[1] गर्भिणीयं त्रैलोक्यमयी[2] वर्तते ।

१ त—षतो ।  २ च—त्रैलोक्यमिवै । न—त्रैलोक्यमपि ।

तथा च सति भूरादिलोकत्रयमसंकीर्णं भवतु इत्यभिप्रेत्यैभिर्मन्त्रैः[1] केशानां पृथक्करणं क्रियते ॥ १८८-१९० ॥

सीमन्तोन्नयनेन पृथक्कृतैः केशैः वेणीं बध्नात्यनेन मन्त्रेण

**अयमूर्जावतो वृक्ष ऊर्जीव फलिनी भव ॥ १९१**

[ म ब्रा १५, १ । पा गृ १, १५, ६ ]

हे गर्भिणि अयं वृक्ष ऊर्जावतः ऊर्जा बलं तद्वान्। तद्योगात् ऊर्जीव उदुम्बरीव फलिनी भव। यथा उदुम्बरी फलयुक्ता तथा त्वमपि पुत्रिणी भव। अत्र प्रथमपदेन उदुम्बरस्तुतिः। द्वितीयपदेन गर्भिण्याः पुत्रिणीत्वमाशास्यते। ऊर्जावत इति सुपां सुपो भवन्तीति विभक्तिव्यत्ययेन प्रथमैकवचनस्थाने द्वितीया-बहुवचनम् ॥ १९१ ॥

वीणाकाराभ्यां राजनि गीयमाने यजमानः स्वयमेतां गाथां गायति

**सोम एव नो राजेमा[2] मानुषीः प्रजाः।**
**अविमुक्तचक्रा आसीरंस्तीरे तुभ्यमसौ ॥ १९२**

[ पा गृ १, १५, ८ पाठान्तरम्--अविमुक्तचक्र(क्रे)। आश्व गृ १, १५, ७—सोमो नो राजावतु मानुषीः प्रजा निविष्टचक्रासौ। हि गृ २, १, ३—राजेत्याहुर्ब्राह्मणीः प्रजाः। विवृत्तचक्रा आसीनास्तीरे तुभ्यं गङ्गे। आपम २, ११, १३—राजेत्याहुर्ब्राह्मणीः प्रजाः। विवृत्तचक्रा आसीनास्तीरेणासौ तव ]

हे असौ अमुकनदि तुभ्यं तव तीरे इमाः प्रजा आसीरन् तिष्ठन्ति। किम्भूताः—मानुषीः मानुष्यः। पुनः किम्भूताः—अविमुक्तचक्राः अविमुक्तम् अपरित्यक्तं चक्रं मण्डलं याभिस्ता अविमुक्तचक्राः। तासां प्रजानां राजा यथा रक्षकः पोष्टा च भवति एव एवं नः अस्माकं सोमश्चन्द्रो रक्षकः पोष्टा च भवतु। हे अमुकनदि त्वदीयतीरस्थप्रजानां यथा राजा रक्षकः पोष्टा च तथास्माकं चन्द्रो रक्षको भवत्वित्याशंसा वाक्यार्थः। अत्र मानुषीरिति सुपां सुपो भवन्तीति प्रथमाबहुवचनस्थाने द्वितीयाबहुवचनम्। तुभ्यमिति षष्ठ्यर्थे चतुर्थी। असाविति सम्बोधनान्तसमीपस्थितनदीनामोपलक्षणम् ॥ १९२ ॥

इति सीमन्तोन्नयनम् ॥

---

१ क—घ—°प्रेत्याशीभिर्मन्त्रैः। न—°प्रेत्यैभिस्त्रिभिर्मन्त्रैः।　　२ क—क१—राजेव।

## अथ सोष्यन्तीकर्म

तत्र पारस्करः [ १, १६, १ ]

सोष्यन्तीमद्भिरभ्युक्षत्येजतु दशमास्य इति।

अत्र प्रासशूलवेदनां गर्भिणीं सुखप्रसवार्थं जलेनाभ्युक्षत्यनेन मन्त्रेण

**एजतु दशमास्यो गर्भो जरायुणा सह।**
**यथायं वायुरेजति यथा समुद्र एजतीएवायं दशमास्यो**
**अस्त्रज्जरायुणा सह ॥ १८३**

[ वा स ८, २८। का स ६, २७ ]

दशमास्यः प्रसवकालीनो गर्भः एजतु कम्पतां चलतु। न केवलं गर्भः स्वयम् अपि तु जरायुणा सह। जरायु गर्भवेष्टनम् 'आँयल'१ इति यस्य प्रसिद्धिस्तेन सह। यथायं वायुः एजति कम्पते समुद्रश्च एजति तथायं गर्भो दशमास्यः सम्पूर्णकालीनः जरायुणा सह अस्रत् अधःपाती भवतु। अस्रदिति स्रन्सु अधःपतने इत्यस्माद्धातोराशंसायां लिङ्प्रथमैकवचनम्। छन्दस्यपि दृश्यते (पा ६, ४, ७३) इत्यडागमः। आगमशासनमनित्यमिति यासुट् न भवति। किदाशिषीति (पा ३, ४, १०४) लिङ् किच्च। अनिदिताम् इति (पा ६, ४, २४) अनुनासिकलोकः। स्कोः संयोगाद्योरन्ते चेति (पा ८, २, २९) सकारलोपः ॥ १८३ ॥

इति सोष्यन्तीकर्म ॥

## अथावरावपतनम्

तत्र पारस्करः [ १, १६, २ ]

अथावरावपतनम्। अवैतु पृश्नीति।

अपत्यप्रसवे भूतेऽवरावपतनार्थमिमं मन्त्रं जपति।

**अवैतु पृश्नि शेवलꣳ शुने जरायृत्तवे।**
**नैव माꣳसेन पीवरी न कस्मिंꣳश्चनायतमव जरायु पद्यताम् ॥ १८४**

[ पा गृ १, १६, २। श स १, ११, ४ द्रः। आपम २, ११, २०—निरैतु पृश्नि, तथा २, ११, १६ द्रः ]

---

१ क—क१—अमरा। घ—च—फलवा। त—आँभील। न—आवरा। आँयल-पदं वङ्गभाषाया-मुल्वपर्यायत्वेन प्रचरदासीदिति क्वचित् क्वचिदुल्वशब्दव्याख्याने गौडीयामरकोशटीकासु सूचितमास्ते।

जरायु अवैतु अपगच्छतु। किमिव—पृश्नि शेवलम्। एतयोरुपादानं दृष्टान्तार्थम्। एतेनैतदुक्तं भवति—यथा पृश्नि पर्णी[1] शैवलं च प्रसिद्धमेव मूलेन क्वचिदप्यसंलग्नं जलोपरिस्थितं सत् क्षुद्रवातादिप्रेरणमात्रेणाप्यपगच्छति तथा जरायु सुखेनापगच्छतु।[2] कथङ्कारम्—न शुने अत्तवे शुनोऽदनाय यथा न भवतीत्यर्थः। किम्भूतं जरायु—मांसेन पीवरी पुष्टम्। किञ्च जरायु कस्मिंश्चन नावपद्यताम् कुत्राप्युदरावयवे अवपन्नं विलग्नं न भवतु। किम्भूतम्—आयतं महत्। उदरेऽसंलग्नं जरायु सुखेन पतत्वित्यर्थः। अत्र शुने इति षष्ठ्यर्थे चतुर्थी। अत्तवे इति अद भक्षणे इत्यस्माद्धातोः तुमर्थे से-सेनित्यादिना (पा ३, ४, ९) तवेङ्प्रत्यये कृते रूपम्। पीवरीति लिङ्गव्यत्ययेन स्त्रीत्वम्॥ १९४॥

इत्यवरावपतनम्[3]॥३

## अथ जातकर्म

तत्र हारीतः

> रेतोरक्तगर्भोपघातः पञ्चगुणो जातकर्मणा प्रथममपोहति।

तथा गर्भाधानाद्यष्टसंस्काराणां प्रत्येकं फलमभिधाय हारीत एव पुनराह

> एतैरष्टभिर्गर्भसंस्कारैर्गर्भोपघातात् पूतो भवति।

तथा पारस्करः [ १, १६, ३ ]

> जातस्य कुमारस्याच्छिन्नायां नाड्यां मेधाजननायुष्ये करोति।

---

१ क१—पाङ्गा। क२—बङ्गि।

२ पृश्नि शेवल चेति द्वय यथा भूमावसक्तमूलं पयसि प्लवमानं तिष्ठति तथा गर्भवेष्टनमप्यदृढमूलं गर्भिण्युदरेऽवतिष्ठत इति हलायुधोक्तेराशयः। पृश्निशब्देनात्र वङ्गेषु 'पाना'-सञ्ज्ञया ख्यातं जलजं पर्णमुद्दिष्टमिति प्रतीयते। गायकवाडग्रन्थ-मालायां प्रकाशिते केशवीय-कल्पद्रुकोशे ( १६ पृः ) पृश्निका पर्णिका च समार्थके दृश्येते—

पृश्निका पर्णिका वारिपर्यायेभ्यः परा स्त्रियाम्।
मूलिका पर्णिका चाथास्त्रियां शैवालशैवले॥

'वाचस्पत्ये'ऽभिधाने 'शब्दकल्पद्रुमे' च पृश्निका-पदस्य पानावाचित्वं 'शब्दमाला'कोशप्रमाणेन दर्शितम्। मथुरेशकृत-शब्दरत्नावल्यां पृश्नीति पदं वारिपर्ण्याः पर्यायत्वेन धृतम्। जलजातं शैवलं तु प्रसिद्धमेव। अवैतु पृश्नि शेवल-मित्यथर्ववेदपठिते तु (१, ११, ४) मन्त्रे पृश्निपदं तावत् ह्विट् नि-महोदयेन शबलवाचित्वेन (spotted) गृहीतम्। 'जलस्योपरिस्थित-शैवालवदन्तरावयवासम्बद्धमि'ति सायणकृत-व्याख्यानञ्च तेन worthless इत्यधिक्षेपोक्त्या दूषितम्। तदेव तु व्याख्यानमत्र सर्वथा स्वारसिकमिति प्रतीयते तथा सायणपूर्वजेन हलायुधेनापि स्वीकृतमिति सम्प्रदायप्राप्तञ्चेत्यवगम्यते।

३ त-पुस्तके अवरावपतनमन्त्रव्याख्या न मुद्रापिता।

तथा [ पा गृ १, १६, ४ ]

अनामिकया सुवर्णान्तर्हितया[1] मधुघृते प्राशयति घृतं वा। भूस्त्वयि दधामीत्यादि।

तत्र कुमारस्य मेधाजननार्थं मधुघृतं प्राशयत्येभिर्मन्त्रैः

भूस्त्वयि दधामि। भुवस्त्वयि दधामि। स्वस्त्वयि दधामि। भूर्भुवः स्वः सर्वं त्वयि दधामि॥ १९५—१९८

[ श ब्रा १४, ९, ४, २५। पा गृ १, १६, ४ ]

भूः भूर्लोकं त्वयि कुमारे दधामि आदधामि॥

भुवः भुवर्लोकमन्तरीक्षं त्वयि कुमारे दधामि अर्पयामि॥

स्वः स्वर्गलोकं त्वयि कुमारे दधामि आरोपयामि॥

भूर्भुवः स्वरेतल्लोकत्रयोपलक्षितमेतदाश्रितं सर्वं प्रमेयजातं त्वयि दधामि आदधामि॥

त्वमनेन त्रैलोक्यगतप्रमेयजाताधानकर्मणा • त्रैलोक्यगतप्रमेयजातधारणात्मेधायुक्तो भवेति वाक्यार्थः॥ १९५-१९८॥

पुनः पारस्करः [ १, १६, ६-७ ]

दक्षिणे कर्णे जपति अग्निरायुष्मानित्यादि······त्रिस्त्रिस्त्र्यायुषमिति च।

तदनु कुमारस्य दीर्घायुष्ट्वार्थमेतन्मन्त्रद्वयं दक्षिणकर्णे जपति।

अग्निरायुष्मान्त्स वनस्पतीभिरायुष्मांस्तेन त्वायुषायुष्मन्तं करोमि॥

सोम आयुष्मान्त्स ओषधीभिरायुष्मांस्तेन त्वायुषायुष्मन्तं करोमि॥

ब्रह्मायुष्मत्तद् ब्राह्मणैरायुष्मत्तेन त्वायुषायुष्मन्तं करोमि॥

देवा आयुष्मन्तस्तेऽमृतेनायुष्मन्तस्तेन त्वायुषायुष्मन्तं करोमि॥

ऋषय आयुष्मन्तस्ते व्रतैरायुष्मन्तस्तेन त्वायुषायुष्मन्तं करोमि॥

---

१ क—क१—अन्तरितया। क२—चतुर्थी इत्यधिकम्।

पितर आयुष्मन्तस्ते स्वधाभिरायुष्मन्तस्तेन त्वायुषायुष्मन्तं करोमि ॥

यज्ञ आयुष्मान्त् स दक्षिणाभिरायुष्मांस्तेन त्वायुषायुष्मन्त करोमि ॥

समुद्र आयुष्मान्त् स स्रवन्तीभिरायुष्मांस्तेन त्वायुषायुष्मन्तं करोमि ॥ १९९—२०६

[ तै स २, ३, १०, ११-१९ द्र: । पा गृ १, १६, ६ ]

योऽयमग्निरायुष्मान् चिरस्थायी स वनस्पतिभिर्वृक्षैर्दारुतयाऽग्नेराश्रयत्वमुपगतैरायुष्मान् । तेनाग्निसम्बन्धिना आयुषा त्वा त्वाम् आयुष्मन्तं करोमीति सम्बन्धः ॥ सोमः चन्द्रः ओषधीभिः व्रीह्यादिभिः । दर्शे[1] क्षीणश्चन्द्र [2]ओषधीषु प्रविष्टो भवति[2] । ततः शुक्लपक्षे ताभिराप्याय्यमानः क्रमेण वृद्धिमासादयन्नायुष्मान् भवति ॥ ब्रह्म वेदः । ब्राह्मणैः प्रसिद्धैः । ब्राह्मणैर्हि शिष्योपाध्यायक्रमेण धार्यमाणो वेद आयुष्मान् भवति ॥ देवा अमृतेनेति[3] प्रसिद्धार्थः । देवानां ह्यमृतं [4]प्राश्यामृतत्वम् ॥ ऋषयः मरीच्यादयः । व्रतैः चान्द्रायणादिभिः । ऋषीणां हि तपसैव दीर्घायुष्ट्वम् ॥ पितरः अग्निष्वात्तादयः । स्वधाभिः पितृणामन्नैः ॥ यज्ञो दक्षिणाभिरिति प्रसिद्धम् ॥ समुद्रः प्रसिद्धः । स्रवन्तीभिर्नदीभिः । अपरञ्च सर्वं समानम् । वाक्यार्थोऽस्य सुबोधः । वनस्पतीभिरिति अन्येषामपि दृश्यते ( पा ६, ३, १३७ ) इति दीर्घः ॥ १९८-२०६ ॥

कश्यपस्य त्र्यायुषं जमदग्नेस्त्र्यायुषम् ।
यद्देवानां त्र्यायुषं तन्मे अस्तु त्र्यायुषम् ॥ २०७

[ वा स ३, ६२ । का स ३, ७४ ]

त्रीण्यायूंषि समाहृतानि त्र्यायुषम् । आयुःशब्दश्चावस्थावचनः । बाल्ययौवनवार्धकात्मकमवस्थात्रयमित्यर्थः । [5]कश्यपस्य ऋषेः जमदग्नेश्च ऋषेर्देवानां ब्रह्मादीनां यत् त्र्यायुषं तत् मे मम अस्तु[5] । यद्यप्यत्र तन्मे अस्तु इति कर्तृगोचरा आशंसा पठ्यते तथापि कुमारगोचरैव सा बोद्धव्या । तथा च श्रुतिः [ श ब्रा १, ३, १, २६ ]

यां वै कांश्च यज्ञ ऋत्विज आशिषमाशासते यजमानस्यैव सेति ॥ २०७ ॥

---

१ क१—क२- -श्चमावस्यायां ।
२ क२—वनस्पतिं विशति ।
३ क—क१—क२—अमृतेरिति ।
४ क—प्राश्यमेवत्वम् । क२—प्राप्यामृतत्वम् ।
५ क पुस्तके—'अपरञ्च समानम्' इत्येतावन्मात्रम् । घ-पुस्तके तु ग्रन्थभागोऽयं नास्त्येव ।

पुनः पारस्करः [ १, १६, ८-९ ]

स यदि कामयेत सर्वमायुरियादिति वात्सप्रेणैनमभिमृशेत्। दिवस्परी-त्येतस्यानुवाकस्योत्तमामृचं परिशिनष्टि।

तदत्र कुमारस्य सम्पूर्णायुःप्राप्तिकामनया कुमारहृदयं स्पृष्ट्वैतानेकादश मन्त्रान् जपति।

एतेषाञ्च वत्स ऋषिरग्निर्देवता त्रिष्टुप् छन्दश्चयनेऽग्न्युपस्थापने विनियोगः।

**दिवस्परि प्रथमं जज्ञे अग्निरस्मद्द्वितीयं परि जातवेदाः।**
**तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जरते स्वाधीः॥ २०९**

[ ऋ स १०, ४५, १। वा स १२, १८। का स १३, १९ ]

अग्निः दिवः परि आकाशमधिकृत्य प्रथमं जज्ञे जातवान्। जातवेदाः अग्निरेव अस्मत् परि अस्मत्सदृशं पुरुषरूपं विष्णुमधिकृत्य द्वितीयं जज्ञे। अप्सु जलेषु तृतीयं जज्ञे। नृषु मनुष्येषु मनोऽस्येति नृमणाः प्रजापतिः एनम् अग्निम् इन्धानः दीपयन् अजस्रं पुनःपुनः जरते जरयति। किम्भूतः प्रजापतिः— स्वाधीः सु शोभनम् आ आहिता धीः बुद्धिर्यस्य स स्वाधीः॥ २०९॥

**विद्मा ते अग्ने त्रेधा त्रयाणि विद्मा ते धाम विभृता पुरुत्रा।**
**विद्मा ते नाम परमं गुहा यद्विद्मा तमुत्सं यत आजगन्थ॥ २१०**

[ ऋ स १०, ४५, २। वा स १२, १९। का स १३, २० ]

हे अग्ने ते तव त्रेधा त्रिप्रकारं त्रयाणि अग्निवायुसूर्याख्यानि रूपाणि विद्मः जानीमः। किञ्च ते धाम स्थानानि आहवनीयगार्हपत्यदक्षिणाग्निस्वरूपाणि विद्मः। किम्भूतानि—विभृता विभृतानि विशेषेण भृतानि आधारभूतानि। अपि किम्भूतानि—पुरुत्रा पुरु बहु त्रायते इति पुरुत्रं तानि पुरुत्राणि जगद्रक्षा-कारकाणीत्यर्थः। अपि च ते नाम विद्मः परमम् उत्तमम्। न केवलमुत्तममपि तु यद् गुहा गुहायामिव स्थितं गुह्यमिति यावत्। अपि च यतः सकाशात् आजगन्थ आगतोऽसि। तम् उत्सं स्रवद्रूपं जलं विद्म इति। हे अग्ने तव रूपस्थाननामोत्-पत्तिकारणादीनि वयं जानीम इति वाक्यार्थः। अत्र विद्मा इत्याकारः पदे न पठ्यते। धाम इति बहुवचने एकवचनम्। विभृता पुरुत्रा इति विभृतानि पुरुत्राणीत्यत्र निलोपश्छान्दसः। गुहा इति सप्तम्यां प्रथमा। आजगन्थेति गमेर्लिट् थल्। उपदेशेऽत्वतः ( पा ७,२, ६२ ) इतीड्निषेधः॥ २१०॥

**समुद्रे त्वा नृमणा अप्स्वन्तर्नृचक्षा ईधे दिवो अग्न ऊधन् ।**
**तृतीये त्वा रजसि तस्थिवांऽसमपामुपस्थे महिषा अवर्धन्॥२११**

[ ऋ स १०, ४५, ३ । वा स १२, २० । का स १३, २१ । श ब्रा ६, ७, ४, ५ ]

हे अग्ने त्वा त्वां नृमणाः प्रजापतिः ईधे दीपयाञ्चकार। त्वां किम्भूतम्—समुद्रे अप्सु जले अन्तः मध्ये वड़वाग्नित्वेनावस्थितम्। नृमणाः किम्भूतः—नृषु मनुष्येषु चक्षुरस्येति नृचक्षाः। पुनः किम्भूतं त्वाम्—दिवः स्वर्गस्य ऊधन् ऊधसि आपीनस्थाने आदित्यतया स्थितम्। आदित्यो हि पृथिवीगतं रसं रश्मिभिरादाय पुनर्वर्षासु त्यजति। एतावता यत्र स्वर्गप्रदेशे आदित्यस्तिष्ठति तत् स्थानं स्वर्गस्य ऊध इवेत्यूधःशब्देनाभिहितम्। एवं तृतीये रजसि भूमिराकाशं स्वर्गश्चेति गणनक्रमेण तृतीयः स्वर्गो भवति। तृतीये रजसि स्वर्गे लोके अपाम् उपस्थे जलानाम् उत्सङ्गे[1] च तस्थिवांसं त्वा त्वां महिषाः प्राणवायवः अवर्धन् वर्धयाञ्चक्रुः। अत्रोधन्निति ऊधःशब्दात् सप्तम्येकवचनस्य सुपां सुलुगिति (पा ७, १, ३८) लुक्। व्यत्ययो बहुलमिति (पा ६, १, ८५) सकारस्य नकारः। महिषाः प्राणा इत्यत्र प्राणा वै महिषा इति श्रुतिः [ श ब्रा ६, ७, ४, ५ ] प्रमाणम्। समुद्रे वड़वाग्नितया दिवि आदित्यतया स्थितं त्वामग्निं वायवो वर्धयन्तीत्यग्नेः स्तुतिर्वाक्यार्थः ॥ २११ ॥

**अक्रन्ददग्निः स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् ।**
**सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः॥२१२**

[ ऋ स १०, ४५, ४ । वा स १२, ६ । का स १३, ७ ]

अग्निः अक्रन्दत् शब्दं करोति। किञ्च क्षामा क्षमां भूमिं[2] रेरिहत् लेढ़ि आस्वादयतीत्यर्थः। रलयोरेकत्वस्मरणाल्लकारस्य स्थाने रेफः पठ्यते। किं कुर्वन्—वीरुधः ओषधीः समञ्जन् व्याप्नुवन्। अपि च इद्धः सन्धुक्षितः सन् व्यख्यत् विख्यापयति। किम्भूतः—सद्यो जज्ञानः तात्कालिकं जायमानः। हिशब्देंशब्दौ पादपूरणार्थौ। किञ्च रोदसी द्यावापृथिव्यौ अन्तः मध्ये द्यावापृथिव्योर्मध्य इत्यर्थः। भानुना रश्मिना आभाति प्रकाशते। क इव—द्यौरिव। अत्र मन्त्राः क्रोशन्तीतिवत् द्योशब्देन मेघ उच्यते। एवमुक्तं भवति—यथा मेघः स्तनयन् शब्दं कुर्वन् पृथिवीमुदकेन लेढि ओषधीर्व्याप्नोति विख्यापयति भानुना विद्युद्रूपेण प्रकाशयति एवमग्निरपि ॥ २१२ ॥

---

१ क२—त—सन्निधावुत्सङ्गे। २ क—पृथिवीं।

**श्रीणामुदारो धरुणो रयीणां मनीषाणां प्रार्पणः सोमगोपाः।**
**वसुः सूनुः सहसो अप्सु राजा विभात्यग्र उषसामिधानः॥ २१३**

[ ऋ स १०, ४५, ५ । वा स १२, २२ । का स १३, २३ ]

वसुः अग्निः विभाति प्रकाशते। उषसामुषसि [1]प्रत्यूषसमये अग्रे प्रथमम् इधानो दीप्यमानः[2]। प्रत्यूषसमये अग्नीनां प्रादुष्करणं क्रियते। अग्निः किम्भूतः —श्रीणाम् लक्ष्मीणाम् उदार आधाता रयीणां धनानां धरुणः धारयिता मनीषाणां मनोऽभिलषितानां प्रार्पणः प्रार्पयिता। धनमिच्छेद्धुताशनादित्यभिप्रायमेतत्। सोमगोपाः सोमं चन्द्रं गोपायति रक्षतीति गुपू रक्षणे इत्यस्मात् सोमशब्दोपपदादसुन् प्रत्ययः। सहसो बलस्य सूनुः पुत्रः। बलवता मथ्यमानश्चे दुत्पद्यते। अप्सु जलेषु राजा वरुणः। सर्वमेव श्रीणामुदार इत्यादि वसुरित्यस्य विशेषणम्॥ २१३॥

**विश्वस्य केतुर्भुवनस्य गर्भ आ रोदसी अपृणाज्जायमानः।**
**वीडुञ्चिदद्रिमभिनत् परायञ्जना यदग्निमयजन्त पञ्च॥ २१४**

[ ऋ स १०, ४५, ६ । वा स १२, २३ । का स १३, २४ ]

यत् यम् अग्निं पञ्च चत्वारो ब्राह्मणादयः निषादाख्यः [3]सङ्कीर्णजातिश्चेति पञ्च जनाः मनुष्याः अयजन्त पूजितवन्तः। सोऽग्निः विश्वस्य सर्वप्राणिजातस्य केतुः ज्ञाता सर्वसाक्षीत्यर्थः। भुवनस्य भुवनवर्तिनो भूतजातस्य गर्भः अन्तर्वर्ती प्राणवायुः प्राणादिरूपतया। आ इत्युपसर्गोऽपृणादित्यनेन सम्बध्यते। किम्भूतोऽग्निः— रोदसी द्यावापृथिव्यौ आ अपृणात् आपूरितवान् आदित्यतया। जायमान उत्पद्यमानः। किञ्च अद्रिं पर्वतम् अभिनत् विदारितवान्। किम्भूतम्—वीडुं दृढम्। चित्शब्दोऽप्यर्थे। दृढमपीत्यर्थः। किं कुर्वन्—परायन् परागच्छन् तत्र पर्वते पतन्निति यावत्। एतेनाग्निरेवेन्द्र इत्युक्तं भवति। केतुरिति कित ज्ञाने इत्यतो धातोरौणादिकस्तुप्रत्ययः[4]॥ २१४॥

**उशिक् पावको अरतिः सुमेधा मर्तेष्वग्निरमृतो नि धायि।**
**इयर्ति धूममरुषं भरिभ्रदुच्छुक्रेण शोचिषा द्यामिनक्षन्॥ २१५**

[ ऋ स १०, ४५, ७ । तै स ४, २ २, ५—द्यामिनक्षत् । काठ स १६, १०३ ; मै स २, ७, ११२—धूममरुषो। वा स १२, २४ । का स १३, २५ ]

अग्निर्मर्तेषु मनुष्येषु निधायि निहितः। किम्भूतः—उशिक् कान्तः मनोहरः। पावकः पवित्रताकारी। अरतिः अलंमतिः पर्याप्तबुद्धिरित्यर्थः। सुमेधाः

---

[1] क२—प्रभातसमये।
[2] क२—देदीप्यमानः।
[3] क१—पञ्चमजाति॰।
[4] क—क२—औणादिक उप्रत्ययः।

साधुप्रश्नः। अमृतः अमरधर्मा। य एवम्भूतोऽग्निः स धूमम् उदियर्ति ऊर्ध्वं गमयति। उदिति व्यवहितेनात्र सम्बन्धः। किम्भूतं धूमम्—अरुषम् आरोचनं रूपवदित्यर्थः। किं कुर्वन्नग्निः—भरिभ्रत् जगद्धारयन्। अपि च शोचिषा रश्मिना द्याम् आकाशम् इनक्षन् व्याप्नुवन्। किम्भूतेन शोचिषा—शुक्रेण शुक्लवर्णेन। उशिक इति वश कान्तौ इत्यस्माद्धातोरौणादिकः कित्प्रत्ययः[१]। अरतिः अलं मतिरस्य। व्यत्ययो बहुलम् (पा ३, १, ८५) इत्यनुस्वारमकारयोर्लोपः। रलयोरैकत्वस्मरणम्। भरिभ्रदिति भृञः शत्रन्तस्य दाधर्त्यादिसूत्रेण (पा ७, ४, ६५) निपातरूपम्॥ २१५॥

**दृशानो रुक्म उर्व्या व्यद्यौद्दुर्मर्षमायुः श्रिये रुचानः।**
**अग्निरमृतो अभवद्वयोभिर्यदेनं द्यौरजनयत् सुरेताः॥ २१६**

[ऋ स १०, ४५, ८—उर्विया। द्यौरजनत्। वा स १२, २५। का स १३, २६]

अग्निः व्यद्यौत् विद्योतते। कया—उर्व्या महत्या। दीप्त्या इत्यर्थात्। किम्भूतः—दृशानः [२]प्रत्यक्षतो दृश्यमानः। रुक्मः रोचनः रूपवानित्यर्थः। न केवलं विद्योतते किञ्च यस्याग्नेः आयुः जीवनं दुर्मर्षं दुःखेन मृष्यते खण्ड्यते खण्डयितुं न शक्यत इति यावत्। सोऽग्निः अमृतः अमरधर्मा अभवत्। किं कुर्वन्—रुचानः इच्छन्। किमर्थम्[३]—श्रिये लक्ष्म्यै लक्ष्मीं दातुमिच्छन्नित्यर्थः। किञ्च यत् यम् एनम् अपरोक्षनिर्देश्यमादित्यम्। द्यौः आकाशम् अजनयत् जनितवती। किम्भूता द्यौः—सुरेताः शोभनं रेतः शुक्रं यस्याः। शोभनत्वञ्च रेतस एतदेव यत् तेन विश्वविद्योतकारी आदित्यो जनितः। कैरजनयत्—वयोभिः अन्नैः पशुपुरोडाशादिभिः। पश्वादयो ह्यग्नौ हुता आदित्योदयहेतुभावं भजन्त इत्यभिप्रायः। दृशान इति दृश धातोः कर्मणि लटः शानच्। छन्दस्युभयथेति (पा ३, ४, ११७) शानच आर्धधातुकत्वाद् यग् न भवति। द्यौरिति दिवुधातोर्दीव्यतीति क्विप्। दिव्शब्दात् प्रथमैकवचने दिव औदिति (पा ७, १, ८४) वकारस्यौकारः॥ २१६॥

**यस्ते अद्य कृणवद्भद्रशोचेऽपूपं देव घृतवन्तमग्ने।**
**प्र तं नय प्रतरं वस्यो अच्छाभि सुम्नं देवभक्तं यविष्ठ॥ २१७**

[ऋ स १०, ४५, ९। तै स ४, २, २, ८—अच्छाभि द्युम्नं। वा स १२, २६। का स १३, २७]

---

१ क—क२—इक्प्रत्ययः।

२ क२—प्रत्यक्षीभूतः।

३ क२—कस्यै।

हे भद्रशोचे कल्याणरश्मे देव देवनादियुक्त अग्ने यः यजमानः ते तव अद्य इदानीम् अपूपं पुरोडाशं कृणवत् करोति। किम्भूतम्—घृतवन्तं घृतेनोपस्तीर्णाभिघारितम्। यजमानं वस्यः वस्यं[1] वासोचितस्थानं प्रणय प्रणयसि। सिलोपश्छान्दसः। किम्भूतं वस्यम्—प्रतरं प्रकर्षेण [2]तीर्यते गम्यत इति प्रतरम्[2]। प्रकर्षार्थश्चाग्निप्रसादव्यतिरेकेणाप्राप्यत्वम्। अपि किम्भूतम्—अच्छ स्वच्छं निर्मलं निष्पापमित्यर्थः। किञ्च हे यविष्ठ हे युवतम तं यजमानं सुम्नं सुखम् अभि अभिमुखं नय सुम्नाभिमुखं[3] प्रापयेत्यर्थः। किम्भूतं सुम्नम्—देवभक्तं देवैः सेवितम्। हे अग्ने यो यजमानस्तव पुरोडाशं करोति तं यजमानं देवोपभोग्यसुखाभिमुखं कृत्वा त्वदीयप्रसादप्राप्यं स्वर्गं प्रापयेति प्रार्थना वाक्यार्थः। अत्र कृणवद् इति कृवि हिंसाकरणयोरित्यस्य धातोरिकारलोपः। नुमो णत्वम्। लेटस्तिप इतश्च लोपः परस्मैपदेष्विति (पा ३, ४, ९७) इकारलोपः। धिन्विकृण्व्योर चेति (पा ३, १, ८०) मध्ये उप्रत्ययो धातोर्वकारस्याकारश्च। लेटोऽडाटाविति (पा ३, ४, ९४) अडागमः। उकारस्य गुणः। अवादेशः। वस्य इति वसधातोः अमावस्यदन्यतरस्यामिति (पा ३, १, १२२) व्यवस्थितविभाषया केवलादपि धातोर्यता रूपम्। विभक्तिव्यत्ययेन द्वितीयैकवचने प्रथमैकवचनम्। अच्छ इत्यनुस्वारलोपश्छान्दसः॥ २१७॥

**आ तं भज सौश्रवसेष्वग्न उक्थ उक्थ आभज शस्यमाने।**
**प्रियः सूर्ये प्रियो अग्ना भवात्युज्जातेन भिनददुज्जनित्वैः॥ २१८**

[ऋ स १०, ४५, १०। वा स १२, २७। का स १३, २८]

हे अग्ने तम् यजमानं आभज तस्य सन्निहितो भव। त्वयि सन्निहिते किं स्यादित्यपेक्षायामाह—यस्य यजमानस्योक्थे उक्थे स्तोत्रे शस्यमाने प्रशस्यमाने सौश्रवसेषु साधुश्रवणीयेषु स्तोत्रेषु आभज आभजसि आसेवसे सन्निहितो भवसीत्यर्थः। [4]असौ यजमानः सूर्ये सूर्यस्य प्रियः उद्भवाति उत्पद्यते। अग्ना अग्नेः अतिप्रियः[5] उद्भवति[6]। न केवलं जातेन पुत्रेण अपि तु जनित्वैश्च जनिष्यमाणैः [7]पुत्रपौत्रादिभिः उद्भिनद उद्भिनत्ति धर्मार्थकामान्। अस्य पुत्रादयो[8] धर्मार्थकामयुक्ता भवन्तीत्यभिप्रायः। सूर्ये इति सुपां सुपो भवन्तीति षष्ठ्येकवचने

१ क२—नास्ति।
२ क२—तीर्यं गम्यम्।
३ क—सुखाभिमुखं।
४ क—योऽसौ।
५ क—क२—प्रियः।
६ क—ख—ग—उच्चरति।
७ क—पौत्र-प्रपौत्रादिभिः।
८ क—अपि इत्यधिकम्।

सप्तम्येकवचनम्। अग्ना इति [१]षष्ठेकवचने सुपां सुलुगादिवाक्येन[१] (पा ७, १, ३९) विभक्तिलोपः। व्यत्ययेन इकारस्याकारः। उद्भिनददिति भिदिर् विदारणे इत्यस्माद्धातोर्लेटस्तिप इतश्च लोप इतीकारलोपः (पा ३, ४, ९७) लेटोऽडाटावित्यडागमः (पा ३, ४, ९४)। अम्। जनित्वैरिति जनो प्रादुर्भावे इत्यस्मात् क्तवार्थे तवैकेन्केन्यत्वन इति (पा ३, ४, १४) त्वन्प्रत्ययः। इट्। तृतीयाबहुवचनम्॥ २१८॥

**त्वामग्ने यजमाना अनु द्यून् विश्वा वसु दधिरे वार्याणि।**
**त्वया सह द्रविणमिच्छमाना व्रजं गोमन्तमुशिजो वि वव्रुः॥ २१९**

(ऋ स १० ४५, ११। वा स १२, २८। का स १३, २९)

हे अग्ने त्वां यजमाना विश्वा विश्वानि सर्वाणि गो-भू-हिरण्यादीनि[२] वसु वसूनि धनानि दधिरे धारयन्ति। किम्भूतानि—वार्याणि वरणीयानि प्रार्थनीयानि। कथम्—अनुद्यून् अनुदिवसान् प्रत्यहमिति यावत्। किञ्च त्वया सह त्वया सहिता युक्ताः [३]साग्नयः। द्रविणं यज्ञफलं मोक्षरूपम् इच्छमानाः कामयमानाः[४]। व्रजम् व्रज्यतेऽनेनेति व्रजः[५] वर्त्म। तं विवव्रुः[६] विवृतं कृतवन्तः। किम्भूतम्—गोमन्तं रश्मिवन्तमादित्यमित्यर्थः। किम्भूता यजमानाः—उशिजः मेधाविनः ज्ञानिनः। एतनैतदुक्तं भवति—त्वां यजमाना यदा धनादिकमिच्छन्ति तदा तत् प्राप्नुवन्ति यदा मोक्षमिच्छन्ति तदा ज्ञानिनो भूत्वा ज्ञानकर्मसमुच्चयेनादित्यं भित्त्वा मोक्षं प्राप्नुवन्तीति॥ २१९॥

पुनः पारस्करः [१, १६, १०]

प्रतिदिशं पञ्च ब्राह्मणानवस्थाप्य ब्रूयादिममनुप्राणितेति।

ततः कुमारस्यानुप्राणनार्थं पूर्वादिदिक्षु मध्ये च पञ्च ब्राह्मणानवस्थाप्य तेषां प्रेषणा[७] क्रियते अनेन मन्त्रेण

**इममनुप्राणित॥ २२०**

[पा गृ १, १६, १०]

हे विप्रा इत्यध्याहार्यम्। इमं कुमारम् अनुप्राणित अस्यानुप्राणनं कुरुतेत्यर्थः॥ २२०॥

पुनः पारस्करः [१, १६, ११-१५]

पूर्वो ब्रूयात् प्राणेति। व्यानेति दक्षिणः। अपानेत्यपरः। उदानेत्युत्तरः। समानेति पञ्चम उपरिष्टादवेक्षमाणो ब्रूयात्।

---

१ क—सुलुगादिसूत्रेण।
२ क—गोभूमिहिरण्यवस्त्रादीनि।
३ क—क१—साग्नयः।
४ ख—नास्ति।
५ क१—क२—व्रजं।
६ क-ख-च-पुस्तकेष्वित आरभ्य निष्क्रमणान्तो ग्रन्थभागो न दृश्यते।
७ क२—प्रेरणा।

ततः पञ्च ब्राह्मणाः कुमारस्यानुप्राणनं कुर्वन्त्येभिर्मन्त्रैः

**प्राण । व्यान । अपान । उदान । समान ॥ २२१**

[ पा गृ १, १६, ११-१५ ]

एतानि पञ्चापि सम्बोधनपदानि। अनेन सम्बोधनेन प्राणादिपञ्चवायव आहूता अस्मिन् कुमारे स्थिरा[1] भवन्त्वित्यभिप्रायः ॥ २२१ ॥

पुनः पारस्करः [ १, १६, १७ ]

स यस्मिन्देशे जातो भवति तमभिमन्त्रयते वेद त इत्यादि ।

कुमारस्य जन्मस्थानमभिमन्त्रयतेऽनेन

**वेद ते भूमि हृदयं दिवि चन्द्रमसि श्रितम् ।**

**वेदाहं तन्मां तद्विद्यात् पश्येम शरदः शतं जीवेम शरदः**

**शतꣳ शृणुयाम शरदः शतम् ॥ २२२**

[ पा गृ १, १६, १७ । हि गृ २, ३, ८ द्र: ]

हे भूमि ते तव हृदयं वेद जानामि। किम्भूतम्—चन्द्रमसि श्रितं सम्बद्धम्। कुत्र—दिवि आकाशे। यत् तत् हृदयम् अहं वेद तत् मां विद्यात् मामपि जानातीत्यर्थः। [2]पश्येम शरदः शतमित्यादि व्यक्तार्थम्। व्याहृतञ्च गर्भाधाने[2] ( २०७ पृ: ) ॥ २२२ ॥

पारस्करः [ १, १६, १८ ]

अथैनमभिमृशत्यश्मा भवेत्यादि ।

कुमारमभिमृशन्निमं मन्त्रं जपति

**अश्मा भव परशुर्भव हिरण्यमस्तुतं भव ।**

**आत्मा वै पुत्रनामासि स जीव शरदः शतम् ॥ २२३**

[श ब्रा १४, ९, ४, २६ । म ब्रा १, ५, १८—आत्मासि पुत्र मा मृथाः। पा गृ १, १६, १८ । हि गृ २, ३, ३ द्र:]

हे कुमारेति सम्बोधनपदमध्याहार्यम्। त्वम् अश्मा भव प्रस्तर इव दृढाङ्गो भव। किञ्च परशुर्भव कुठार इव विरोधिनां छेदको भव। किञ्च हिरण्यम् अस्तुतम् भव यथा सुवर्णमक्षयं तथा त्वमपि भव। किञ्च त्वं मम आत्मा असि। किम्भूतः—पुत्रनामा मदीयात्मना सह तव पुत्रनामत्वमेव विशेषः। अपरञ्च सर्वं मया सह तव तुल्यमेवेत्यभिप्रायः। किञ्च शरदः शतम् शतं वर्षाणि जीवेति वाक्यार्थः स्फुट एव ॥ २२३ ॥

---

१ क१—स्थिरतरा।

२ क२—शेषं सुगमम्। त—अपरं सुगमम्। क१—व्याहृतञ्च।

[1]ततः पुनः पारस्करः [ १, १६, १८ ]

अथास्य मातरमभिमन्त्रयते इडासीति ।

**इडासि मैत्रावरुणी वीरे वीरमजीजनथाः ।**

**सा त्वं वीरवती भव याऽस्मान् वीरवतोऽकरत् ॥ २२४**

[ श ब्रा १४, ९, ४, २७ । पा गृ १, १६, १९ ]

हे वीरे त्वम् इडा देवमाता असि भवसि । तथा मैत्रावरुणी मित्रावरुण-सुता । वीरम् पुत्रम् अजीजनथाः उत्पादितवती । सा त्वम् एवम्भूता वीरवती वीरमाता भव । तथा अस्मान् वीरवतः पुत्रयुक्तान् अकरत् कृतवती ॥ २२४ ॥[1]

पुनः पारस्करः [ १, १६, २० ]

अथास्यै दक्षिणं स्तनं प्रक्षाल्य प्रयच्छतीमं स्तनमिति ।

ततः कुमारं मातुर्दक्षिणस्तनं प्रक्षाल्य पाययत्यनेन मन्त्रेण

**इमꣳ स्तनमूर्जस्वन्तं धयापां प्रपीनमग्ने सरिरस्य मध्ये ।**

**उत्सं जुषस्व शतधारमर्वन्त् समुद्रियꣳ सदनमा विशस्व ॥२२५**

[ वा स १७, ८७ । का स १८, १ ]

परमेष्ठी ऋषिरग्निर्देवता त्रिष्टुप् छन्दस्त्रयने[2] विनियोगः

हे अग्ने त्वम् इमम् अपरोक्षं स्तनं धय पिब । किम्भूतम्—ऊर्जस्वन्तम् प्राण-हेतुभूतम् । अपाम् दुग्धैः । अप्शब्देन दुग्धमुच्यते साहृश्यात् । प्रपीनं प्रपूरितम् । कुतस्त्यमित्याकाङ्क्षायाम्—सरिरस्य मध्ये । उत्सं स्रवन्तम् । जुषस्व सेवस्व । किम्भूतम्—शतधारं बहुधारम् । हे अर्वन् सर्वतोगत सर्वदेहगत समुद्रियं समुद्र-सम्बन्धि सदनं स्थानम् आविशस्व प्रविश । एतेनैतदुक्तम्—यथा समुद्रस्थो वाड़वाग्निः सर्वानेव जरयति तथा भवानपि यथाप्राप्तमाहारं जरयतु ॥ २२५ ॥

पुनः पारस्करः [ १, १६, २१ ]

यस्ते स्तन इत्युत्तरमेताभ्याम् ।

ततो वामं स्तनं कुमाराय दद्यादनेन मन्त्रद्वयेन । तत्रेमं स्तनमिति व्याहृतम् ।

**यस्ते स्तनः शशयो यो मयोभूर्यो रत्नधा वसुविद्यः सुदत्रः ।**

**येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवेऽकः ॥२२६**

[ ऋ स १, १६४, ४९—द्वितीय-तृतीयपादयोर्विपर्यासो दृश्यते धातवे कः इति पाठान्तरञ्च । वा स का स ३८, ५ ]

---

१ इडासीति मन्त्रो व्याख्यानसहितः क१-क२-पुस्तकयोर्नास्ति । २ क१—यजमानवचने इत्यधिकम् ।

दीर्घतपा ऋषिर्गौर्देवता त्रिष्टुप् छन्दो [१]महावीरे गोस्तनालम्बने[१] विनियोगः।

हे सरस्वति सरस्वतीनदीसदृशि वत्समातः। मातृस्थस्य स्ववद्रूपतया ते तव यः स्तनः शशयः सर्वैरुपभुज्यमानोऽपि सुप्त इवानुद्विग्नः। यः मयोभूः मयः सुखं तस्य भूः स्थानम्। यः रत्नधा रत्नं रमणीयं पयः तस्य धारयिता। वसु बलं[२] विदयति प्रापयति वसुवित्। यः सुदत्रः शोभनदानशीलः। येन स्तनेन विश्वा विश्वानि पुष्यसि पुष्णासि। किम्भूतानि—वार्याणि प्रार्थनीयानि[३]। तम् स्तनम् इह अस्य[४] धातवे पानाय अकः कुरु। हे पुत्रिणि तव यः स्तनः पुत्रेण पीयमानोऽप्यनुद्विग्नः सुखकारी [५]रमणीयरसधारी बलप्रापकः शुभदायी विश्वपोष्टा तं स्तनमस्य कुमारस्य पानाय कुर्विति याच्ञा वाक्यार्थः। अत्र शशय इति शीङ् स्वप्ने इत्यस्माद्धातोर्यङ्लुगन्तात् पचाद्यच्। गुणः। अयादेशः। वर्णव्यत्ययेनाभ्यासस्येकारेऽकारः। अक इति स्नानप्रकरणे अरुं हि राजेत्येत-न्मन्त्रव्याख्याने (८० पृः) साधितम्॥ २२६॥

पुनः पारस्करः [ १, १६, २२ ]

उदपात्रं शिरस्तो निदधात्यापो देवेष्वित्यादि।

ततः सूतिकाशय्याशिरःस्थाने सूतिकारक्षार्थं जलकुम्भं स्थापयत्यनेन मन्त्रेण

**आपो देवेषु जाग्रथ यथा देवेषु जाग्रथ।**

**एवमस्याꣳ सूतिकायाꣳ सपुत्रिकायां जाग्रथ॥ २२७**

[ पा गृ १, १६, २२। हि गृ २, ४, ५ द्र: ]

हे आपः यूयं देवेषु जाग्रथ देवादीनां रक्षायां निद्रालस्यादिमुक्ताः[६] भवथ। यथा देवेषु यूयं जाग्रथ एवमस्यां सूतिकायां प्रसूतायां जाग्रथ। किम्भूतायाम्—सपुत्रिकायाम् पुत्रसहितायाम्। हे आपः यूयं देवेषु जाग्रथेत्यपां स्वरूपमुत्-कीर्त्यास्याः सपुत्राया रक्षणार्थं जाग्रथेति प्रार्थना वाक्यार्थः॥ २२७॥

इति जातकर्म॥

---

१ क१—महावीराद्यन्तयोः शान्तिकरणे।
२ क२—धनं।
३ क२—प्रापणीयानि।
४ क२—रसस्य।
५ क२—रमणीयस्तस्य रसधारी।
६ क१—निद्राद्यालस्यादित्यक्ता।

## अथ सूतिकागारहोमः

तत्र पारस्करः [ १, १६, २३ ]

द्वारदेशे सूतिकाग्निमुपसमाधायोत्थानात् सन्धिवेलयोः फलीकरणमिश्रान् सर्षपानग्नावावपति शण्डा मर्का इत्यादि ।

कुमाररक्षार्थं तण्डूलकणमिश्रं सर्षपाहुतिद्वयं जुहोत्यनेन मन्त्रद्वयेन

**शण्डा मर्का उपवीरः शौण्डिकेय उलूखलः ।**
**मलिम्लुचो द्रोणासश्च्यवनो नश्यतादितः स्वाहा ॥ २२८**

[ पा गृ १, १६, २३ । हि गृ २, ३, ७ द्र.—शण्डो मर्कः । शाण्डीकेर ]

शण्डाभिधानो बालग्रह इतः आहुतः नश्यतात् नष्टो भवतु । एवमेव मर्कादयश्च्यवनान्ताः सप्त बालग्रहाः । नश्यतादिति क्रियापदमष्टभिरेव सह प्रत्येकं सम्बध्यते । अनयाहुत्या शण्डादयोऽष्टौ बालग्रहा नश्यन्त्विति वाक्यार्थः ॥ २२८ ॥

**आलिखन्ननिमिषः किंवदन्त उपश्रुतिर्हर्यक्षः कुम्भी शत्रुः पात्रपाणिर्नृमणिर्हन्त्रीमुखः सर्षपारुणश्च्यवनो नश्यतादितः स्वाहा ॥ २२९**

[ हि गृ २, ३, ७ द्रः । पा गृ १, १६, २३ ]

आलिखन्नित्यादयो बालग्रहा दश । अत्रापि नश्यतादिति क्रियापदं प्रत्येकं दशभिरेव सम्बध्यते । वाक्यार्थश्च तादृश एव ॥ २२९ ॥

इति सूतिकागारमन्त्रव्याख्या ॥

## अथ कुमारस्य बालग्रहोपद्रवशान्तिः

तत्र पारस्करः [ १, १६, २४ ]

यदि कुमार [1]उपद्रवेज्जालेनाच्छाद्योत्तरीयेण[1] वा पिताङ्क आधाय जपति कूर्कुर इत्यादि ।

दशदिनाभ्यन्तरे कुमारस्य बालग्रहोपद्रवं दृष्ट्वा कुमारं जालेनोत्तरीयेण वाच्छादय क्रोडे कृत्वा इमं मन्त्रं जपति ।

**कूर्कुरः सुकूर्कुरः कूर्कुरो बालबन्धनः ।**
**चेच्चेच्छुनक सृज नमस्ते अस्तु सीसरो लपेतापह्वर ॥**

---

१ क१— उपद्रवेज्जालेन प्रच्छाद्योत्तरीयेण । क२—मुपद्रवेज्जालेनावप्लुत्योत्तरीयेण ।

तत् सत्यं यत्ते देवा वरमददुः स त्वं कुमारमेव वावृणीथाः ।
चेच्चेच्छुनक सृज नमस्ते अस्तु सीसरो लपेतापह्वर ॥
तत् सत्यम् यत्ते सरमा माता सीसरः पिता श्यामशबलौ भ्रातरौ ।
चेच्चेच्छुनक सृज नमस्ते अस्तु सीसरो लपेतापह्वर ॥ २३०—२३२

[ हि गृ २, ७, २ द्र: । पा गृ १, १६, २४ । आप म २, १६, १ द्र: ]

कूर्कुरादीनि त्रीणि नामानि । बालं कुमारं बध्नाति गृह्णातीति बालबन्धनः कुमारग्रहस्त्रिभिरेव कूर्कुरादिभिः सह प्रत्येकं सम्बध्यते चेच्चेदिति वीप्साया दर्शनात् । तेन कूर्कुरश्चेद्बालबन्धनः सुकूर्कुरश्चेद्बालबन्धनः कूर्कुरश्चेद् बालबन्धन इति । एतेषां मध्ये यदि कश्चिद्बालबन्धन आस्ते तदा हे शुनक ते तव नमः अस्तु । त्वं सृज कुमारं त्यजेतत्यर्थः । हे शुनकेति कूर्कुरादीनां त्रयाणामेव साधारणमेकं सम्बोधनपदम् । किञ्च सीसरः तेषामेव पिता लपेत वदति । किं वदति—अपह्वर अपगतकौटिल्यो भव । कूर्कुरादिनामकबालग्रहत्रयमध्ये यदि कश्चिदत्रास्ति तदाऽयं मदीयनमस्कारेण पूजितः पितुश्च सीसरस्य वचसा एनं कुमारं तत्यजत्विति प्रार्थना वाक्यार्थः ॥ २३० ॥

हे शुनक यत् देवा ब्रह्मादयः ते तव वरं प्रार्थितम् अददुः दत्तवन्तः । स पूर्वोक्तरूपः त्वम् कुमारमेव बालमेव वरम् अवृणीथाः वृतवानसि । चेच्चेदिति वीप्सायाम् । अत्रापि देवैर्वरदानं त्वया च वरत्वेन कुमारस्य प्रार्थनमित्युभयेन सह तत् सत्यम् इत्यस्य सम्बन्धो विवक्षितः । यद्यपि तदुभयं सत्यं तथापि ते नमोऽस्तु । सृज सीसरो लपेतापह्वरेति पूर्ववत् । यद्यपि त्वया देवेभ्यः कुमारो वरत्वेन प्रार्थितः तैश्च दत्तस्तथापि मम नमस्कारेण तुष्टः सन् पितृवाक्येन चैनं त्यजेति प्रार्थना वाक्यार्थः ॥ २३१ ॥

हे शुनक यत् ते तव सरमा शुनी माता सीसरः पिता श्यामशबलौ भ्रातरौ तत् चेच्चेत् सत्यम् । अत्रापि वीप्साप्रयोजनं तदेव । तथापि ते तुभ्यं नमोऽस्तु । सृज सीसरो लपेताऽपह्वरेति पूर्ववदेव । यद्यपि तव माता सरमा सीसरः पिता भ्रातरौ श्यामशबलौ एतत् सत्यमेव । तथापि मम नमस्कारेण तुष्टः पितृवाक्येन चैनं कुमारं त्यजेति प्रार्थना । अपह्वरेति ह्वृ कौटिल्ये इत्यस्य [1]धातोरपपूर्वस्य लोट्सिपि[1] रूपम् ॥ २३२ ॥

---

१ क१—त—धातोरपपूर्वेण लोट् अपि ।

पुनः पारस्करः [ १, १६, २५ ]

अभिमृशति न नामयतीत्यादि ।

**न नामयति न रुदति न हृष्यति न ग्लायति यत्र वयं वदामो यत्र चाभिमृशामसि ॥ २३३**

[ आप म २, १३, ५ द्र: । हि गृ २, ४, ५ द्र: । पा गृ १. १६, २५ ]

यत्र कुमारि वयं वदामः । किं वदामः—रक्षामन्त्रमिति साकाङ्क्षत्वात् प्रकृतत्वाद् योग्यत्वाच्च बोद्धव्यम् । यत्र च वयम् अभिमृशामसि अभि सर्वतोभावेन यत्र स्पर्शनं[१] कुर्मः । स कुमारो न नामयति अङ्गनमनं न करोति कुब्जभङ्गादि न भवतीत्यर्थः । न रुदति रोदनपीड़ायुक्तो न भवति । न हृष्यति हर्षपीड़ायुक्तो न भवति । न ग्लायति न ग्लानियुक्तो भवति ॥ २३३ ॥

इति बालग्रहोपद्रवशान्तिः ॥

समाप्तं जातकर्म ॥

नामकर्मणि तु वैदिकमन्त्रैरनुष्ठानं पारस्करेण ( १, १७, १-४ ) नोपदर्शितम् । अतस्तदीयव्याख्यानमस्माभिरपि न कृतम् ॥

## अथ निष्क्रमणम्

तत्र निष्क्रमणे विशेषफलस्याश्रवणाद् याज्ञवल्क्योक्तबीजगर्भसमुत्पन्नपापक्षय एव फलं बोद्धव्यम्[१] । यथा गर्भाधानादिसंस्कारानभिधायाह याज्ञवल्क्यः [१, १३]

एवमेनः शमं[२] याति बीजगर्भसमुद्भवम् ।

पारस्करः [ १, १८, ६ ]

सूर्यमुदीक्षयति तच्चक्षुरिति ।

तत्र कुमारं सूर्यं दर्शयत्यनेन मन्त्रेण

**तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् ।**
**पश्येम शरदः शतं जीवेम शरदः शतꣳ शृणुयाम शरदः शतम् ॥ २३४**

[ ऋ स ७, ६६, १६ द्र: । वा स ३६, २४ । का स ३६, २४ ]

---

१ क१—दर्शनं । क२—प्रशमं । २ प—बाधाम् । ३ क१—क्षयं ।

इति इष्टे मा इत्यादिकण्डिकासु ( काण्वसंहिता-षट्त्रिंशाध्याये ) प्रकृतत्वात्तदित्यनेनादित्यबिम्बं परामृश्यते। तत् आदित्यबिम्बं चक्षुः त्रैलोक्यस्य चक्षुर्भूतम्। यथा चक्षुषा विना चाक्षुषं किञ्चिन्न प्रकाशते तथानेनापि विना न प्रकाशते। यतः किम्भूतम्—देवहितं देवानां हितम्। अनुदितेऽस्मिन् दैवं कर्म न क्रियते यतः। पुनः किम्भूतम्—पुरस्ताद् उच्चरत् प्राच्यां दिशि ऊर्ध्वं गच्छत्। अपि किम्भूतम्—शुक्रम शुक्लं निष्पापम्। एवमादित्यं स्तुत्वा वयं पश्येम शरदः शतं जीवेम शरदः शतं शृणुयाम शरदः शतम् इति व्यक्तार्थमेव। आदित्यं स्तुत्वा वयमविकलेन्द्रियाः शतं वर्षाणि जीवामेत्याशंसा वाक्यार्थः॥ २३४॥

ततः सूर्यायार्घं दद्यादनेन मन्त्रेण

**आकृष्णेन रजसा··· ।**

व्याख्यानादिकमादित्यपूजायामेव लिखितमतस्तत्रैवानुसन्धेयम् (१२५ पृ:)।

इति निष्क्रमणम्॥

## अथान्नप्राशनम्

अस्यापि मनुयाज्ञवल्क्योक्तबीजगर्भोद्भवपापक्षय एव फलम्। यथा रेतोरक्तगर्भोपघातः पञ्चगुणो जातकर्मणा प्रथममपोहतीत्यनुवृत्तौ हारीतः

प्राशनेन तृतीयम्।

तथा गर्भाधानाद्यष्टसंस्काराणां प्रत्येकं फलमभिधाय हारीत एव पुनराह

एतैरष्टभिर्गर्भसंस्कारैर्गर्भोपघातात् पूतो भवति।

तत्रान्नप्राशने पारस्करः [ १, १९, २ ]

[1]आघारावाज्यभागौ हुत्वाज्याहुती[1] जुहोति देवीं वाचमित्यादि वाजो नोऽद्येति च द्वितीयामित्यन्तम्।

**देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति।**
**सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुप सुष्टुतैतु स्वाहा॥ २३५**

[ ऋ सं ८, १००, ११। पा गृ १, १९, २ ]

देवा ब्रह्मादयो वाचं वाणीम् अजनयन्त उत्पादितवन्तः। किम्भूताम्—देवीम् कान्तिगुणयुक्ताम्। ताम् वाचम्। पशवः वदन्ति। किम्भूताः पशवः—

१ पारस्करे तु—स्थालीपाक अपयित्वाज्यभागाविष्ठाज्याहुती। त—°ज्याहुती।

विश्वरूपा: विश्वं मानुषादि रूपं येषाम्। सा वाक् धेनु: धेनुर्भूत्वा अस्मान् उपैतु उपगच्छतु। उपेति व्यवहितमेत्वित्यनेन सम्बध्यते। सा कथं धेनुर्भवतीत्याकाङ्क्षायां हेतुगर्भं विशेषणमाह—न: अस्माकम् ऊर्जं सामर्थ्यं दुहाना प्रपूरयन्तो यत:। किम्भूतम्—मन्द्रेषम् मन्द्रो गम्भीर: अव्यक्त इति यावत् तस्य इषं गमकं ज्ञापकमित्यर्थ:। अव्यक्तपरोक्षोऽप्यर्थो[1] येनावगम्यते तत् सामर्थ्यमस्माकं पूरयन्ती सा वाणीत्यर्थ:। किम्भूता—सुष्टुता सुष्ठु स्तुता। या वाक् प्रथमतो देवैर्जनिता ततो मानुषादिभि: सर्वैरेवोच्यत इति वाचं स्तुत्वा सास्माकं सामर्थ्यं जनयन्तो अस्मानुपगच्छत्वित्याशंसा वाक्यार्थ:॥ २३५॥

द्वितीयाहुतिमन्त्रो यथा

**वाजो नो अद्य प्रसुवाति दानं वाजो देवाँ ऋतुभि: कल्पयाति।**
**वाजो हि मा सर्ववीरञ्चकार सर्वा आशा वाजपतिर्भवेयम्॥ २३६**

[ वा स १८, ३३—सर्ववीरञ्जजान विश्वा आशा वाजपतिर्जयेयम्। का स २०, ४ ]

वाज: अन्नम्। न: अस्माकम् अद्य अन्नप्राशनसमये दानम् होमरूपं प्रसुवाति अभ्यनुजानातु। प्रपूर्व: सुवतिरभ्यनुज्ञाने वर्तत इत्युवटेन[2] लिखितम्। किञ्च वाज: देवान् इन्द्रादीन्[3] ऋतुभि: समयविशेषै: कल्पयाति योजयतु। अस्मिन् कर्मणि हुतेनान्नेन देवाश्चिरकालं वर्तयन्त्वित्यर्थ:[4]। वाज: हि यत: कारणात् मा मां सर्ववीरम् सर्वत्र कार्ये वीरं क्षमं चकार कृतवान् अत: कारणात् वाजपति: अन्नस्येश्वरोऽहं सर्वा आशा: प्रत्याशा: भवेयम्। अन्नान्नमस्माकम्[5] अन्नप्राशनहोममभ्यनुजानातु। अस्मिन् कर्मणि हुतेनान्नेन देवाश्चिरकालं वर्तन्ताम्[6]। अन्नेन सर्वत्र क्षम:[7] कृतोऽहमन्नेश्वरो भूत्वा सर्वा: प्रत्याशा जयेयमित्याशंसा वाक्यार्थ:। प्रसुवाति कल्पयाति इति द्वयं लेट्प्रत्ययेन रूपम्॥ २३६॥

तत: स्थालीपाकेनाहुतिचतुष्टयं जुहोति। यथा पारस्कर: [ १, १९, ४ ]

स्थालीपाकस्य जुहोति प्राणेनेत्यादि।

**प्राणेनान्नमशीय स्वाहा॥ अपानेन गन्धानशीय स्वाहा॥**
**चक्षुषा रूपाण्यशीय स्वाहा॥ श्रोत्रेण यशोऽशीय स्वाहा॥२३७-२४०**

[ पा गृ १, १९, ४ ]

---

१ क—°व्यक्तो। त—°व्यर्थो।
२ उवटकृतं शुक्लयजुर्मन्त्रभाष्यं द्रष्टव्यम् ( १, १०—'प्रसवे अभ्यनुज्ञायाम्' तथा १८, ३३—'प्रसुवाति अभ्यनुजानातु' )
३ प—देवानिन्द्रियादीन्।
४ त—वर्तन्तामित्यर्थ:।
५ क—°न्नमस्कारकम्।
६ प—वर्तयन्त।
७ प—क्षेम:।
८ प—कृतो महानीश्वरो।

प्राणेन प्राणवायुना अन्नम् अदनीयम् अशीय भुनज्मि। अपानेन अपान-वायुना गन्धान् अशीय। चक्षुषा चक्षुरिन्द्रियेण रूपाणि शुक्लादीनि अशीय। श्रोत्रेण कर्णेन्द्रियेण यशः कीर्तिम् अशीय[1]। अन्नगन्धरूपयशसामशनमुपभोगो ऽनुभव[2] इति यावत्। अनेनाहुतिचतुष्टयेन [3]चक्षुरादीन्द्रियोपभोग्यान् विषयाननु-भवामीत्याशंसा[3] वाक्यार्थः। अत्राशीयेत्युत्तमपुरुषप्रयोगात् कर्तृगोचराशंसा यद्यपि दृश्यते तथापि कुमारगोचरैव बोद्धव्या। यथा श्रुतिः [ श ब्रा १, ३, १, २६ ]

यां वै काञ्च यज्ञ ऋत्विज आशिषमाशासते यजमानस्यैव सेति ॥ २३७-२४० ॥

इत्यन्नप्राशनम् ॥

## अथ चूडाकरणम्

अस्यापि मनु-याज्ञवल्क्योक्तं बीजगर्भोद्भवपापक्षय एव फलम्। तथा रेतोरक्तगर्भोपघातः पञ्चगुणो जातकर्मणा प्रथममपोहतीत्यनुवृत्तौ हारीतः—

चूडाकरणेन चतुर्थम्।

तथा गर्भाधानाद्यष्टसंस्काराणां प्रत्येकं फलमभिधाय हारीतः एव पुनराह—

एतैरष्टभिर्गर्भसंस्कारैर्गर्भोपघातात् पूतो भवति।

तत्र चूडाकरणे परिसमूहनादि ब्रह्मदक्षिणादानान्तं होमकर्म समाप्य शीतलजले उष्णजलं क्षिपेत्। यथा पारस्करः [ २, १, ६ ]

शीतास्वप्सूष्णा आसिञ्चत्युष्णेन वाय उदकेनेत्यादि।

**उष्णेन वाय उदकेनेह्यदिते केशान् वप ॥ २४१**

[ अ स ६, ६८, १ द्र: । म ब्रा १, ६, २ द्र: । पा गृ २, १, ६ ]

हे वायो। वायुसम्बोधनेनात्र कार्ये कारणोपचाराज्जलं सम्बोधितम्। किम्भूत—अदिते अखण्डितशीत त्वम् उष्णेन उदकेन इहि सङ्गतो भव। सङ्गत्य च केशान् वप छिन्धि केशच्छेदनार्थं शीतोष्णजलयोरत्र सङ्गतिरस्त्विति वाक्यार्थः। अदित इति दो अवखण्डने इत्यस्य धातोः क्तिन्प्रत्ययेन नञ्पूर्वेण रूपम्। न विद्यते दितिः खण्डनमस्येत्यदितिः ॥ २४१ ॥

---

१ प—भुञ्ज्मीति सर्वत्र बोद्धव्यमित्यधिकम्।

२ क—°गन्धरूपरसस्पर्शनमुपभोगोनुभवति।

३ क—चतुरादीन्द्रियोपभोगाननुभवामी°।

प—चक्षुरादीन्द्रियैर्यज्ञान् विषयाननुभवामी°।

तेनोष्णजलमिश्रितजलेन दक्षिणं शिरः पार्श्वमनेन मन्त्रेण तेमयति[1]। यथा पारस्करः [ २, १, ८ ]

अथास्य दक्षिणं गोदानमुन्दति सवित्रेत्यादि।

**सवित्रा प्रसूता दैव्य आप उन्दन्तु ते तनूम्।**
**दीर्घायुत्वाय वर्चसे ॥ २४२**

[ का स ३, ७३ ]

आपः ते तव कुमारस्य तनूम् देहावयवम् उन्दन्तु क्लेदयन्तु। किम्भूताः—सवित्रा आदित्येन प्रसूताः जनिताः। दैव्यः दिवि आकाशे उत्पन्नाः। किमर्थमुन्दन्तु—दीर्घायुत्वाय[2]। उकारान्तोऽयमायुश्शब्दः[3]। वर्चसे तेजसे च ॥ २४२ ॥ ततः केशेषु कुशाननेन मन्त्रेण योजयति। यथा पारस्करः [ २, १, १० ]

कुशतरुणान्यन्तर्दधात्योषध इति।

**ओषधे त्रायस्व ॥ स्वधिते मैनꣳ हिꣳसीः ॥ २४३-२४४**

[ वा स ५, ४२, ६, १५। का स ५, ५४, ६, २० ]

हे ओषधे कुश कुमारमेनं त्रायस्व रक्ष। अत्र एनमिति मन्त्रस्य द्वितीयपदे श्रूयते। तदेव कर्मतया बोद्धव्यं साकाङ्क्षत्वाद् योग्यत्वाच्च ॥

हे स्वधिते वज्र एनं कुमारं मा हिंसीः। अस्य कुमारस्य हिंसां मा कुर्वित्यर्थः॥ मन्त्रद्वयस्य मिलितत्वपक्षे कुशः क्षतरक्षमेनं कुमारं वज्रो मा हिनस्त्विति वाक्यार्थः ॥ २४३-२४४ ॥

ततस्ताम्रक्षुरग्रहणे पारस्करः [२, १, ११] शिवो नामेति लोहक्षुरमादायेति।

**शिवो नामासि स्वधितिस्ते पिता नमस्ते अस्तु मा मा हिꣳसी॥२४५**

[ वा स ३, ६३ ]

[4]कर्मार्थमुपकल्पितः क्षुरोऽत्र सम्बोध्यत्वेन बोद्धव्यः। हे क्षुर शिवो नामासि शिवः कल्याणं तदभिधानोऽसि। शिव इति तव नामेत्यर्थः। किञ्च ते तव स्वधितिः वज्रः पिता वज्रतस्तवोत्पत्तिरित्यर्थः। एवम्भूताय ते तुभ्यम् नमः अस्तु। मा मां मा हिंसीः मा व्यथय। त्वं कल्याणनामा वज्रत उत्पन्न इति क्षुरं स्तुत्वा नमस्तेऽस्त्विति नमस्कृत्य मा मां व्यथयेति याच्ञा वाक्यार्थः। अत्र यद्यपि मा मा हिंसीरिति कर्तृविषयिणी आशंसा श्रूयते तथापि कुमारविषयिण्येव। यथा श्रुतिः [ श ब्रा १, ३, १, २६ ]

यां वै काञ्च यज्ञ ऋत्विज आशिषमाशासते यजमानस्यैव सेति ॥ २४५ ॥

---

१ ङ—छ—तेमयेदिति। त—उन्दति। प—नयति।
२ क—क१—क२—दीर्घायुष्ट्वाय।
३ क—क१—क२—नास्ति।
४ ङ—क्षेमार्थं। छ—चमार्थे।

ततस्तान्क्षुरस्य केशेषु संलागनें[1] पारस्करः [ २, १, ११ ]

निवर्तयामीत्यादि ।

**निवर्तयाम्यायुषेऽन्नाद्याय प्रजननाय रायस्पोषाय सुप्रजा-स्त्वाय सुवीर्याय ॥ २४६**

[ वा स ३, ६३ ]

निवर्तयामि संलागयामि[2] निपूर्वो वर्ततिः संलागने[3] वर्तते इति भाष्यकृता[4] लिखितत्वात् । एतच्च क्रियापदं कर्तृसापेक्षं[5] कर्मसापेक्षं[6] च । ततश्चाहमिति कर्ता क्षुरमिति च कर्मात्र बोद्धव्यम्[7] । किमर्थं [8]क्षुरसंलागनमित्याकाङ्क्षायामाह—आयुषे जीवनाय । तथा अन्नाद्याय अन्नञ्च तदाद्यं भक्ष्यञ्चेति अन्नाद्यम् तदर्थम् । तथा प्रजननाय प्रजननं प्रसवशक्तिस्तदथम् । तथा रायो धनस्य पोषाय पुष्ट्यर्थम् । तथा सुप्रजास्त्वाय शोभनसन्ततिमत्त्वार्थम् । तथा सुवीर्याय उत्कृष्टवीर्यवत्त्वार्थञ्च । अनेन क्षुरसंलागनकर्मणा[9] अस्य कुमारस्यान्नादीनि भवन्त्वित्याशंसा वाक्यार्थः । सुप्रजास्त्वायेति पृषोदरादित्वाद् वर्णागमलक्षणेनाकारश्छान्दसः ॥ २४६ ॥

ततस्तूष्णीं लौहक्षुरमादाय सकुशान् केशान् छिन्द्यात् । यथा पारस्करः [२, १, ११]

प्रवपति येनावपत् सवितेति ।

**येनावपत् सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान् ।**
**तेन ब्रह्मणो वपतीदमस्यायुष्यं जरदष्टिर्यथाऽसत् ॥ २४७**

[ अ स ६, ६८, ३ द्र: । तै ब्रा २, ७, १७, २ द्र: । आपम २, १, ३ । लौ गृ ४०, ११ । पा गृ २, १, ११ । —तेन ब्रह्मणो वपतेद° । मा गृ १, २१, ६—वरुणस्य केशान् । तेन ब्राह्मणो वपत्वायुष्मानयं जरदष्टिरस्तु ]

---

१ ङ—सन्यासने । छ— सन्यासे । प—सन्नापने ।

२ ङ—छ—संन्यासयामि । सलासयामि ।

३ ङ—छ—सन्यास एव । संलासने ।

४ 'भाष्यकृते'त्यत्र क का१-व-पुस्तकेषु 'कर्कभाष्यकृते'ति पाठान्तरं गृहीतं तथा हलायुधमत्सरशोऽनुवर्तयता शत्रुघ्नेन मन्त्रार्थदीपिकायां निवर्तयामीत्यस्य व्याख्याने ( १४५ पृ: ) 'कर्कभाष्य'मेव नामतः स्मृतम् । अतो भाष्यकृत्पदेन कात्यायनश्रौतसूत्र-पारस्करगृह्यसूत्रयोर्भाष्यकृत् कर्क उद्दिष्ट इति प्रतीयते । परन्त्वत्र 'लौहक्षुरमादाय निवर्तयामीति वपती'ति श्रौतसूत्रभाष्ये ( का श्रौ ५, २, १७ ) कर्केण नि-पूर्वं वर्ततिमधिकृत्य न किमप्युक्तम् गृह्यसूत्रभाष्ये च (पा गृ २, १, ११) 'प्रपूर्वो वपतिः सलागने' इत्यन्यदेवोक्तम् । उवटीय-मन्त्रभाष्ये तु (वा स ३, ६३) 'निवर्तयामी'त्यस्य व्याख्यायां 'नि-पूर्वो वपतिरिह मुण्डनार्थं' इत्येवमुपलभ्यते मुद्रापिता पङ्क्तिः । नास्ति पुनरिह मन्त्रे कुत्रापि नि-पूर्वो वपतिः । तत्तत्र नि-पूर्वो वर्ततिरिति पाठो भवेद्वा ? हलायुधस्तावन्नि-पूर्वस्य वर्ततेः प्र-पूर्वस्य च वपतेः समानार्थतामुद्दिशति ।

५ ङ—छ—प—°साकाङ्क्षम् ।

६ ङ—छ—प—कर्मसाकाङ्क्षं ।

७ क—का२—विज्ञेयम् ।

८ ङ—छ—क्षुरसंन्यसनमित्या° ।
प—क्षुरं सलासयामीत्या° ।

९ ङ—छ—क्षुरसंन्यसनकर्मणा ।
प—क्षुरसंलासककर्मणा ।

हे कुमार सविता आदित्यः येन क्षुरेण सोमस्य अवपत् मुण्डितवान् अर्थात् केशानिति। किम्भूतस्य सोमस्य—राज्ञः। न केवलं सोमस्य वरुणस्य च। किम्भूत आदित्यः—विद्वान् वेदवित्। तेन क्षुरेण ब्रह्मणो ब्रह्मा वपति मुण्डयति। कथम्—यथा इदं चूड़ाकर्म अस्य तव आयुष्यम् असत् भूयात्। किम्भूतमायुष्यम्—जरदष्टिः जरद्वार्धक्यमश्नुते व्याप्नोतीति जरदष्टिः। वार्धक्यपर्यन्तमस्यायुर्यथा स्यादित्यर्थः। [1]यच्चूड़ाकर्मादित्येन वेदविदा सोमवरुणयोः कृतं तत्तव[2] ब्रह्मा करोतीति चूड़ाकर्म सुत्वा [3]तत्तवायुष्यं भूयादिति वाक्यार्थः। ब्रह्मण इति प्रथमैकवचनस्थाने षष्ठ्येकवचनम्। जरदष्टिरित्यजहल्लिङ्गमेव ॥ २४७ ॥

ततः पश्चात् पार्श्वकेशांश्छिन्द्यात्। यथा पारस्करः [ पा गृ २, १, १५ ]

अथ पश्चात् त्र्यायुषमिति।

**कश्यपस्य त्र्यायुषं जमदग्नेस्त्र्यायुषम्।**

**यद्देवानां त्र्यायुषं तन्मे अस्तु त्र्यायुषम् ॥ २४८**

[ वा स ३, ६२। का स ३, ७४ ]

अस्य मन्त्रस्य व्याख्यादि जातकर्मण्यनुसन्धेयम् ( २१८ पृः ) ॥ २४८ ॥

ततो वामपार्श्वकेशशातने पारस्करः [ २, १, १६ ]

अथोत्तरतो येन भूरिश्चरेत्यादि।

**येन भूरिश्चरा दिवं ज्योक् च पश्चाधिसूर्यम्[4]।**

**तेन ते वपामि ब्रह्मणा जीवातवे जीवनाय सुश्लोक्याय स्वस्तये ॥ २४९**

[ पा गृ २, १, १६। कौ गृ ४०, ११ द्रः—येन भूयश्च रात्र्यां ज्योक् पश्चा च। आश्व गृ १, १७, १२ द्रः। आपम २, १, ५ द्रः—येन भूयश्चरात्ययं ज्योक् च पश्याति सूर्यम् ]

येन क्षुरेण साधनभूतेन भूरिश्चन्द्रमाः। किम्भूतः—चराः भ्रमणशीलः। दिवं ज्योक् च स्वर्गे सङ्गतः समभवत्। यश्च पश्चा[5] पश्चात् अधिसूर्यम् सूर्ये ज्योक्। स एव चन्द्रमाः सूर्ये सङ्गतोऽभूत्। तेन क्षुरेण ते तव वपामि क्षौरयामि। कस्मै फलायेत्याकाङ्क्षायामाह—ब्रह्मणा ब्रह्मणे वेदाय वेदलाभार्थमिति यावत्। न केवलं वेदलाभार्थं जीवातवे जीवनौषधलाभार्थं जीवनोपायप्राप्त्यर्थञ्चेत्यर्थः। जीवनाय चिरकालजीवनार्थं च। सुश्लोक्याय सु शोभनं श्लोक्यं यशः तदीयलाभार्थं

---

१ प—यथा चूड़ाकर्म।

२ प—तवत्तव। क—तत्ते।

३ प—तवत्तवायुष्यं।

४ मुद्रापिते पारस्करगृह्यसूत्रे पश्चाच्चि सूर्यमिति मानवगृह्ये ( १, २१, ६) च पश्यति सूर्यमिति पाठाः।

५ क—यश्च। क२—यश्च। क१—ट—नास्ति।

च। स्वस्तये कल्याणलाभार्थञ्च। चरा इति चर गत्यर्थ इत्यस्माच्चरेरसुन्। स्वस्तय इति सर्वे विधयश्छन्दसि विकल्प्यन्त इति वचनाद् विभक्तेरलुक्॥ २४९॥

ततो दक्षिणावर्तेन लौहक्षुरं शिरसि वारत्रयं भ्रामयेत्।

यथा पारस्करः [ २, १, १७ ]

त्रिः क्षुरेण शिरः प्रदक्षिणं परिहरति समुखं केशान्ते यत् क्षुरेणेत्यादि।

**यत् क्षुरेण मज्जयता सुपेशसा वप्त्वा वा वपति केशांश्छिन्धि शिरो मास्यायुः प्रमोषीः॥ २५०**

[ ऋ स ८, २, १७ द्रः—क्षुरेण मर्चयता सुतेजसा वप्ता वपसि केशश्मश्रु । पा ग २, १, १८। लौ गृ ४०, ११। मा गृ १, २१, ७—क्षुरेण वर्तयता सुतेजसा वप्तर्वपसि केशान् शुन्धि ]

अस्य कुमारस्य यत् क्षुरेण वप्ता वा वपति वपसि[1] एतस्य कुमारस्य यत् क्षौरं समाप्य पुनर्वारत्रयं क्षौरं भ्रामयसि[2]। तत् तेन पुनः पुनः क्षौरेणाप्यस्य केशान् छिन्धि छेदय। मा शिरः। अस्य शिरश्छेदनं मा कुरु। अस्य मा आयुः प्रमोषीः आयुःखण्डनं माऽस्य कुरु[3]। किम्भूतेन क्षुरेण—मज्जयता शोधयता शिरो निष्कलुषं कुर्वतेति यावत्। पुनः किम्भूतेन—सुपेशसा शोभनावयवेन। वपतीति [4]मध्यमपुरुषैकवचनस्थाने तिङां तिङो भवन्तीति प्रथमपुरुषैकवचनम्। प्रमोषीरिति मुष स्तेये इत्यस्य धातो लुङ्मध्यमपुरुषैकवचनम्। मज्जयतेति टुमस्जो शुद्धौ इत्यस्माद्धातोर्णिजन्ताच्छत्रन्तात्तृतीयैकवचनम्। वप्ता वेति वाशब्दोऽत्र समुच्चयवचनार्थः॥ २५०॥

इति चूडाकरणम्॥

## अथोपनयनम्

तत्र पारस्करः [ २, २, ६ ]

ब्रह्मचर्यमागामिति वाचयति ब्रह्मचार्यसानीति च।

**ब्रह्मचर्यमागाम्॥ ब्रह्मचार्यसानि॥ २५१-२५२**

[ श ब्रा ११, ५, ४, १। पा ग २, २, ६ ]

हे आचार्य अहं ब्रह्मचर्यं वेदाध्ययनार्थं व्रतम् आगाम् आगतवानस्मि॥
हे आचार्य अहं ब्रह्मचारी असानि भवानि॥ २५१-२५२॥

---

१ क२—वपामि।
२ क२—भ्रामयामि।
३ क१—त—आयुष्यं कुरु इत्यधिकम्।
४ क२—उत्तमपुरुषैकवचनस्थाने।

तत आचार्योऽग्निस्थापनादिकं कृत्वा माणवकं शाणाद्येकतमं वस्त्रं परिधापयति। यथा पारस्करः [ २, २, ७ ]

अथैनं वासः परिधापयति येनेन्द्रायेत्यादि।

**येनेन्द्राय बृहस्पतिर्वासः पर्यदधादमृतम्।**
**तेन त्वा परिदधाम्यायुषे दीर्घायुत्वाय बलाय वर्चसे॥ २५३**

[ पा गृ २, २ ७ ]

बृहस्पतिः देवानामाचार्यो येन [1]विधानेनेन्द्राय इन्द्रं वासो वस्त्रं पर्यदधात् परिधापितवान्। किम्भूतं वासः—अमृतम् अहतम्। तेन विधानेन[1] त्वा त्वां परिदधामि परिधापयामि। वास इति पूर्वोक्तमेव योज्यम्। किमर्थम्—आयुषे जीवनाय दीर्घायुत्वाय चिरकालजीवित्वाय बलाय सामर्थ्याय वर्चसे तेजसे च। वाक्यार्थः स्फुट एव। इन्द्रायेति द्वितीयार्थे चतुर्थी। पर्यदधात् परिदधामीति इयमपि णिजन्तम्॥२५३॥
तदनु[2] मौञ्ज्याद्यन्यतमां मेखलां बध्नीयात्। तथा च पारस्करः [२, २,८ ]

मेखलां बध्नीत इयं दुरुक्तं परिबाधमानेत्यादि।

**इयं दुरुक्तं परिबाधमाना वर्णं पवित्रं पुनती म आगात्।**
**प्राणापानाभ्यां बलमादधाना स्वसा देवी सुभगा मेखलेयम्॥ २५४**

[ पा गृ २, २, ८ ]

इयं मेखला आगात् आगतवती। किं कुर्वाणा—मे मम दुरुक्तम् अनुपनीत इति दुर्वचनदोषं परिबाधमाना सर्वतोभावेन खण्डयन्ती। अत एव देवी स्तुत्यादिविषया। किञ्च पवित्रम् उत्कृष्टं वर्णं द्विजातिं पुनती पावयन्ती। ईदृशो इयं मेखला स्वसा अस्तु भगिनीव नित्यमभ्युदयैषिणी भवतु। अस्तु इत्यध्याहार्यम्। किम्भूता—प्राणापानाभ्यां बलं सामर्थ्यम् आदधाना प्राणापानयोर्बलमर्पयन्ती। पुनः किम्भूता—सुभगा अकर्कशा सुखस्पर्शेति यावत्॥ २५४॥

ततो यज्ञोपवीतत्रिदण्डिकामेकां परिधापयेत्। तत्र पारस्करो नास्ति। सदाचार एव प्रमाणम्।

**यज्ञोपवीतं परमं पवित्रं बृहस्पतेर्यत् सहजं पुरस्तात्।**
**आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः॥ २५५**

[ पारस्करगृह्ये (२, २, १०) मन्त्रोऽयं बन्धनीचिह्नान्तर्मुद्रापितो भाष्यकृद्भिश्च शाखान्तरीयत्वेन व्याख्यातो दृश्यते[3] ]

---

१ का१—का२—छ—प—अवधानेन।
२ का१—प—ततो।
३ मन्त्रोऽयं स्मृतिमुक्ताफले ( वर्णाश्रम ९० ) गृह्यपरिशिष्टनाम्नोद्धृतः।

हे माणवक यज्ञोपवीतं प्रतिमुञ्च धारय। प्रतिपूर्वो मुञ्चतिर्धारणे वर्त्तते[१]। किम्भूतं यज्ञोपवीतम्—आयुष्यम् आयुर्वृद्धिहेतुम्[२]। अग्र्यं श्रेष्ठं शुभ्रं निर्मलं परमं पवित्रम्। पुनः किम्भूतं—पुरस्तात् पूर्वं [३]बृहस्पतेः सहजं पूर्वं [४]बृहस्पतिना सहैकसमये जातमित्यर्थः। किमर्थमस्य धारणमित्याकाङ्क्षायामाह—बलं सामर्थ्यम् अस्तु तेजः अस्तु। हे माणवक आयुर्बलतेजसां लाभाय यज्ञोपवीतं धारयेति वाक्यार्थः॥ २५३॥

यज्ञोपवीतदानानन्तरं स्मृतिशास्त्रविहिततयाऽमन्त्रकमेव कृष्णाजिनं दद्यात्। ततो माणवकः पालाशाद्यन्यतमं दण्डं गृह्णीयात्।

तथा च पारस्करः [ २, २, १४ ]

दण्डं प्रयच्छति तं प्रतिगृह्णाति यो मे दण्डः परापतदित्यादि।

**यो मे दण्डः परापतद्वैहायसोऽधिभूम्यां तमहं पुनरादद आयुषे ब्रह्मणे ब्रह्मवर्चसाय॥ २५६**

[ पा गृ २, २, १२ ]

मे मम यो दण्डः अधिभूम्यां भूमेरुपरि परापतत् पतितः। किम्भूतः—वैहायसः विहाय आकाशं तत्र भूतः। अहं तं[५] दण्डं पुनः आददे गृह्णामि [६]प्राक्तनजन्मन्यहं द्विज आसम्[६] एतावतास्मिन्नपि जन्मनि दण्डं गृह्णामीत्यभिप्रायः। किमर्थं गृह्णामीत्याकाङ्क्षायामाह—आयुषे जीवनार्थं ब्रह्मणे वेदार्थं ब्रह्मवर्चसाय ब्रह्मतेजःप्राप्त्यर्थम्॥ २५६॥

तत आचार्यः स्वयं जलाञ्जलिमादाय माणवकस्याञ्जलिं पूरयेत्। तथा च पारस्करः [ २, २, १४ ]

अथास्याञ्जिरञ्जलिनाञ्जलिं पूरयत्यापो[७] हि ष्ठेति तिसृभिरिति।

अस्यर्क्त्रयस्य व्याख्यादिकम्प्रातःस्नान एवोक्तमतस्तत्रानुसन्धेयम् ( २४-२५ पृः )॥

ततो माणवकस्तं जलाञ्जलिं दत्त्वादित्यमुपतिष्ठेत[८]। तथा च पारस्करः [२, २, १५]

अथैनं सूर्यमुदीक्षयति तच्चक्षुरिति।

तच्चक्षुरिति मन्त्रः पुरैव लिखितो व्याख्यातश्च ( ६२ पृः )॥

---

१ प—'यज्ञार्थमुप समीपे वीतं यज्ञोपवीतं यज्ञेन विष्णुना प्रजापतिना उपरि स्कन्धदेशे वीतं परिहितं यज्ञोपवीतम्। यज्ञो वै विष्णुरिति सुरारिमिश्रः' इत्यधिकम्।

२ प—आयुषो हितमायुष्यमायुर्वर्धनम्।

३ ट—त—प्रजापतेः। प—प्रजापतेर्ब्रह्मणो वा।

४ ट—य—प्रजापतिना। प—प्रजापतिना इत्यधिकम्।

५ क—सतो।

६ प—नास्ति।

७ क—पूरयेत् आपो।

८ क१—°तिष्ठेत्। क—°तिष्ठते।

इति इदह मेति काण्डिकाया व्याख्यादिकं शान्तिप्रकरणे (१६४ पृ:) लिखितं तत्रैव द्रष्टव्यम्।

तत आचार्यो माणवकस्य दक्षिणस्कन्धे हस्तं दत्त्वा हृदयमालभेत। तथा च पारस्कर: [२, २, १६]

अथास्य दक्षिणांसमधि हृदयमालभते मम व्रते ते हृदयं दधामीति।

**मम व्रते ते हृदयं दधामि मम चित्तमनु चित्तं ते अस्तु।**
**मम वाचमेकमना जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यम् ॥ २५५**

[म ब्रा १, २, २१। पा गृ २, २, १६]

हे माणवक ते तव हृदयं मम व्रते दधामि तव हृदयं मदेकव्रतं स्थापयामि[१]। किन्त्वमदेकव्रतत्वमित्याकाङ्क्षायामाह—ते तव चित्तं मम चित्तम् अनु अनुकूलम् अस्तु मदीयचित्तानुकूलं तव चित्तं भवत्वित्यर्थ:। त्वम् एकमना: एकचित्त: सन् मम वाचं जुषस्व सेवस्व। बृहस्पति: देवानामाचार्य: त्वा त्वां मह्यं नियुनक्तु नियोजयतु। अस्मिन्मदेकव्रतत्वे बृहस्पतिस्तव नियोजको भवत्वित्यर्थ: ॥ २५५ ॥

तत आचार्यो माणवकेन कस्य ब्रह्मचार्यसीति पृच्छ्यमानेन भवत इत्युत्तरे दीयमाने इन्द्रस्य ब्रह्मचार्यसीति मन्त्रं पठेत्।[२]
तथा च पारस्कर: [२, २, २०]—भवत इत्यच्यमान इन्द्रस्य ब्रह्मचार्यसीत्यादि।

**इन्द्रस्य ब्रह्मचार्यस्यग्निराचार्यस्तवाहमाचार्यस्तवासौ ॥ २५६**

[श ब्रा ११, ५, ४, २। पा गृ २, २, २०]

हे माणवक इन्द्रस्य त्रैलोक्यनाथस्य ब्रह्मचारी असि भवसि। तव अग्नि: आचार्य: सर्वेषामेव द्विजातीनां सामान्येनाग्नेर्गुरुत्वात्। यथा—गुरुरग्निर्द्विजातीनामिति स्मृति:[३]। इदानीन्तु एतदुपनयनकर्तृत्वेनाहं तवाचार्य: ॥२५६॥

तत आचार्यो माणवकं भूतेभ्यो दद्यात्।
तथा च पारस्कर: [२, २, २१]—अथैनं भूतेभ्य: परिददाति प्रजापतये त्वेति।

**प्रजापतये त्वा परिददामि देवाय त्वा सवित्रे परिददाम्यद्भ्यस्त्वौषधीभ्यस्त्वा परिददामि द्यावापृथिवीभ्यां त्वा परि-**

---

१ ट—त—सम्पादयामि इत्यधिकम्।

२ शतपथब्राह्मणे (११, ५, ४, २) मन्त्रोऽयं ब्रह्मचारिणो हस्तादाने आचार्येण पाठ्यतया विनियुक्त:।

३ रघुनन्दनेन शुद्धितत्त्वेऽशौचसङ्कराख्ये प्रकरणे शातातपनामेदमुद्धृत वचनम्।

**ददामि विश्वेभ्यस्त्वा देवेभ्यः परिददामि सर्वेभ्यस्त्वा भूतेभ्यः परिददाम्यरिष्ट्यै ॥ २५७**

[ श ब्रा ११, ५, ४, ३ । पा गृ २, २, २१ ]

हे माणवक प्रजापतये त्वा त्वां परिददामि समर्पयामि। किञ्च सवित्रे सूर्याय परिददामि समर्पयामि। किम्भूताय—देवाय [1]दानादिगुणयुक्ताय। अद्भ्यः जलेभ्यः तथा विश्वेभ्यो देवेभ्यः सर्वेभ्य इन्द्रप्रभृतिदेवेभ्यः तथा सर्वेभ्यः भूतेभ्यः राक्षसादिभ्यः। त्वां परिददामीति सर्वत्र तुल्यार्थः। किमर्थं समर्पणमित्याकाङ्क्षायामाह—अरिष्ट्यै [2]रिष्टिरापत्तदुपशमनाय। हे माणवक सर्वापच्छान्त्यर्थं प्रजापतिप्रभृतिभ्यस्त्वां समर्पयामीति वाक्यार्थः। रिष हिंसायामित्यस्य क्तिन्-प्रत्यये रिष्टिः। [3]न रिष्टिररिष्टिः [3] ॥ २५७ ॥

ततः शिष्यमनुशास्य तस्मै सावित्रीं दद्यात्।

तत्र पारस्करः [ २, ३, ३—५ ]—अथास्मै सावित्रीमन्वाहोत्तरतोऽग्नेः प्रत्यङ्मुखायोपविष्टायोपसन्नाय समीक्षमाणाय समीक्षिताय। दक्षिणतस्तिष्ठत आसीनाय वैके। पच्छोऽर्धर्चशः सर्वाञ्च तृतीयेनेति।

**तत् सवितुर्वरेण्यमित्यादि।**

अस्यास्तु गायत्र्या व्याख्यादिकं तथा पच्छोऽर्धर्चश इत्यादिविवरणञ्चोपरि गायत्रीव्याख्याप्रकरण एव (३८, ६८, १५८ पृः) लिखितत्वादत्र पुनर्न लिखितमिति तत्रैवानुसन्धेयम्।

तदनु माणवकः समिदाधानार्थमग्निं प्रज्वालयेत्। तथा च पारस्करः ( २, ४, १ )—अथ समिदाधानम्। पाणिनाग्निं परिसमूहति अग्ने सुश्रव इति।

**अग्ने सुश्रवः सुश्रवसं मा कुरु यथा त्वमग्ने सुश्रवःसुश्रवा अस्येवं माᳬ सुश्रवःसौश्रवसं कुरु यथा त्वमग्ने देवानां यज्ञस्य निधिपा अस्येवमहं मनुष्याणां वेदस्य निधिपा भूयासम् ॥ २५८**

[ पा गृ २, ४, २ । आप म २, ५, १ द्रः । म ब्रा १, ६, ७१ द्रः ]

हे अग्ने। किम्भूत—सुश्रवः शोभनं[4] श्रवो नाम यस्यासौ सुश्रवः। मा मां सुश्रवसं कुरु। सुष्ठु श्रवः कर्णेन्द्रियमस्येति सुश्रवाः तं सुश्रवसं वेदाध्ययने

---

१ क—कर—देवनादिगुण। प—रिष्टिस्तत्पातस्तदुपनाशाय।

२ क१—त—रिष्टिस्तत्पातस्तदुप। ट—पापदस्तदुपशमनार्थं।

३ कर—प—नास्ति। त—पश्चान्नञा सम्बन्धः।

४ क—त-ब—शोभनः।

[1]मामविकलकर्णेन्द्रियं कुर्वित्यर्थः। हे अग्ने त्वं यथा सुश्रवःसुश्रवा असि सुश्रवसि स्वादौ[2] सुश्रवाः शोभनकर्णौ भवसि एवं तथा[3] हे अग्ने मा मां सुश्रवः- सौश्रवसं कुरु। सुश्रवसि[4] यशसि सौश्रवसं शोभनश्रवणजनितज्ञानशालिनं कुरु। हे अग्ने त्वं यथा देवानाम् इन्द्रादीनां यज्ञस्य यज्ञसम्बन्धेन निधिपाः असि निधिरक्षको भाण्डागारिको[5] भवसि एवमहं मनुष्याणां वेदस्य निधिपाः भूयासम् वेदस्य भाण्डागारिको[5] भवामीत्यर्थः॥ २५८॥

ततो माणवकोऽग्नौ समिधन्दद्यात्। तथा च पारस्करः (२, ४, ३)— प्रदक्षिणमग्निं पर्युक्ष्योत्थाय समिधमादधात्यग्नये समिधमाहार्षमिति।

**अग्नये समिधमाहार्षं बृहते जातवेदसे। यथा त्वमग्ने समिधा समिध्यस एवमहमायुषा मेधया वर्चसा प्रजया पशुभि- र्ब्रह्मवर्चसेन समिन्धे। जीवपुत्रो ममाचार्यो मेधाव्यहमसान्य- निराकरिष्णुरायुष्मान् यशस्वी तेजस्वी ब्रह्मवर्चस्यन्नादो भूयासꣳ स्वाहा॥ २५९**

[पा गृ २, ४, ३। आप म २, ६, २ इः]

हे अग्ने समिधम् आहार्षम् आहृतवानस्मि। कस्मै—जातवेदसे अग्नये तुभ्यमेवेत्यर्थः। किम्भूताय—बृहते जाज्वल्यमानाय। हे अग्ने त्वं यथा समिधा समिध्यसे मया आहृतया[6] अनया समिधा ज्वलसि। एवमहं समिन्धे सुप्रकाशो[7] भवामि। कैः—आयुषा जीवनेन मेधया बुद्ध्या वर्चसा तेजसा प्रजया सन्तानेन पशुभिर्गवादिभिः ब्रह्मवर्चसेन ब्रह्मतेजसा। किञ्च मम आचार्यो जीवपुत्रो मेधावी अस्तु जीवपुत्रो[8] मेधावी च ममाचार्यो भवत्वित्यर्थः। अहम् निराकरिष्णुः असानि भवानि अग्नीनाधाय यागस्याकरणं निराकरणं तत्कारी निराकरिष्णुः न निराकरिष्णुरनिराकरिष्णुः नित्यं यागकारी भवामीत्यर्थः। अपि चाहम् आयुष्मान् यशस्वी तेजस्वी ब्रह्मवर्चस्वी वेदाध्ययनर्धिमान् अन्नादो भूयासम्। अन्नमत्ती-

---

१ क१—ट—त—प—मामविकलेन्द्रियं।

२ क—सुश्रवे स्वादौ। छ—त—न—व— सुश्रवस्स्वादौ।

३ छ—यथा।

४ क—त—न—व—सुश्रवे।

५ प—भाण्डारिकी।

६ क—क२—ट—आहितया। प—हूयमानया।

७ क—घ—च—प्रकाशी।
क१—क२—त—सप्रकाशो।

८ छ—ममाचार्यो इत्यधिकम्।

त्यर्थाद:। कदाचिदपि ममान्नविच्छेदो मा भवत्वित्यर्थः। अनया कामनया अग्नये स्वाहा सुहुतं भवतु ॥ २५८ ॥

ततो माणवकोऽग्नौ हस्तौ प्रतप्य मुखं मार्जयेत्।

तथा च पारस्कर: ( २, ४, ७ )—पाणी प्रतप्य मुखं विमृष्टे तनूपा अग्नेऽसीति वाक्यान्ते मेधां म इति।

**तनूपा अग्नेऽसि तन्वं मे पाह्यायुर्दा अग्नेऽस्यायुर्मे देहि।**

**वर्चोदा अग्नेऽसि वर्चो मे देहि॥**

**अग्ने यन्मे तन्वा ऊनं तन्म आपृण॥ २६०**

[ पा गृ २, ४, ७। आ स ३, १७। का स ३, २३ ]

हे अग्ने तनूपा असि तनू: शरीरं तस्य पाता रक्षको भवसि अतो मे मम तन्वं शरीरं पाहि रक्ष। हे अग्ने आयुर्दा असि आयुषो दाता भवसि। अत आयुर्मे देहि। हे अग्ने वर्चोदा असि तेजसो दाता भवसि अतो वर्चो मे देहि। हे अग्ने मम तन्वा: शरीरस्य यत् ऊनम् असम्पूर्णं तत् मे आपृण आपूरय। तत्र तन्वमिति तनूशब्दस्य द्वितीयैकवचने इयङ्प्रकरणे तन्वादीनां छन्दसुपसंख्यानमिति [ पा वा ६, ४, ७७ ] यणादेश:। हे अग्ने अनेन समिदाधानकर्मणा आराधितस्त्वं मम देहरक्षादिकं कुर्विति प्रार्थना वाक्यार्थ: ॥ २६० ॥

**मेधां मे देव: सविता मेधां देवी सरस्वती।**

**मेधां मे अश्विनौ देवावाधत्तां पुष्करस्रजौ ॥ २६१**

[ पा गृ २, ४, ८ ]

मे मम मेधां [१]बुद्धिं सविता देव आदधातु। तथा सरस्वती देवी मेधां मे आदधातु[२]। तथा अश्विनौ देवौ अश्विनीकुमारौ मे मम मेधाम् आधत्ताम्। किम्भूतौ—पुष्करस्रजौ पुष्करं पद्मं तन्मयी स्रक् माला ययोस्तौ पुष्करस्रजौ। सवित्रादयो देवा मेधां मे जनयन्त्विति अग्नावेव प्रार्थना वाक्यार्थ: ॥ २६१ ॥

तत: प्राणसंस्पर्शने पारस्कर: [ क्वचित् पा गृ २, ४, ८ ]

अङ्गान्यालभ्य जपत्यङ्गानि च म आप्यायन्तां वाक् प्राणश्चक्षु: श्रोत्रं यशो बलमिति।

---

१ क—ख२—ट—छ—नास्ति।

२ क१—त— 'इत्यतीतेनैव संबध्यते' इत्यधिकम्।

**अङ्गानि च म आप्यायन्तां वाक् च म आप्यायतां प्राणश्च म आप्यायतां चक्षुश्च म आप्यायतां श्रोत्रञ्च म आप्यायतां यशो बलञ्च म आप्यायताम् ॥ २६२**

[ क्वचित् पा गृ २, ४, ९ ]

मे मम अङ्गानि शरीरावयवा आप्यायन्तां [1]स्फीता भवन्तु। न केवलं मेधा मे भवत्वेतदपि भवत्विति चकाराणां वाक्यार्थः। वाक् वचनकारणमिन्द्रियं मुखमित्यर्थः। प्राणः प्राणवायुः [1]श्वासः। चक्षुःश्रोत्रे प्रसिद्धे। यशो बलमिति च द्वयं प्रसिद्धमेव। मे आप्यायतामिति सर्वत्र तुल्यार्थः। वाक्यार्थोऽपि व्यक्त एव ॥ २६२ ॥

ततो माणवको भस्मना त्र्यायुषं कुर्यात्। तथा च पारस्करः [ क्वचित् पा गृ २, ४, १० ]—त्र्यायुषाणि कुरुते भस्मना ललाटे ग्रीवायां दक्षिणेऽंसे हृदि च त्र्यायुषमिति प्रतिमन्त्रमिति।

**कश्यपस्य त्र्यायुषं जमदग्नेस्त्र्यायुषं यद्देवानां त्र्यायुषं तन्मे अस्तु त्र्यायुषम् ॥**

[ वा स ३, ६२। का स ३, ७४ ]

अस्य मन्त्रस्य पूर्वमेव व्याख्यानं कृतम् [ २१८ पृः ] तेनात्र न कृतम् ॥[2]

इत्युपनयनमन्त्रव्याख्या ॥

## अथ समावर्तनम्

तत्र ब्रह्मचर्यानन्तरं समावर्तनविधौ [ मनुः ३, १ ]

षट्त्रिंशदाब्दिकं चर्यं गुरौ त्रैवेदिकं व्रतम्।
तदर्धिकं पादिकं वा ग्रहणान्तिकमेव वा ॥

अत्र ग्रहणान्तिकमेव वेति योऽतितीक्ष्णबुद्धित्वादल्पसमयेनैव वेदत्रयमभ्यस्यति तेन तदभ्यासानन्तरमेव समावर्तनं कर्तव्यमित्यर्थः। एतस्यैव स्फुटीकरणे पारस्करः [ २, ५, १३-१५ ]

अष्टचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यं चरेत्। द्वादश द्वादश वा प्रतिवेदम्। यावद्ग्रहणं वेति।

---

१ ट—प्रीता। छ—स्फीतां।
१ छ—श्वासात्मा।
२ क—का२—छ—पुस्तकेषु मन्त्रः पुनरपि व्याख्यातः।

तत्र सर्वथा समग्रवेदाभ्यासासमर्थेन [1]स्वाह्निकानुरूपगर्भाधानादिदश-संस्कारोचितस्मार्ताग्निकर्मानुगुणवेदभागमवश्यमधीत्य समावर्तनमाचरणीयम् ।

तत्र समावर्तनस्नानार्थमष्टानामेव जलकुम्भानां जलग्रहणे पारस्कर: [२, ६, ९]—कुशेषु प्रागग्रेषु पुरस्तात् स्थित्वाऽष्टानामुदकुम्भानां ये अप्स्वन्तरग्नय इति ।
तत्र जलग्रहणमन्त्रो यथा

**ये अप्स्वन्तरग्नय: प्रविष्टा गोह्य उपगोह्यो मयूखो मनोहा: खलो विरुजस्तनूदूषिरिन्द्रियहा तान् विजहामि । यो रोचनस्तमिह गृह्णामि ॥ २६३**

[ म ब्रा १, ७, १—मकको ।—°रिन्द्रियहा अति तान् सृजामि । पा गृ २, ६, १० ]

अप्सु जलेषु अन्तर्मध्ये ये अग्नय: प्रविष्टा: तान् विजहामि । के ते—गोह्य: उपगोह्य: मयूख:[2] मनोहा: खल: विरुज: तनूदूषि: इन्द्रियहा: इत्यष्टावग्निनामानि । एते चाग्नय: सर्वे एव स्वनामतो दोषावहत्वेनैव प्रतीयन्ते । एतावतैतान् विहाय इह जले योऽग्नि: रोचन: रोचननामा कल्याणनामा तं गृह्णामि । स्नानार्थं जले गृह्यमाणे जले येऽग्नयस्तिष्ठन्ति तेषु मध्ये गोह्यादयो ये दोषावहास्तान् विहाय कल्याणनामप्रकाशकाग्निसहितं जलं गृह्णामीति वाक्यार्थ: ॥ २६३ ॥

तत एकस्माज्जलकुम्भाज्जलमादायाभिषेकं कुर्यात् । तथा च पारस्कर: [ २, ६, १०-११ ]

एकस्मादपो गृहीत्वा तेनाभिषिञ्चते तेन मामभिषिञ्चामीत्यादि ।

**तेन मामभिषिञ्चामि श्रियै यशसे ब्रह्मणे ब्रह्मवर्चसाय ॥ २६४**

[ पा गृ २, ६, ११ । म ब्रा १, ७, ३ द्र: ]

**येन श्रियमकृणुतां येनावमृशतां सुराम् ।**
**येनाक्ष्यावभ्यषिञ्चतां यद् वां तदश्विना यश: ॥ २६५**

[ पा गृ २, ६, १२ । म ब्रा १, ७, ५ द्र: ]

श्रियै लक्ष्मीलाभाय यशसे यशोलाभाय ब्रह्मणे ब्रह्मज्ञानाय ब्रह्मवर्चसाय ब्राह्मणतेजोलाभाय[3] चाहं माम् आत्मानं तेन जलेनाभिषिञ्चामि ॥ तेन केन—येन जलेन हे अश्विनौ भवन्तौ । श्रियम् लक्ष्मीम् अकृणुतां कृतवन्तौ । तथा

---

१ क—ट—तु याज्ञिकानुरूप° ।

२ ङ—मयूष: ।

३ क१—ट—प—तेजोलाभाय । क२—ठ—ब्रह्मतेजो° । ङ—ब्राह्मणतेजो° ।

येन सुरां सुराजनितं दोषम् अवमृष्टतां मार्जितवन्तौ। तथा येन अक्षी अश्विनौ अभ्यषिञ्चताम् अभिषिक्तवन्तौ। तथा वाम्[1] युवयोः[2] यद् जलं[3] यशो यशोहेतुः तन्ममास्त्विरध्याहार्यम्। येन जलेनाश्विनौकुमारयोर्लक्ष्मीर्जनिता सुरादोषस्य मार्जितः चक्षुरभिषिच्य दिव्यं कृतम्। [4]तयोरित्थमभ्युदयकारणं यज्जलं तेनाभिषेकान्मम लक्ष्मीयशोज्ञानब्राह्मतेजांसि भवन्त्वित्याशंसा वाक्यार्थः॥ २६४-२६५॥

ततः पूर्ववद् ये आप्स्वन्तरिति मन्त्रेण प्रत्येकं जलकुम्भत्रयाज्जलमादाय आपो हि ष्ठेति तिसृभिर्ऋग्भिः प्रत्येकं स्नायात्।

तथा च पारस्करः (२, ६, १३)—आपो हि ष्ठेति च प्रत्यृचं त्रिभिरिति।

एतन्मन्त्रत्रयस्य व्याख्यादिकं प्रातःस्नानप्रकरणे (२४ पृः) कृतत्वात् तत्र लिखितमतस्तत्रैवानुसन्धेयम्।

ततो ये अप्स्वन्तरिति मन्त्रेणैव प्रतिकलसं जलमादाय तुष्णीमेव जलकुम्भचतुष्टयेनाभिषेकं कुर्यात्। तथा च पारस्करः (२, ६, १४)—तूष्णीमितरैरिति।

ततो मेखलोन्मोचनं शिरोमार्गेण कुर्यात्। तथा च पारस्करः (२, ६, २५)—उदुत्तममिति मेखलामुन्मुच्य निधायेति।

उक्तो मन्त्रः व्याख्यातश्चोक्तम्[5] [२२४ पृः]।

[6]ततो वासोऽन्यत् परिधाय सूर्यावेक्षणं कुर्यात्। तथा च पारस्करः (२, ६, १५)—वासोऽन्यत् परिधायादित्यमुपतिष्ठत उद्यन् भ्राजभृष्णुरित्यादि[7]।

**उद्यन् भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थात् प्रातर्यावभिरस्थाद्दशसनिरसि दशसनिं मा कुर्वा विदन्मा गमय। उद्यन् भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थाद्दिवायावभिरस्थाच्छतसनिरसि शतसनिं मा कुर्वा विदन्मा गमय। उद्यन् भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थात् सायंयावभिरस्थात् सहस्रसनिरसि सहस्रसनिं मा कुर्वा विदन्मा गमय॥ २६६**

[म ब्रा १, ७, ८—भ्राजभृष्टिभिरिन्द्रो। पा गृ २, ६ १६]

---

१ क—आवाम्।

२ क—आवयो।

३ त—तज्जलम् इत्यधिकम्।

४ क—तयोर्विश्वमभ्युदय। प—तयोर्विश्वाभ्युदय।

५ क-पुस्तके उदुत्तममिति मन्त्रः पुनरपि व्याख्यातः।

६ क१—त—ततो दण्डं भूमौ तूष्णीं निधाय कौपीनमपि इत्यधिकम्।

७ क्वचित् पारस्करे भ्राजभृष्टिरिति पाठः।

इन्द्र: आदित्य: उद्यन् उदयं कुर्वन् अस्थात् स्थितो बभूव। किम्भूत:—भ्राजभृष्णु: भ्राजं रश्मिं बिभर्तीति भ्राजभृष्णु:। प्रात: प्रत्यूषे मरुद्भि: देवै: सह अस्थात्। किम्भूतै:—यावभि: यावद्भि: यावन्तो देवास्तै: सर्वै: सह स्थितो बभूवेत्यर्थ:। उत[1] हे[2] विदन् विद्वन्[3] सर्वं[4] जानन्[5] आदित्य त्वं[6] दशसनिरसि बहुधनो भवसि अतो मा मां दशसनिं बहुधनं कुरु। किञ्च मा मां ब्रह्मचर्यादुत्तीर्णम् आगमय जानीहि। द्वितीयतृतीयपाठयोश्च दिवायावद्भि: सायंयावद्भि: शतसनिरसि सहस्रनिरसि इत्येतावन्मात्रेषु[7] विशेष:। अत्र दिवा सायमिति प्रसिद्धार्थम्। शतसहस्रशब्दौ बहुवाचिनावेव। अपरं सर्वं समानम्। आदित्य: प्रातर्दिवासायंकालेषु रश्मीन् धारयन्[8] देवै: सर्वै: सह स्थितो बभूवेत्यादित्यमुत्कीर्त्य[9] हे सर्वज्ञ आदित्य बहुधनोऽसि मां बहुधनं कुरु ब्रह्मचर्यादुत्तीर्णं मां जानीहि चेति याच्ञा वाक्यार्थ:। अत्र यावभिरिति यावद्भिरित्यत्र वर्णागमो वर्णविपर्ययश्चेति दकारलोप:। आगमयेति कुर्वा विदन्नित्यत्र स्थितेन व्यवहितेनाङा सम्बन्ध: ॥ २६६ ॥

तत औदुम्बरेण काष्ठेन दन्तधावनं कुर्यात्। तथा च पारस्कर: ( २, ६, १७ )—औदुम्बरेण दन्तान् धावेत अन्नाद्यायेति।

मन्त्रोऽयं दन्तधावनप्रकरणे ( १८ पृ: ) लिखितो व्याख्यातश्च[10]।

तत: सुगन्धिद्रव्येण हस्तावनुलिप्य[11] मुखसमीपे निधाय मन्त्रं जपेत्। तत्र पारस्कर: ( २, ६, १८ )—[12]उत्साद्य पुन: स्नात्वानुलेपनं[12] नासिकयोर्मुखस्य चोपस्पृशीत प्राणापानौ मे तर्पयेति।

## प्राणापानौ मे तर्पय चक्षुर्मे तर्पय श्रोत्रं मे तर्पय ॥ २६७

[ पा गृ २, ६, १८ ]

हे अनुलेपन मे मम प्राणापानौ शारीरवायू तर्पय प्रीणय। तथा मे चक्षु: तर्पय। तथा श्रोत्रं तर्पय। व्यक्तार्थमेव ॥ २६७ ॥

---

१ प—अत्र। क—तत:।

२ प—आह।

३ क—क१— क२—प—नास्ति।

४ प—नास्ति।

५ प—नास्ति।

६ प—त्वं पश्यन् इत्यधिकम्।

७ क—°मन्त्रौ।

८ प—बिभ्रत्।

९ क—°त्यादित्यमनुकीर्त्य। प—आह इत्यधिकम्

१० क-पुस्तके पुनरप्यत्र व्याख्यानं दत्तम्।

११ प- हस्तावुपलिप्य।

१२ प—हस्तावुपलिप्य। त—हस्तावनुलिप्य

ततो हस्तौ प्रक्षाल्य दक्षिणस्यां दिशि तज्जलं त्यजेत्। तथा च पारस्कर: (२, १६, १८ द्र:)—पितर: शुन्धध्वमिति पाद्योरवनेजनं दक्षिणस्यामनुसिञ्चेदिति।

**पितर: शुन्धध्वम् ॥ २६८**

[ वा स १९, ३६। का स २१, ३७। पा गृ २, ६, १९ ]

हे पितर: शुन्धध्वं शोधयत। मामिति कर्मपदमत्राध्याहृतं बोद्धव्यम्[1] ॥ २६८ ॥

तत: सुगन्धेन स्वदेहं लिप्त्वा मन्त्रं जपेत्। तथा च पारस्कर: (२, ६, २०)—अनुलिप्य जपेत् सुचक्षा अहमक्षीभ्यामिति।

**सुचक्षा अहमक्षीभ्यां भूयासं सुवर्चा मुखेन सुश्रुत् कर्णाभ्यां भूयासम् ॥ २६९**

[ पा गृ २, ६, १९। आ गृ ३, ६, ७। मा ग १, ९२५—अक्षिभ्यां ]

अहम् अक्षीभ्यां सुचक्षा: भूयासम्। सुचक्षा: शोभनदृष्टि:। तथा मुखेन सुवर्चा: भूयासम्। सुवर्चा: शोभनदीप्तिमान्। तथा कर्णाभ्यां सुश्रुत् भूयासम्। सुश्रुत् शोभनश्रावी। अहमक्षिभ्यां शोभनं पश्यानि[2] मुखेन दीप्तिमान् भवानि[3] कर्णाभ्यां शोभनं शृणवानि[4] इत्याशंसात्मकं वाक्यार्थ: ॥ २६९ ॥

ततो नूतनं धौतं वा वस्त्रं परिदध्यात्। तथा च पारस्कर: ( २, ६, २० )—अहतं वासो धौतं वाऽमौत्रेणाच्छादयीत परिधास्यै यशो धास्यै इति !

**परिधास्यै यशो धास्यै दीर्घायुत्वाय जरदष्टिरस्मि ।**
**शतञ्च जीवामि शरद: पुरूची रायस्पोषमभिसंव्ययिष्ये ॥ २७०**

[ अ स २, १३, ३ द्र:। पा गृ २, ६, २०। मा गृ १, ९, २७—परिधास्ये यशो धास्ये, °दष्टिरस्तु, शतं जीवेम ]

परिधास्यै परिधानं करिष्यामि। परिधाय यशो धास्यै कीर्तिं धारयिष्यामि परिधानेन कीर्तिर्मम भविष्यतीत्यर्थ:। अपि तु दीर्घायुत्वाय दीर्घायुष्ट्वार्थम्। किञ्च जरदष्टिरस्मि जरद् वार्धकमश्नुते व्याप्नोतीति जरदष्टिर्वृद्धो भवामीत्यर्थ:। किञ्च शतं शरद: वर्षाणि जीवामि[5]। किम्भूत:—सुवर्चा: शोभनदीप्तिशाली। रायस्पोषं रायस्पोषाय धनवृद्ध्यर्थम्। एतावद्भि: प्रयोजनै: अभिसंव्ययिष्ये अभि सर्वतोभावेन सम्यगावरणं करिष्यामीत्युपसंहार:। पुन: पुनरुत्तोनाद-

---

१ क—मां शोधयध्वमिति याच्ञा वाक्यार्थ इत्यधिकम्।

२ ङ—क—त—पश्यानि।

३ ङ—क—त—भवामि।

४ ङ—क—त—शृणोमि।

५ प—शतं वर्षाणि प्राणधारणं करोमि इत्यधिकम्।

रातिशय:[१]। यशस्विरायुष्टतेजोधनानां प्राप्त्यर्थमहं परिधानं करोमीति वाक्यार्थः। रायस्पोषमिति सुपां सुपो भवन्तीति चतुर्थ्यर्थे द्वितीया। संव्ययिष्ये इति व्येञ् संवरण इत्यस्य धातो रूपम्।

ततो द्वितीयवस्त्रेणोत्तरीयं कुर्यात्।

तथा च पारस्करः ( २, ६, २१ )-अथोत्तरीयं यशसा मा द्यावापृथिवीति।

**यशसा मा द्यावापृथिवी यशसेन्द्राबृहस्पती।**

**यशो भगश्च माऽविदद्द यशो मा प्रतिपद्यताम् ॥ २७१**

[ पा गृ २, ६, २१। आरण्यसंहिता ३, १०—भगश्च विन्दतु। मा गृ १, ९, २७—भगश्च मा रिषत्। ]

द्यावापृथिवी आकाशपृथिव्यौ। मा माम्। छादयेतामिति क्रियापद-मध्याहृतं बोद्धव्यम्। केन—यशसा। किञ्च इन्द्राबृहस्पती यशसा मां छादयेताम्। किञ्च यशो मा माम् अविदत् प्राप्नोतु। न केवलं यशो भगश्च सौभाग्यञ्च मामविदत्[२]। किञ्च यशो मा मां प्रतिपद्यताम् [३]प्रतियच्छतु। पुनः पुनरभिधानमादरार्थम्। [४]अनेनोत्तरीयवस्त्राच्छादनेनाकाशं पृथिवी इन्द्रो बृहस्पतिश्च[४] मां यशसा आच्छादयन्तु। उत्तरोत्तरं यशश्च सौभाग्यञ्च मम भवत्वित्याशंसा वाक्यार्थः।

ततः पुष्पमाल्यं गृह्णीयात्। तथा च पारस्करः ( २, ६, २३ )—सुमनसः प्रतिगृह्णाति या आहरज्जमदग्निरिति।

**या आहरज्जमदग्निः श्रद्धायै मेधायै कामायेन्द्रियाय।**

**ता अहं प्रतिगृह्णामि यशसा च भगेन च ॥ २७२**

[ पा गृ २, ६, २३। आप म २, ८, १० द्रः। ]

याः पुष्पस्रजः जमदग्निर्महर्षिराहरत् आहृतवान्। किमर्थम्—श्रद्धायै। एवमेवेति वेदे प्रत्ययः श्रद्धा तदर्थम्। मेधायै धियै[५]। कामाय अभिलषित-सिद्धार्थम्। इन्द्रियाय चक्षुरादीन्द्रियप्राप्त्यर्थञ्च। ताः पुष्पस्रजः अहं प्रतिगृह्णामि। किमर्थम्—यशसा यशसे च। भगेन च भगाय सौभाग्याय च। जमदग्निमहर्षिणा याः पुष्पस्रजः श्रद्धादिप्राप्तये गृहीतास्ता एवाहं यशःसौभाग्यप्राप्तये गृह्णामीति वाक्यार्थः। यशसा भगेन चेति चतुर्थ्यर्थे तृतीया।

---

१ ङ—छ—पुनः पुनरुक्ते द आदरातिशयार्थः।
प—पुनः पुनर्वचनमादरातिशयार्थम्।

२ ल—प्राप्नोतु इत्यधिकम्।

३ त—अभिगच्छतु। प—आगच्छतु।

४ त—मदीयवस्त्राच्छादनेनाकाशादयो।

५ छ—मेधायै धियै इति नास्ति। प—श्रद्धार्थम्।

ततस्तन्माल्यं शिरसि बध्नीयात्। तथा च पारस्करः ( २, ६, २४ )—तथा बध्नीते यद् यशोऽप्सरसामिति।

**यद् यशोऽप्सरसामिन्द्रश्चकार विपुलं पृथु ।**
**तेन संग्रथिताः सुमनस आबध्नामि यशो मयि ॥ २७३**

[ पा गृ २, ६, २४ ]

इन्द्रः अप्सरसाम् [१]उर्वशीप्रभृतीनां यद् यशः उर्वशीप्रभृतयो रूपवत्य इत्येवंरूपं यशो विपुलं[२] विस्तीर्णं चकार कृतवान्। किम्भूतं यशः—पृथु बहुतरम्। तेन यशसा संग्रथिताः सम्यक् ग्रथिताः सुमनसः पुष्पाणि मयि आबध्नामि। किमर्थम्—यशो यशसे। ममाप्यप्सरसामिव रूपवत्तया[३] [४]यशो भवत्विति अभिप्रायः[४]। इन्द्रेणाप्सरसां रूपवत्तया यद् यशः कृतं तेन यशसा सूत्रस्थानीयेन[५] ग्रथितानि पुष्पाणि ममापि रूपवत्तया यशो भवत्वित्येतदर्थं माल्यम् [६]अहमात्मन्याबध्नामीति वाक्यार्थः[६]। यशो मयीति चतुर्थ्यर्थे प्रथमा।

[७]ततोऽहतेन वाससा उष्णीषं कुर्यात्। तथा च पारस्करः ( २, ६, २५ )—उष्णीषेण शिरो वेष्टयेत् युवा सुवासा इति।

**युवा सुवासाः परिवीत आगात् स उ श्रेयान् भवति जायमानः ।**
**तं धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः ॥ २७४**

[ ऋ सं ३, ८, ४। पा गृ २, २, ९; २, ६, २५। आ गृ १, २०, ९ ]

यो युवा परिवीतः वस्त्रवेष्टितः सन् आगात् आगतवान् स उ श्रेयान् श्रेष्ठो भवति। उ छान्दसः स्तोभार्थः[८]। किम्भूतः—सुवासाः शोभनवस्त्रधारी। पुनः किम्भूतः—जायमानः। न केवलं श्रेष्ठो भवति तं युवानं धीरासः पण्डिताः उन्नयन्ति उत्कर्षयन्ति। किम्भूताः—कवयः कीर्तिवक्तारः। पुनः किम्भूताः—स्वाध्यः सुष्ठु आहिता धीर्येषां ते स्वाध्यः। पुनः किम्भूताः—मनसा हृदयेन देवयन्तः स्तुवन्तः ॥२७४॥

---

१ त—सर्वेश्यादीनां।
२ त—बहुतरमित्यधिकम्।
३ त—रूपप्राप्तये।
४ त—नास्ति।
५ क—च—सत्रस्थानीयेन। ङ—सूत्रस्थानीयानि। ढं—सूत्रस्थापनीयानि।
६ त—धारयामीति।
७ क-च-पुस्तकयोरित आरभ्य उपानत्परिधानावधिकस्य मन्त्रजातस्य व्याख्या विवाहप्रकरणे समुद्रं च इत्यध्वं नवत्यागमन्त्रस्य व्याख्यानानन्तरं प्रदत्ता।
८ ङ—स्तीतार्थः। त—स्तीवार्थः। प—स्तेनार्थः।

ततः कर्णे कुण्डलादिकमलङ्कारं परिदध्यात्। तथा च पारस्करः (२, ६, २६) —अलङ्करणमसि भूयोऽलङ्करणं भूया इति कर्णवेष्टकाविति।

**अलङ्करणमसि भूयोऽलङ्करणं भूयात् ॥ २७५**

[ पा गृ २, ६, २६ । मा गृ १, ९, २४ द्र: ]

हे कर्णकुण्डल अलङ्करणमसि [1]भूषायाः साधनं भवसीति तव स्वरूपम्। अतो भूयः उत्तरोत्तरम् अलङ्करणं भूयाः मम कर्णभूषणं भव।

ततः कज्जलाद्यभ्यञ्जनेन चक्षुरञ्जनं[2] कुर्यात्। तथा च पारस्करः— [ २, ६, २७ ] वृत्रस्येत्यङ्क्तेऽक्षिणी इति।

**वृत्रस्य कनीनकासि चक्षुर्दा असि चक्षुर्मे देहि ॥ २७६**

[का स ४, ४ । वा स ४, ३—वृत्रस्यासि कनीनकश्चक्षुर्दा । पा गृ २, ६, २७ । मा गृ १, ११, ८—कनीनिकासि]

हे अञ्जन वृत्रस्य वृत्रनाम्नः सातिशयशक्तिशालिनोऽसुरस्य [1]कनीनका अक्षितारका असि भवसि। ततः चक्षुर्दा असि त्वमन्येषां चक्षुर्ददासि। अतो मे मह्यं चक्षुर्देहि। यतः कारणाद् वृत्रासुरस्याक्षितारकोत्पन्नमञ्जनमतस्त्वदीयाञ्जनेनान्येषामप्यक्षिप्रकाश[3] कुरु[4] मह्यमपि चक्षुर्देहीति प्रार्थना वाक्यार्थः।

ततो दर्पणे आत्मानमवलोकयेत्। तत्र पारस्करः—आत्मानमादर्शे प्रेक्षते रोचिष्णुरसीति।

**रोचिष्णुरसि ॥ २७७**

[ पा गृ २, ६, २८ ]

हे दर्पण रोचिष्णुरसि प्रकाशशीलोऽसि अतो मां [5]सप्रकाश कुरु इत्यभिप्रायः।

ततश्छत्रं गृह्णीयात्। तथा च पारस्करः—छत्रं प्रतिगृह्णाति बृहस्पतेश्छदिरसीति।

**बृहस्पतेश्छदिरसि पाप्मनो मामन्तर्धेहि तेजसो यशसो माऽन्तर्धेहि ॥ २७८**

[ पा गृ २, ६, २९ ]

---

१ प—रूपादिभूषायाः।

२ प—कज्जलाभ्यञ्जनं।

३ ङ—छ—प—°मपि चक्षुः प्रकाशं।

४ ङ—छ—प—भवति।

५ छ—सर्वत्र प्रकाशं। त—सर्वत्र प्रकाशशीलं प—सर्वत्रप्रकाशकरूपं।

हे छत्र त्वं बृहस्पतेः देवाचार्यस्य छदिः अपवारणमसि[1]। अतो माम् पाप्मनः पापात् अन्तर्धेहि आवृतं कुरु। यथा मे पापसम्बन्धो न भवति तथा कुर्वित्यर्थः। न केवलं पापात् अपि तु तेजस आदित्यतापादिरूपान्मामन्तर्धेहि[2]। किमर्थम्—यशसः यशसे यशोऽर्थमिति यावत्। हे छत्र यतस्त्वं बृहस्पतेरपि पापसन्तापादिवारणमतो मामपि तेभ्यः पिधाय यशस्विनं कुर्विति वाक्यार्थः। यशस इति चतुर्थ्यर्थे षष्ठी।

तत्र उपानहौ परिदध्यात्। तथा च पारस्करः—उपानहौ प्रतिमुञ्चते प्रतिष्ठे स्थ इति।

**प्रतिष्ठे स्थो विश्वतो मा पातम् ॥ २७९**

[ पा गृ २, ६, ३० । आप म २, ९, ३ द्रः । मा गृ १, २, १६ द्रः ]

हे उपानहौ युवां प्रतिष्ठे स्थः उपक्रान्तगतिक्रियाया अत्यागः प्रतिष्ठा। तन्निमित्तत्वात् युवामेव प्रतिष्ठे स्थः भवथः। ततो मा मां पातम् रक्षतम्। कुतः—विश्वतः सर्वस्मात् गतिविरोधिनः कण्टकादेः। यतो युवां प्रतिष्ठानिमित्ते अतो मां सर्वतो गतिविरोधिनः कण्टकादे रक्षतम्।

ततो वैणवदण्डं गृह्णीयात्। तत्र पारस्करः—वैणवदण्डमादत्ते विश्वाभ्यो मेति।

**विश्वाभ्यो मा नाष्ट्राभ्यस्परिपाहि सर्वतः ॥ २८०**

[ वा स- का स ३७, १२ द्रः । पा गृ २, ६, ३१ ]

हे वैणवदण्ड मा मां परिपाहि सर्वतो भावेन रक्ष। कुतः नाष्ट्राभ्यः नाशकारिणीभ्यः। किम्भूताभ्यः—विश्वाभ्यः सर्वाभ्यः [3]राक्षसशृङ्गिसर्पादिभ्यः सर्वतः सर्वासु दिक्षु इत्यर्थः।

इति समावर्तनम् ॥

---

१ क—त—प—छदिरावरणमसि।
२ त—आदित्यतापाद्रक्ष।
३ त—राक्षसादिभ्यः। प—राक्षससर्पशृगालादिभ्यः।

## अथ विवाहः

तत्र वरस्य विष्टरासनोपवेशने पारस्करः—विष्टरं प्रतिगृह्णाति वर्ष्मोऽस्मीति ।

**वर्ष्मोऽस्मि समानानामुद्यतामिव सूर्यः ।**

**इमं तमभितिष्ठामि यो मा कश्चाभिदासति ॥ २८१**

[ पा गृ १, ३, ८ । आ गृ १, २४, ८—समानानां विद्युतामिव । मा गृ १, ९, ८ द्र: ]

समानानां समानजातीयानाम् अहं वर्ष्म आच्छादकः अस्मि भवामि । केषां क इव—उद्यताम् उदयशालिनां चन्द्रतारकादीनां सूर्य इव । किञ्च—यः कश्चन मामभिदासति हिनस्ति । अभिपूर्वो दासतिर्हिंसार्थ इति कर्केण[1] व्याख्यातम् । तमिमं विष्टररूपतापन्नम् अभितिष्ठामि अभिभूयाऽधः कृत्वा तिष्ठामि ।

ततो वरस्य पादप्रक्षालने पारस्करः—पादौ प्रक्षालयति विराजो दोहोऽसीति ।

**विराजो दोहोऽसि विराजो दोहमसीय मयि पाद्यायै विराजो दोहः ॥ २८२**

[ दोहमशीय—पा गृ १, ३, १२ । आ गृ १, २४, २१ । आप म २, ९, १३ । मा गृ १, ९, ७ ]

हे जल त्वं विराजो विशिष्टाय दीप्तेर्दोहः प्रपूरणः असि भवसि । अतः विराजो विशिष्टदीप्तेर्दोहम् प्रपूरकं त्वाम् असीय[2] गृह्णामि । तथा एवम्भूतस्त्वं मयि मम पाद्यायै पाद्याय भवेति । विराजो दोहोऽसीति जलमभिमन्त्र्य त्वामहं गृह्णामि त्वं मम पादस्य विशिष्टां दीप्तिं कुर्विति वाक्यार्थः । असीय इति अस गतिदीप्त्यादानेष्वित्यस्माद्धातोराशिषि लिङुत्तमपुरुषैकवचने रूपम् । मयीति षष्ठ्यां सप्तमी । पाद्यायै लिङ्गव्यत्ययेन स्त्रीत्वम् ।

ततोऽर्घ्यग्रहणे पारस्करः—अर्घ्यं प्रतिगृह्णात्याप: स्थ युष्माभिरिति ।

**आपः स्थ युष्माभिः सर्वान् कामानवाप्नवानि ॥ २८३**

[ पा गृ १, ३, १३ ]

हे आपः यतः कारणात् यूयमापः । आप्नुवन्तीत्यापः । स्थ भवथ अतोऽहं युष्माभिर्गृहीताभिः सर्वान् कामानवाप्नवानि आप्नुयामिति वाक्यार्थः स्फुट एव । आप इति आप्लृ व्याप्तौ इत्यस्माद् आप्नुवन्तीत्यस्मिन्नर्थे आप्नोतेर्ह्रस्वश्चेति [उणादि १, ७२] क्विपि कृते ह्रस्वे च कृते अप्शब्दे सिद्धे प्रथमाबहुवचने रूपम् ।

---

१ त—कर्कभाष्येण । मन्त्रार्थदीपिकायां शत्रुघ्नमिश्रेणाप्युक्तम्—अभिपूर्वो दासतिर्हिंसायां वर्तत इति कर्कभाष्यमिति । कर्ककृते पारस्करगृह्य-भाष्ये तु नैयमुक्तिरुपलभ्यते । संहिता-ब्राह्मणेषु बहुत्रैवाभिपूर्वो दासतिर्हिंसार्थे प्रयुक्तोऽस्ति । तैत्तिरीयारण्यक-भाष्ये (२, ५, २) सायणेनापि धातोरस्य हिनस्तीति व्याख्यानं कृतम् ।

२ अशीयेति पाठोऽप्यत्र व्याख्यातः ।

ततोऽर्घ्यजलस्य परित्यागे पारस्करः—निनयन्नभिमन्त्रयते समुद्रमिति ।

**समुद्रं वः प्रहिणोमि स्वां योनिमभिगच्छत ।**
**अरिष्टा अस्माकं वीरा मा परासेचि मत्पयः ॥ २८४**

[ अ स १०, ५, २३ द्र: । पा गृ १, ३, १४ । मा गृ २, ११, १८ ]

हे आपः वः युष्मान् समुद्रं प्रहिणोमि प्रस्थापयामि । मया प्रहिता यूयं स्वां योनिं स्वीयमुत्पत्तिस्थानं समुद्रम् अभिगच्छत । किम्भूता यूयम्—अस्माकम् अरिष्टाः अहिंसकाः । पुनः किम्भूताः—वीराः उत्कृष्टाः । किञ्च मत्पयः मदीयपानयोग्यं यत् पयः तत् मया मा परासेचि [1]न स्वीयमुत्पत्तिस्थानं समुद्रवत्म नापगच्छतु[1] । तेन तदिहैव तिष्ठत्वित्यभिप्रायः । हे आपो यत् पयो मदीयापानयोग्यं तत्र मया प्रहितमितीहैव तिष्ठतु । ततोऽन्या या आपस्ता मया समुद्रं प्रहिता अस्माकमहिंसका भूत्वा समुद्रं गच्छन्त्विति वाक्यार्थः ।

तत आचमने पारस्करः—आचामत्या मा गन् यशसेति ।

**आ मा गन् यशसा सꣳसृज वर्चसा तं मा कुरु ।**
**प्रियं प्रजानामधिपतिं पशूनामरिष्टिं तनूनाम् ॥ २८५**

[ पा गृ १, ३, १५ । आप म २, ९, १२ द्र: ]

हे जल मा मां यशसा आगन् आगमय यशस्विनं मां कुर्वित्यर्थः । तथा त्वं मा मां वर्चसा तेजसा संसृज संसृष्टं कुरु तेजस्विनं कुर्वित्यर्थः । तथा मा मां प्रजानां प्रियं कुरु । पशूनां गवादीनाम् अधिपतिम् ईश्वरं कुरु । तनूनां देहावयवानाम् अरिष्टिम् आपद्रहितत्वं कुर्वित्यनेनैव सम्बन्धः । हे जल अनेनाचमनेन मम यशस्वित्वतेजस्वित्वलोकप्रियत्वगवादिमत्त्वापद्रहितदेहत्वानि कुर्वित्याशंसा वाक्यार्थः । अत्र आगन्निति [2]गमधातोरन्तर्भावितण्यन्तादाङ्-पूर्वे कृते लोण्मध्यमपुरुषैकवचने रूपम् । बहुलं छन्दसीति ( पा २, ४, ७६ ) बहुलवचनात् शपो लुक् । वा छन्दसीति ( पा ३, ४, ८८ ) विकल्पेन विधानात् सेर्ह्यादेशो न भवति । इतश्च ( पा ३, ४, १०० ) इतोकारलोपः । [3]हलादि-लक्षणेन ( पा ६, ४, ६० द्र: ) सकारलोपः । मो नो धातोरिति ( पा ८, २, ६४ ) मकारस्य नकारः ।

---

१ त—तत् परासिक्तं मा प्रहितं न क्षरतु । प—न रक्षतु । नापगच्छतु ।

२ त—गमधातोरन्तर्भूतण्यर्थत्वादाङ्° । प—गमधातोरन्तर्भावाण्यन्तादाङ्° ।

३ छ—हल्ङ्यादि° । प—हल्ङ्यादि° ।

ततो मधुपर्कावेक्षणे पारस्करः—मित्रस्य त्वेति मधुपर्कं प्रतीक्षत इति।

**मित्रस्य त्वा चक्षुषा प्रतीक्षे ॥ २८६**

[ का स २, २२ । पा गृ १, ३, १६ । आ गृ १, २४, १४ ]

हे मधुपर्क मित्रस्य आदित्यस्य चक्षुषा त्वा त्वां प्रतीक्षे पश्यामि। अहमादित्येन चक्षुर्दानेनानुगृहीतस्त्वां मधुपर्कं पश्यामीति वाक्यार्थः।

ततो मधुपर्कग्रहणे पारस्करः—देवस्य त्वेति प्रतिगृह्णाति।

**देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे ॥ २८७**

[ वा स १, २४ । का स २, २२ । पा गृ १, ३, १७ ]

हे मधुपर्क त्वा त्वामाददे प्रतिगृह्णामि। कस्मिन् सति—देवस्य सवितुः आदित्यस्य प्रसवे अभ्यनुज्ञाने सम्मताविति यावत्। प्रपूर्वः सुवतिरभ्यनुज्ञाने वर्तत इत्युवटो[1] [2]गुणविष्णुश्च।[3] ग्रहणं केन—अश्विनोः अश्विनोकुमारयोर्बाहुभ्याम्। तथा पूष्णः आदित्यस्य हस्ताभ्याम्। सवितुः सम्मतौ अश्विनोकुमाराभ्यां बाहुदानेनानुगृहीतः पूष्णा च हस्ताच्छादनेनानुगृहीतस्त्वां मधुपर्कं गृह्णामीति वाक्यार्थः।

ततो मधुपर्कमिश्रणे पारस्करः—त्रिः प्रयोजयति नमस्यावाश्यायानीति[4]।

**नमस्यावाश्यायान्यशने यत्त आविद्धन्तत्ते निष्कृन्तामि ॥ २८८**

[ पा गृ १, ३, १८—नमः श्यावास्यायान्नशने ]

अत्र नमस्यशब्देन मधुपर्को विवक्षितः। तेनायमर्थः। हे नमस्य नमस्कारार्ह मधुपर्क अवाश्यायानि। त्वामित्यध्याहार्यम्। त्वां मिश्रयाणीत्यर्थः।

---

१ क—इति गतौ। ङ—इति उक्तौ। च—ट—इति। छ—इति उवटः। ज—झ—उवटः। त—इत्युवटः। न—इति। प—नास्ति।

२ क—च—ट—गुणविष्णुः। ङ—ज—झ—गुणविष्णुश्च। न—गणविशिष्टस्य। प—गुणविशिष्टस्य। व—गुणविशिष्टस्य।

३ वाजसनेय-मन्त्रभाष्यगतामुवटोक्तिं ( वा स १, १० ) तथा छान्दोग्यमन्त्रभाष्यगतां ( ४, ५६ ) गुणविष्णूक्तिमुदाहरत्यत्र हलायुधः। तेन छान्दोग्यमन्त्रभाष्यभूमिकायां मत्प्रतिपादितं गुणविष्णोः प्राचीनत्वं प्रमाणान्तरेणैतेन दृढीकृतमास्ते।

४ नमः श्यावास्यायान्नशन इति पारस्करगृह्यदृष्टः पाठ एव गृह्यभाष्यकारैर्व्याख्यातः। ब्राह्मणसर्वस्वीयमातृका-पुस्तकेषु तु मन्त्रपाठो मन्त्रव्याख्यानञ्चान्यथाकृतं लभ्यते। शत्रुघ्नमिश्रोऽपि मन्त्रार्थदीपिकायां ब्राह्मणसर्वस्वमेवानुसरति।

किञ्च—ते तव अशने भोजने यत् आविद्धम् उपहितं[1] तत् ते तव निष्कृन्तामि अपसारयामि। नमस्तेति स्तुतिपूर्वकं सम्बोध्य त्वां मिश्रयाणि तवोपहितञ्च[2] स्फोटयामीति वाक्यार्थः। अवाश्यायानीति श्यैङ् गतौ इत्यस्य धातोश्छान्दसत्वेनात्मनेपदं न भवति। अवपूर्वे आङ्पूर्वे च कृते सोपसर्गत्वान्मिश्रणार्थत्वम्। लोडुत्तमपुरुषैकवचने रूपम् ॥ २८८ ॥

ततो मधुपर्कप्राशने पारस्करः—तस्य त्रिः प्राश्नाति यन्मधुनो मधव्यमिति।

**यन्मधुनो मधव्यं परमं रूपमन्नाद्यं तेनाहं मधुनो मधव्येन परमेण रूपेणान्नाद्येन परमो मधव्योऽन्नादोऽशानि ॥ २८९**

[ पा गृ १, ३, २० ऽन्नादोऽसानि। आप म—२, १०, ५ द्रः। हि गृ १, १३ ८—ऽन्नादो भूयासम् ]

मधुनः यत् रूपं स्वरूपम्। किम्भूतम्—मधव्यम् मधुरम्। पुनः किम्भूतम्—परमम् उत्कृष्टम्। अपि च किम्भूतम्—अन्नाद्यम् अन्नादिकमिव। यथा अन्नाद्यमुपभुक्तं[3] सद् बलादिकमादधाति तथेदमपीत्यर्थः। तेन मधव्येन परमेण रूपेणान्नाद्येन। अत्र सर्वत्रैव द्वितीयायां तृतीया। तथा चैवं योज्यम्। तन्मधुनो मधव्यं परमं [4]रूपमन्नाद्यमहमशानि भक्षयामि। मधव्यमित्यादि पुनःपुनर्यद्विशेषणं तदतिशयद्योतनार्थम्[5]। किम्भूतोऽहम्—परमः उत्तमः। मधव्यो मधुरशीलः। अन्नादः [6]अन्नमत्तीति अन्नादः। मधुनः स्वरूपमुत्कृष्टं[6] [7]मधुरं बलाधायकमुत्कीर्त्य[7] [8]तदेवम्भूतमहमुत्कर्षाय मधुरशीलत्वाय अन्नादनाय च भक्षयामीत्याशंसा वाक्यार्थः[8] ॥ २८९ ॥

ततो मुखादिप्राणसंमर्शने पारस्करः—आचम्य प्राणान् सम्मृशति वाङ्म आस्य इति।

**वाङ्म आस्ये नसोः प्राणोऽक्ष्णोश्चक्षुः कर्णयोः श्रोत्रम् बाह्वोर्बलमूर्वोरोजोऽरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सह ॥ २९०**

[ पा गृ १, ३, २५। तै स ५, ५, ९, २ द्रः ]

---

१ क—ङ—च—छ· ·°मुपहृतं। प—मुपहृतं।

२ ङ—°पहृतञ्च। च—°पस्थितञ्च। छ—°पहृतं। त—°तवाहितं। प—°पहृतं।

३ छ—प— .मुपयुक्तं।

४ प—अन्नाद्यं रूपमहम

५ छ—प—तदादरातिशयद्योतनार्थं। त—तदादरातिशयार्थम्।

६ त—भक्षकः।

७ त—नास्ति। प—मधुरत्वबलाधायकमित्युत्कीर्त्य।

८ त—तदेवम्भूतमुत्कर्षाद्यर्थं भक्षयामीति।

मे मम आस्ये मुखे वाक् वचनमस्तु। मे मम नसोर्नासिकयोः प्राणः श्वासवायुरस्तु। मे मम अक्ष्णोः चक्षुर्गोलकयोः चक्षुः इन्द्रियमस्तु। मे मम कर्णयोः कर्णशष्कुल्योः श्रोत्रम् इन्द्रियमस्तु। मे मम बाह्वोः बलं सामर्थ्यमस्तु ऊर्वोः ओजः पटुत्वमस्तु।[1] मे मम अङ्गानि शिरःप्रभृतीनि अरिष्टानि आपद्रहितानि सन्तु। मे मम तनुः देहावयवा हस्तादयः अरिष्टाः सन्त्विति सम्बन्धः। कया सह—तन्वा सह देहावयविना सहेत्यर्थः। अनेनाचमनान्तरकृतेनेन्द्रियस्पर्शनेन मम मुखाद्यवयवेषु वचनादिशक्तिः सातिशयनिरापत्त्वञ्च[2] मम भवत्वित्याशंसा वाक्यार्थः ॥ २९० ॥

ततो गोदर्शने[3] पारस्करः—प्रत्याह माता रुद्राणामिति।

**माता रुद्राणां दुहिता वसूनाᳪ स्वसादित्यानाममृतस्य नाभिः।**
**प्र नु वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट ॥ २९१**

[ ऋ स ८, १०१, १५। पा ग १, ३, २७। म ब्रा २, ८, १५ ]

**मम चामुष्य च पाप्मा हत। ओमुत्सृजत तृणान्यत्तु ॥ २९२**

[ पा गृ १, ३, २८ ]

प्रथमत उत्तरार्धं योज्यते। नु भोः अर्हणाकर प्रवोचम् प्रकर्षेणावोचं पुनः पुनरुक्तवानस्मीत्यर्थः। कस्मै—जनाय अविशिष्टजनशब्दोपादानेन यस्मै कस्मैचित् प्राणिमात्रायेत्यर्थः। यस्य श्रवणेच्छा नास्ति तस्योपदेशाभिधानमयुक्तमित्याशङ्क्य जनायेत्यस्य विशेषणमाह—चिकितुषे जिज्ञासवे[4] शुश्रूषव इति यावत्। किं वदसीत्याकाङ्क्षायामाह—गां मा वधिष्ट मा मारयत[5]। किम्भूताम्—अनागाम् अनपराधाम्। पुनः किम्भूताम्—अदितिम्। दितिः खण्डनं हिंसा साऽस्या नास्तीति अदितिः। सा का—या गौः रुद्राणां माता वसूनां दुहिता आदित्यानां स्वसा अमृतस्य देवानामाहारभूतस्य घृतस्य नाभिः उत्पत्तिस्थानम् ॥ २९१ ॥

किञ्च मम च अर्हणीयस्य अमुष्य च अर्हणाकर्तुश्च पाप्मा पापं हत नाशयत[6]। ओमिति मदीयवचनमनुमत्य उत्सृजत मुञ्चत। गामिति पूर्वेण सम्बन्धः। तृणान्यत्तु खादतु। गौर्मुक्ता सतीति सन्निहितत्वाद्

---

१ त—इति सर्वत्र योज्यम् इत्यधिकम्।
२ क—ङ—च—छ निरापदत्वञ्च। त—नास्ति।
३ त—गामोचने।
४ त—ज्ञानहेतवे।
५ छ—प—मारय।
६ छ—ट—नाशयतु। प—नाशय।

योज्यम्। माता रुद्राणामित्यादिना गां स्तुत्वा मा वधिष्टेति निषिध्याहं णीयस्याहं णाकतुं स्व पापक्षयाय गामुत्सृजत[1]। गौर्मुक्ता सती तृणानि खादत्वित्याशंसा वाक्यार्थः ॥ २९२ ॥

ततो वरेण कन्याया वस्त्रपरिधापने पारस्करः—अथैनां वासः परिधापयति जरां गच्छ परिधत्स्वेति।

**जरां गच्छ परि धत्स्व वासो भवाकृष्टीनामभिशस्तिपावा।**
**शतञ्च जीव शरदः सुवर्चा रयिञ्च पुत्राननु सं व्ययस्व ॥**
**आयुष्मतीदं परि धत्स्व वासः ॥ २९३**

[ पा गृ १, ४, १२, आप म २, २, ७—गच्छामि। भवा कृष्टीना॰। रायश्च पोषमुप सं। ध स १९, २४, ५ द्रः ]

हे आयुष्मति कन्यके जरां गच्छ वृद्धत्वं याहि चिरजीविनी भवेत्यर्थः। किञ्च वासः परिधत्स्व वस्त्रं धारय। वस्त्रविमुक्ता कदाचिदपि मा भवेत्यर्थः। किञ्च आकृष्टीनां भव। आकृष्टीनामिति प्रथमायां षष्ठी। तेनाकृष्टी मनोहरा भवेत्यर्थः। अभिशस्तिपावा भव अभिशस्तिः शयनं तत्र पावा पवित्रा। मनोहरा सती शयने पवित्रा भवेत्यर्थः। किञ्च शतं शरदः जीव। किम्भूता—सुवर्चाः शोभनदीप्तियुक्ता शतं वर्षाणि जीवेत्यर्थ। किञ्च रयिं धनम् अनुसंव्ययस्व संवृणु। न केवलं धनं पुत्रांश्च अनुसंव्ययस्व संवृणु। यदेतन्मया [2]आशंसितं तत्प्राप्तये इदं वासः परिधत्स्व संवृणु। चिरजीवित्वार्थं वस्त्रबद्धा त्वं शय्यायां मनोहरत्वार्थं पवित्रत्वार्थं धनार्थं पुत्रार्थञ्च इदं वस्त्रं परिधत्स्वेति वाक्यार्थः। अनुसंव्ययस्व इति व्येञ् संवरणे इत्यस्य धातोरनुसंपूर्वस्य लोटि सिपि रूपम् ॥ २९३ ॥

ततः कन्याया उत्तरीयकरणे पारस्करः—अथोत्तरीयं या अकृन्तन्निति।

**या अकृन्तन्नवयन् या अतन्वत याश्च देवीस्तन्तूनभितोऽततन्थ।**
**तास्त्वा देवीर्जरसे सं व्ययस्वायुष्मतीदं परि धत्स्व वासः ॥ २९४**

[म ब्रा १, १, ५—व्ययन्त्वायु॰। पा गृ १, ४, १३। आप म २, २, ५—देवीरन्तानभितोऽददन्त। व्ययन्त्वायुष्मानिदं ]

हे आयुष्मति याः देवीः देव्यः तन्तून् अकृन्तन् कर्तितवत्यः। तथा याः तन्तून् अवयन् वापितवत्यः[3]। तथा याः तन्तून् अतन्वत विस्तारितवत्यश्च। ताः देव्यः त्वा त्वां संव्ययस्व संव्ययन्तु परिधापयन्त्वित्यर्थः। तथा च सति त्वम् इदम् वासः

---

१ छ—त—गामुत्सृजेत्। २ त—आशासितं। प—सुशोपितं। ३ ओतवत्यः।

अततन्थ विस्तारय। कथङ्कारम्[1]—अभितः उभयतः प्रस्तारेण[2] दैर्घ्येण च विस्तार्य परिधत्स्व। किमर्थम्—जरसे [3]वृद्धत्वार्थं चिरजीवित्वार्थमिति यावत्[3]। याभिर्देवीभिः सूत्रनिष्पादनादिना इदं वस्त्रं निष्पादितं ताभिः परिधापितम्। अतः[4] इदमुत्तरीयं वस्त्रं त्वं विस्तार्य परिधत्स्वेति वाक्यार्थः। अत्रावयन्निति वेञ् तन्तुसन्ताने इत्यस्य रूपम्। देवीरिति [5]प्रथमार्थे द्वितीया[5]। अततन्थेति तनु विस्तारे इत्यस्य लिण्मध्यमपुरुषैकवचने बहुलं छन्दस्यमाङ्योगेऽपि (पा ६, ४, ७५) इत्यड़ागमः। संव्ययस्वेति तिङां तिङो भवन्तीति प्रथमपुरुष-बहुवचने मध्यमपुरुषैकवचनम्॥ २८४॥

ततः कन्यावरयोरेकीकरणे पारस्करः—अथैनौ समञ्जयति समञ्जन्तु विश्वे-देवा इति।

**समञ्जन्तु विश्वे देवाः समापो हृदयानि नौ।**
**सम्मातरिश्वा सन्धाता समुदेष्ट्री दधातु नौ॥ २८५**

[ऋ स १०, ८५, ४७। म ब्रा १, २, १५। पा गृ १, ४, १४]

हे विश्वेदेवा नौ आवयोः हृदयानि हृदये समञ्जन्तु संगमयन्तु[6]। अपि तु आपः पानीयानि समञ्जन्तु। नौ हृदयानीत्यनेनैव सम्बन्धः। पानीयेनोत्-सर्गपूर्वकं दत्तायास्तव हृदयं मम हृदयेन सङ्गतं भवत्वित्यभिप्रायः। तथा मातरिश्वा आवयोः प्राणवायुः नौ आवां सन्दधातु संयोजयतु। तथा धाता प्रजापतिः नौ आवां सन्दधातु। तथा उदेष्ट्री इच्छाकर्त्री देवता कामदेवः नौ आवां सन्दधातु। देवा आपश्चावयोर्हृदयद्वयमेकीकुर्वन्तु। आवयोः प्राणवायुः प्रजापतिः कामदेवश्च आवां संयोजयत्वित्याशंसा वाक्यार्थः। [7]संदधात्विति व्यवहितेन समा[7] सम्बन्धः। हृदयानीति द्विवचने बहुवचनम्। उदेष्ट्रीति इषु इच्छायामित्यस्योत्पूर्वस्य तृचि कृते आगमशासनानाम-नित्यत्वादिड् न भवति। देवतार्थत्वेन स्त्रीत्वविवक्षायां ङीप्॥ २८५॥

---

१ त—केन प्रकारेण।
२ ङ—छ—विस्तारेण।
३ त—चिरजीवनाय।
४ त—प—सत्।
५ क—जसि पूर्वसवर्णः। छ—वा छन्दसीति प्रथमाबहुवचनेऽपि पूर्वसवर्णत्वम्। प—छन्दसीति प्रथमाबहुवचने रूपम्।
६ प—सम्यं गच्छन्तु।
७ छ—त—प—व्यवहिताश्चेति वचनेन सम्पूर्व-दधातिक्रियायाः।

ततः कन्यां प्रतिगृह्य कामस्तुतिपाठे कात्यायनः [ का श्री १०, २, २८ ] कोऽदादित्यन्यदिति ।

**कोऽदात् कस्मा अदात् कामोऽदात् कामायादात् ।**
**कामो दाता कामः प्रतिग्रहीता कामैतत्ते तव काम सता भुनजामहै ॥ २९६**

[ का स ९, १४ । वा स ७, ४८ द्रः । ]

कः अदात् दत्तवान् । कस्मै अदात् । प्रश्नद्वयमेतत् । अत्र उत्तरद्वयम्—कामः अदात् कामाय अदात् । यतः कारणात् कामो दाता कामः प्रतिग्रहीता अतो हे काम एतद् यद्दत्तं प्रतिगृहीतं च तदेतत् ते तव । तथा च सति हे काम तव [1]सता त्वत्सम्बन्धिभूतं[1] सत् एतत् कन्यादिकं भुनजामहै उपभुञ्जामः । सर्वत्रैवात्र कामशब्देनेच्छाभिधीयते । यत इच्छायां सत्यामेव दीयते प्रतिगृह्यते च अत इच्छैव ददाति प्रतिगृह्णाति च । यत् स्वयमेव दात्री प्रतिग्रहीत्री च अतस्तस्या एवैतदिति कामस्तुतिः । कामस्तुतिपूर्वकं कामस्यैवैतद्द्रव्यं[2] वयमुपभुञ्जाम इत्याशंसा वाक्यार्थः । सतेति द्वितीयायां तृतीया छन्दसि ॥ २९६ ॥

ततः कन्याप्रतिग्रहणानन्तरपाठे पारस्करः[3]—अथ यदन्यत् प्रतिगृह्णाति द्यौष्ट्वेति ।

**द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णातु ॥ २९७**

[ पा गृ ३, १५, २१ । हि गृ १, १३, १७—द्यौस्त्वे ददातु पृथिवी प्रतिगृह्णातु ]

हे कन्ये त्वा त्वां द्यौः आकाशं ददातु । पृथिवी जगती धात्री त्वा त्वां प्रतिगृह्णातु । व्यक्तार्थमेव । तवायं पिता आकाशमिव । अहं पृथिवीव । यथा पृथिवी विश्वेषामाश्रयः तथा तवाश्रयभूतस्त्वां प्रतिगृह्णामीति वाक्यार्थः ॥ २९७ ॥

ततः कन्यावरयोर्बहिर्निष्क्रमणे पारस्करः—गृहीत्वा निष्क्रामति यदैषीति ।

**यदैषि मनसा दूरं दिशोऽनु पवमानो वा ।**
**हिरण्यपर्णो वैकर्णः स त्वा मन्मनसां करोम्यसौ ॥ २९८**

[ पा गृ १, ४, १५—करोमित्यसौ ]

असौ हे कन्ये त्वं यत् मनसा हृदयेन दूरम् एषि गच्छसि । पितृकुलतोऽहं बहिर्भूता केन कुत्र नीय इति हृदयेन दूरं यासि । सोत्कण्ठा भवसीति

---

1 क२—सद्भावेन दानभूतं तव सम्बन्धि° ।
छ—सता तव तवैव तत्सम्बन्धि° ।
त—सत्वत्वेन सम्बन्धि भूतमेतत्कन्यादिकं भुञ्जयाम इति पुस्तकान्तरे दृष्टमिति । तव सम्बन्धिजातं ।

2 न—वैतद्द्रष्टव्यं ।

3 पारस्कर-पाठस्तु ( ३, ५, २१ ) अथ यदि किञ्चिल्लभेत तत् प्रतिगृह्णाति ।

यावत्। तत्र दिश: प्राच्यादिदशदिश:। अनु तदनन्तरम्। पवमान:। वाशब्द: समुच्चयार्थ:। वायुरित्यर्थ:। हिरण्यपर्ण: हिरण्यं पर्णं रथोऽस्येति हिरण्यपर्ण आदित्य:। वैकर्ण: विकर्णे कोणे तिष्ठतीति वैकर्णोऽग्नि:। स ते उक्ता दिग्वायुसूर्याग्नय: त्वा त्वां मन्मनसां मद्गतहृदयां[1] करोमि। हे कन्ये पितृकुलतो बहिर्भूताहं केन कुत्र नीय इति यत् त्वं सोत्कण्ठा भवसि तत: तत्र दिग्वायुसूर्याग्नयस्त्वां मद्गतहृदयां[1] करोत्वित्याशंसा वाक्यार्थ:। अत्र स इति प्रथमाबहुवचने सुपां सुपो भवन्तीत्येकवचनम्। कुर्वन्त्विति प्राप्ते करोमीति व्यत्ययेनोत्तमपुरुषैकवचनम्॥ २९८॥

तत: कन्यावरयोरन्योन्यदर्शने[2] पारस्कर:—अथैनौ समीक्षयत्यघोरचक्षुरिति।

**अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्य: सुमना: सुवर्चा:।**
**वीरसूर्देवकामा स्योना शं नो भव द्विपदे शं चतुष्पदे॥ २९९**

[ऋ स १०, ८५, ४४। पा ग १, ४, १६]

**सोम: प्रथमो विविदे गन्धर्वो विविद उत्तर:।**
**तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजा:॥ ३००**

[ऋ स १०, ८५, ४०। पा ग १, ४, १६]

**सोमोऽददद्गन्धर्वाय गन्धर्वोऽददग्नये।**
**रयिञ्च पुत्रांश्चादादग्निर्मह्यमथो इमाम्॥ ३०१**

[ऋ स १०, ८५, ४१। पा ग १, ४, १६]

**सा न: पूषा शिवतमामैरय सा न ऊरू उशतीर्विहर।**
**यस्यामुशन्त: प्रहराम शेपं यस्यामु कामा बहवो निविष्ट्यै॥ ३०२**

[पा ग १, ४, १६]

हे कन्ये अपतिघ्नी एधि भव। किम्भूता—अघोरचक्षु: अघोरम् अभीषणं सौम्यं चक्षु: पतिविषये यस्या: सा तथा। किञ्च पशुभ्य: शिवा गवादिभ्य: कल्याणकारिणी। सुमना: [3]सुशोभनम् अनुकूलं मनो यस्या:[3] सा। सुवर्चा: शोभनदीप्ति:। वीरसू: वीरं वीर्यवन्तं पुत्रं सूते इति वीरसू:। देवकामा देवनं क्रीड़नं कामयते इच्छति या सा। स्योना सुखिनी न: अस्माकं द्विपदे मनुष्यपरिजने

---

१ प—मद्गतहृदयां।
२ प— वरयोरेकीकरणे।
३ त—शोभनमना:।

शम् कल्याणकारिणी। भवेति क्रियापदं [1]शिवा पशुभ्य इत्यादिभिः मन्त्रैरेव सम्बध्यते[1]। तथा चतुष्पदेऽश्वादौ शम् भव ॥ २९९ ॥

[2]इत्थमाशास्य कन्यास्तुतिमाह[2]। हे कन्ये त्वां सोमः चन्द्रः प्रथमः जन्मसमये एव विविदे लब्धवान्। गन्धर्वः उत्तरः द्वितीयो विविदे लब्धवान्। ते तव तृतीयः पतिरग्निः।

पूर्वं स्त्रियः सुरैर्भुक्ताः सोमगन्धर्ववह्निभिः।[3]
सोमः शौचं ददौ तासां गन्धर्वश्च शुभां गिरम्।
पावकः सर्वमेध्यत्वं मेध्या वै योषितो ह्यतः॥

इत्यभिप्रायमेतत्। तथा ते तव तुरीयः चतुर्थः पतिः मनुष्यजाः[4] मनुष्याज्जातोऽहमित्यर्थः ॥ ३०० ॥

किमिदानीं चतुर्णामेवेयं पत्नीत्याशङ्क्याह[5]—सोमः इमां गन्धर्वाय अददत् गन्धर्वः अग्नये इमाम् अददत्। अथो अनन्तरं अग्निः इमां मह्यम् अदात् दत्तवान्। न केवलमिमां रयिं च धनमपि पुत्रांश्च पुत्रानपि मह्यमददिति सम्बन्धः ॥ ३०१ ॥

सा इयं नः अस्मान् मा ऐरयत् न त्यजतु। किम्भूता—पूषा वृद्धिकारिणी। पुनः किम्भूता—शिवतमा अतिकल्याणा। किञ्च यस्यां त्वयि उशन्तः इच्छन्तो वयं शेपम् इन्द्रियं प्रहराम प्रक्षिपाम। सा त्वम् ऊरू विहर प्रसारय। किम्भूता—नः अस्मान् उशती इच्छती। [6]उ किञ्च[6]। यस्यां त्वयि बहवः कामाः अभिलषितानि निविष्टै निवेशिताः ॥ ३०२ ॥

ततो राष्ट्रभृद्धोमे पारस्करः—विवाहे राष्ट्रभृदिच्छन्निति। तत्र द्वादश मन्त्राः[7]—

**ऋताषाडृतधामाग्निर्गन्धर्वः।**
**स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ॥ ३०३**

[ वा स १८, ३८। का स २०, ८ ]

---

१ त—सर्वत्र योज्यम्।

२ त—इत्थमाशंसन्। स्तुतिमाह।

३ रोमोद्भेदे शशी भुङ्क्ते गन्धर्वः कुचदर्शने।
अनलस्तु रजोयोगे कन्यां भुङ्क्ते न चान्यथा॥
इत्यधिकं प—पुस्तके।
संस्कारगणपतिधृतः सवर्त-पाठस्तु
रोमकाले तु सम्प्राप्ते सोमो भुङ्क्ते तु कन्यकाम्।
रजःकाले तु गन्धर्वो वह्निस्तु कुचदर्शने॥

४ प—मनुष्यजः।

५ त—पत्नीतात आह।

६ त—किञ्चार्थे उशब्दः।

७ ऋताषाडित्यादयः षण्मन्त्राः कर्मानुष्ठानार्थं स्त्रीपुंसदेवताभेदेन विभाज्य द्वादश सम्पादिताः। अत्र कात्यायनश्रौतसूत्रम् (१८, ५, १६)—'प्रतिस्वाहाकारं राष्ट्रभृतो वाट्कारान्तः पूर्वः पूर्वो मन्त्र' इति। शतपथब्राह्मणञ्च (९, ४, १, ६)—··'वाट्कारेण च स्वाहाकारेण च पुंसे जुहोति स्वाहाकारेणैव स्त्रीभ्य' इति।

योऽग्निर्गन्धर्वरूपस्तस्मै अग्नये स्वाहा सुहुतम्। तत् वाट् वहतु। सुहुतं तदस्त्वित्यर्थः। किम्भूतोऽग्निः—ऋताषाट् ऋतं सत्यं सहते इति ऋताषाट् सत्यसहकृत इत्यर्थः। पुनः किम्भूतः—ऋतधामा ऋतं सत्यं धाम स्थानं यस्येति ऋतधामा। किमर्थं तस्मै स्वाहा—स नः अस्माकम् इदं ब्रह्म ज्ञानं क्षत्रं वीर्यञ्च पातु रक्षतु। गन्धर्वरूपायाग्नये सत्यसहिताय सत्यस्थानाय चास्माभिरिदमाज्यं दत्तम्। सोऽस्माकं ज्ञानं वीर्यञ्च रक्षत्वित्याशंसा वाक्यार्थः॥ ३०३॥

**ऋताषाडृतधामाग्निर्गन्धर्वः।**

**तस्यौषधयोऽप्सरसो मुदो नाम ताभ्यः स्वाहा॥ ३०४**

[वा स १८, ३८। का स २०, ८]

योऽयम् ऋताषाडृतधामाग्निर्गन्धर्वस्वरूप इत्युक्तार्थम्। तस्याग्नेर्गन्धर्वस्याप्सरसः ओषधयः व्रीह्यादयः। किम्भूताः—मुदो नाम मुन्नाम्न्य इत्यर्थः। ताभिः सर्वे मोदन्ते इति मुदः। ताभ्य ओषधिभ्यः स्वाहा सुहुतं भवतु। अग्नेर्गन्धर्वस्याप्सरोभ्यो मुन्नाम्नीभ्य ओषधिभ्यः अस्माभिरिदमाज्यं दत्तम्। ता अस्माकं ज्ञानं वीर्यञ्च रक्षन्त्वित्याशंसा वाक्यार्थः॥ ३०४॥

**संहितो विश्वसामा सूर्यो गन्धर्वः।**

**स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट्॥ ३०५**

[वा स १८, ३९। का स २०, ९]

यः सूर्यो गन्धर्वः। किम्भूतः—संहितः दिवसं रात्रिञ्च संन्दधातीति संहितः। पुनः किम्भूतः—विश्वसामा सर्वसामवेदमयः। अपरं सर्वं[1] समानम्॥ ३०५॥

**संहितो विश्वसामा सूर्यो गन्धर्वः।**

**तस्य मरीचयोऽप्सरस आयुवो नाम ताभ्यः स्वाहा॥ ३०६**

[वा स १८, ३९। का स २०, ९]

तस्य सूर्यस्य गन्धर्वस्य अप्सरसः मरीचयः रश्मयः। किम्भूताः—आयुवो नाम। आयुवन्ति आयोजयन्तीत्यायुवः आयुनाम्न्य इत्यर्थः। अपरं समानम्॥ ३०६॥

---

१ न—पूर्वेण।

**सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वः ।**

**स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ॥ ३०७**

[ वा स १८, ४० । का स २०, १० ]

यः चन्द्रमाः गन्धर्वः । किम्भूतः—सूर्यरश्मिः सुषुम्णः सुषुम्णनामा । अपरं समानम् ॥ ३०७ ॥

**सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वः ।**

**तस्य नक्षत्राण्यप्सरसो भेकुरयो नाम ताभ्यः स्वाहा ॥३०८**

[ वा स १८, ४० । का स २०, १० ]

तस्य चन्द्रमसो गन्धर्वस्य अप्सरसः नक्षत्राणि । किम्भूतानि—भेकुरयो नाम । भाः हि नक्षत्राणि कुर्वन्तीति ( श ब्रा ९, ४, १, ९ ) भेकुरयः । अपरं समानम् ॥ ३०८ ॥

**इषिरो विश्वव्यचा वातो गन्धर्वः ।**

**स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ॥ ३०९**

[ वा स १८, ४१ । का स २०, ११ ]

यो वातो गन्धर्वः । किम्भूतः—इषिरः गमनस्वभावः । पुनः किम्भूतः—विश्वव्यचाः सर्वगः । अपरं समानम् ॥ ३०९ ॥

**इषिरो विश्वव्यचा वातो गन्धर्वः ।**

**तस्यापः अप्सरस ऊर्जो नाम ताभ्यः स्वाहा ॥ ३१०**

[ वा स १८, ४१ । का स २०, ११ ]

तस्य वातस्य गन्धर्वस्य अप्सरसः आपो जलानि । किम्भूताः—ऊर्जो नाम ऊर्ज इति नाम यासाम् । अपरं समानम् ॥ ३१० ॥

**भुज्युः सुपर्णो यज्ञो गन्धर्वः ।**

**स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ॥ ३११**

[ वा स १८, ४२ । का स २० १२ ]

यो यज्ञो गन्धर्वः । किम्भूतः—भुज्युः सर्वाणि भूतानि भुनक्ति पालयतीति भुज्युः । सुपर्णः शोभनपर्णः सुगतिरिति यावत् । अपरं समानम् ॥ ३११ ॥

**भुज्युः सुपर्णो यज्ञो गन्धर्वः ।**

**तस्य दक्षिणा अप्सरसः स्तावा नाम ताभ्यः स्वाहा ॥ ३१२**

[ वा स १८, ४२ । का स २०, १२ ]

[1]तस्य यज्ञस्य[1] गन्धर्वस्य अप्सरसः दक्षिणाः। किम्भूताः—स्तावा नाम दक्षिणायां दत्तायां यज्ञः स्तव्यो भवतीति स्तावाः। अपरं समानम् ॥ ३१२ ॥

**प्रजापतिर्विश्वकर्मा मनो गन्धर्वः।**

**स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ॥ ३१३**

[ वा स १८, ४३। का स २०, १३ ]

यत् मनः इन्द्रियं गन्धर्वः। किम्भूतः—प्रजापतिः प्रजानां पतिरीश्वरः। पुनः किम्भूतः—विश्वकर्मा विश्वं कर्म यस्य। मनसो व्यापारेण विश्वनिर्माणात्। अपरं समानम् ॥ ३१३ ॥

**प्रजापतिर्विश्वकर्मा मनो गन्धर्वः।**

**तस्य ऋक्सामान्यप्सरस एष्टयो नाम ताभ्यः स्वाहा ॥ ३१४**

[ वा स १८, ४३। का स २०, १३ ]

तस्य मनसो गन्धर्वस्याप्सरसः। ऋक्सामानि ऋचश्च सामानि चेति ऋक्सामानि। किम्भूतानि—एष्टयो नाम। आ इष्टिः एष्टिः इच्छा पुत्रादिः। इच्छया ऋगादिमन्त्रप्रयुक्तौ पुत्रादिः सम्पद्यत इत्यभिप्रायः ॥ ३१४ ॥

ततो जयाहोमे पारस्करः [ १, ५, ७ ] जयाभ्यातानांश्चेति। तत्र चित्तमित्यादित्रयोदश मन्त्राः—

**चित्तञ्च स्वाहा। चित्तिश्च स्वाहा। आकूतञ्च स्वाहा। आकूतिश्च स्वाहा। विज्ञातञ्च स्वाहा। विज्ञातिश्च स्वाहा। मनश्च स्वाहा। शक्वरीश्च स्वाहा। दर्शश्च स्वाहा। पौर्णमासश्च स्वाहा। बृहच्च स्वाहा। रथन्तरञ्च स्वाहा ॥ ३१५—३२६**

[ तै स ३, ४, ४, १। पा गृ १, ५, ९ ]

तत्र शेषपठितप्रजापतिर्जयानिन्द्रायेत्यादिमन्त्रे मह्यं प्रजापतिर्जयं ददात्वित्याशंसा भविष्यति। सैवात्रापि चकारेण समुच्चिता। चित्तं ज्ञानञ्च मह्यं जयं ददात्वित्याशंसा वाक्यार्थः। चित्तिश्च परिच्छेदः। आकूतञ्चाभिमुख्यम्। आकूतिश्चात्मनो धर्मविशेषो येन मनसः प्रेरणं क्रियते। विज्ञातं शिल्पादिज्ञानम्। विज्ञातिश्च विज्ञातार्थः। मनः प्रसिद्धम्। शक्वरी च शक्तिः। शक्लृ शक्तौ। अन्येभ्योऽपि दृश्यन्त इति ( पा ३, २, ७५ ) क्वनिप्। वनो र चेति ( पा ४, १, ७ ) ङीप्। नस्य रेफः।[2] दर्शश्च प्रसिद्धः। पौर्णमासश्च प्रसिद्धः।

---

१ त—यतस्तस्य।

२ छत्रादिसूत्रपाठे तु ( उ ४, ११२ ) शक्वरीति पदस्य सिद्धये ध्मामदिपद्यर्तिपृशकिभ्यो वनिबिति सूत्रं दृश्यते।

बृहच्च सामविशेषः। रथन्तरञ्च सामविशेषः। वाक्यार्थः प्रथममन्त्रोक्त एव सर्वेषाम् ॥ ३१५—३२६ ॥

**प्रजापतिर्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः पृतनाजयेषु ।**
**[1]तस्मै विशः समनमन्त सर्वाः स उग्रः स इ हव्यो बभूव स्वाहा ॥३२७**

[ तै स ३, ४, ४, १—पृतनाज्येषु, स हि हव्यो। पा गृ १, ५, ९ ]

प्रजापतिः इन्द्राय जयान् प्रायच्छत् दत्तवान्। कस्मै इन्द्राय। वृष्णे वृषनाम्ने। किम्भूतः प्रजापतिः—पृतनाजयेषु उग्रः विपक्षसेनाविजयेषु विपक्षतेजोभिभावी। इन्द्रो देवराजस्तस्मै प्रजापतिर्जयं दत्तवानिति कथमेतत्। हि यतः कारणात् तस्मै प्रजापतये सर्वा विशः प्रजाः समनमन्त सम्यक् प्रणामं कृतवत्यः। यतश्च स प्रजापतिः उग्रः बभूव सर्वतेजोभिभावी बभूव। हव्यः बभूव हव्यद्रव्यार्हो बभूव। प्रजापतिः स्वयं विपक्षविजयी लोकस्य नमस्करणीयः सर्वतेजोभिभावी हव्यद्रव्यार्हश्चेन्द्राय जयान् प्रदत्तवानिति प्रजापतिस्तुतिर्वाक्यार्थः। इत्थमाहुतिदानेन तुष्टो मह्यं जयं ददात्वित्यभिप्रायः ॥ ३२८ ॥

ततोऽभ्यातानहोमे पारस्करः [ १, ५, ७ ] जयाभ्यातानांश्च जानन्निति। तत्राष्टादश मन्त्राः—

**अग्निर्भूतानामधिपतिः स माऽवत्वस्मिन् ब्रह्मन्नस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मन्नस्यान्देवहूत्यां स्वाहा ॥३२८**

[ तै स ३, ४, ५, १ । १८ । पा गृ १, ५, १० ]

यः अग्निः भूतानां प्राणिनाम् अधिपतिः प्रभुः स मा माम् अवतु पालयतु। कुत्र कुत्र—अस्मिन् ब्रह्मन् ब्रह्मणि ब्राह्मणे। अस्मिन् क्षत्रे वीर्ये अस्याम् आशिषि आशास्येऽर्थे अस्यां पुरोधायां पुरःस्थितायां[2] कन्यायाम्। अस्मिन् कर्मन् कर्मणि विवाहे। अस्यां देवहूत्यां देवानां हूतिराह्वानं तस्याम्। प्राणिनामधिपतिरग्निर्मां ब्राह्मणादिषु पालयत्वित्याशंसा वाक्यार्थः ॥ ३२८

**इन्द्रो ज्येष्ठानामधिपतिरित्यादि ॥ ३२९**

य इन्द्रः ज्येष्ठानां श्रेष्ठानाम् अधिपतिः। अधिपतिरित्यादि व्याख्यातम् ॥३२९॥

---

१ तस्मै विशः समनमन्त पूर्वीरयमुग्रो विहव्यो यथा सदिति वाजसनेयी मन्त्रः (वा स ८, ४६) प्रायेणास्य समार्थकः।

२ प—प्रयस्थितायां।

**यमः पृथिव्या अधिपतिः······ ॥ ३३०**

यो यमः पृथिव्या अधिपतिरिति च तथैव[1] ॥ ३३० ॥

**वायुरन्तरिक्षस्याधिपतिः··· ॥ ३३१**

यो वायुः अन्तरिक्षस्य अधिपतिः। समानमन्यत् ॥ ३३१ ॥

**सूर्यो दिवोऽधिपतिः··· ॥ ३३२**

दिवः स्वर्गस्य ॥ ३३२ ॥

**चन्द्रमा नक्षत्राणामधिपतिः··· ॥ ३३३**

नक्षत्राणाम् ज्योतिषाम् ॥ ३३३ ॥

**बृहस्पतिर्ब्रह्मणोऽधिपतिः··· ॥ ३३४**

ब्रह्मणः वेदस्य ॥ ३३४ ॥

**मित्रः सत्यानामधिपतिः··· ॥ ३३५**

सत्यानाम् अविनाशिनाम् ॥ ३३५ ॥

**वरुणोऽपामधिपतिः··· ॥ ३३६**

अपाम् पानीयानाम् ॥ ३३६ ॥

**समुद्रः स्रोत्यानामधिपतिः··· ॥ ३३७**

स्रोत्यानां नदीनाम् ॥ ३३७ ॥

**अन्नं साम्राज्यानामधिपतिः··· ॥ ३३८**

यत् अन्नम् साम्राज्यानाम् ऐश्वर्याणाम् अधिपतिः तदन्नं मामवत्वित्यादि समानम् ॥ ३३८ ॥

**सोम ओषधीनामधिपतिः··· ॥ ३३९**

ओषधीनां व्रीह्यादीनाम् ॥ ३३९ ॥

**सविता प्रसवानामधिपतिः··· ॥ ३४०**

यः सविता प्रसवानां प्रसूतिधर्मिणाम् ॥ ३४० ॥

**रुद्रः पशूनामधिपतिः··· ॥ ३४१**

यो रुद्रः पशूनां देवानाम् ॥ ३४१ ॥

---

१ प—व्याख्यातम्।

**त्वष्टा रूपाणामधिपतिः··· ॥ ३४२**

त्वष्टा विश्वकर्मा रूपाणाम् प्रतिमानाम् ॥ ३४२ ॥

**विष्णुः पर्वतानामधिपतिः··· ॥ ३४३**

पर्वतानां मेर्वादीनाम् ॥ ३४३ ॥

**मरुतो गणानामधिपतयस्ते माऽवन्तु··· ॥ ३४४**

मरुतः वायवः। गणानां समूहानाम् अधिपतयः ते मामवन्त्वित्यादि समानम् ॥ ३४४ ॥

**पितरः पितामहाः परेऽवरे ततास्ततामहा इह माऽवन्तु···॥३४५**

ये पितरः पितामहाः परे प्रपितामहाः अवरे तत्प्रपितामहाः तस्मादपि पूर्वे तताः तस्मादपि पूर्वे ततामहाः। एवं षट् पुरुषा उदाहृताः। पित्रादिषु प्रत्येकं बहुवचनं गौरवार्थम्। इह अस्मिन् लोके मा मामवन्त्वित्यादि समानम् ॥ ३४५ ॥

ततः पुनराज्यहोमि[1] पारस्करः—अग्निरैतु प्रथमो देवतानामिति।

तत्र पञ्च मन्त्राः—

**अग्निरैतु प्रथमो देवतानां सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात्। तदयं राजा वरुणोऽनु मन्यतां यथेयं स्त्री पौत्रमघं न रोदात् स्वाहा ॥ ३४६**

[पा गृ १, ५, ११]

अग्निः ऐतु आगच्छतु। किम्भूतः—देवतानाम् इन्द्रादीनां प्रथमः मुख्यः। आगत्य च सोऽग्निः अस्यै अस्याः कन्यायाः प्रजां पुत्रादिकं मुञ्चतु मोचयतु। कुतः—मृत्युपाशात् मृत्योर्मरणात् पाशाद्बन्धनाच्च। तत् मृत्युपाशमोचनम् अयम् वरुणः राजा अनुमन्यताम् तत्रायमनुमतो भवत्वित्यर्थः। किमर्थमेतत्—यथा इयं स्त्री पौत्रम् अघं पुत्रभवं दुःखं[2] न रोदात् न रोदितु। अग्निरत्रागत्य वरुणस्यानुमतः[3] अस्याः पुत्रादिकं मृत्योः पाशाच्च मोचयतु यथेयं कन्या पुत्रादिभवदुःखेन[4] न रोदित्वित्याशंसा व्याक्यार्थः। अस्यै इति षष्ठ्यर्थे चतुर्थी। रोदादिति रुदिर् अश्रुविमोचने इत्यस्य धातोः [5]लेट्प्रत्ययेन रूपम् ॥ ३४६ ॥

---

१ प—पुनर्होमे।

२ प—यथा तथा इत्यधिकम्।

३ क—त—°नुमतौ। प—°नुमत्या।

४ त—प—पुत्रादिदुःखेन।

५ त—प—लेट्°।

**इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः ।**
**अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभि बुध्यतामियं॑ स्वाहा ॥ ३४७**

[ पा गृ १, ५, ११ ]

गार्हपत्यः अग्निः इमाम् कन्यां त्रायताम् रक्षतु । तथा अस्यै कन्यायै प्रजां पुत्रादि नयतु प्रापयतु । तथा दीर्घम् आयुश्च नयतु । तथा सतीयं कन्या अशून्योपस्था अस्तु नित्यं भर्तृसङ्गता भवतु । तथा जीवताम् माता अस्तु जीववत्सा[1] भवतु । तथा पौत्रमानन्दम् अभिबुध्यताम् पुत्रभवं सुखं सर्वतोभावेनानुभवतु । अग्निना रक्षितेयं दीर्घायुः सुभगा जीववत्सा च भवत्वित्याशंसा वाक्यार्थः ॥३४७॥

**स्वस्ति नोऽग्ने दिवा पृथिव्या विश्वानि धेह्ययथा यजत्र ।**
**यदस्यां महि दिवि जातं प्रशस्तं तस्मादस्मासु द्रविणं धेहि चित्रं॑ स्वाहा ॥ ३४८**

[ पा गृ १, ५, ११—दिव आ पृथिव्याः ]

हे अग्ने । किम्भूत—यजत्र यजन्तं त्रायते इति यजत्र । नः अस्माकं स्वस्ति कल्याणानि धेहि धारय । कथम्—अयथा क्रमव्यतिरेकेण एकदैवेत्यर्थः । किम्भूतानि—विश्वानि सकलानि । कुत्र कुत्र—दिवा आकाशे पृथिव्या भूम्याञ्च । किञ्च यद् द्रविणम् धनं प्रशस्तम् श्लाघ्यं तद् अस्मासु धेहि । किम्भूतम्—अस्यां महि पृथिव्यां दिवि स्वर्गे च जातम् उत्पन्नम् । पुनः किम्भूतम्—चित्रम् नानारूपं[2] गोभूहिरण्यादि । हे अग्ने सकलकल्याणानि धनानि चास्मासु धेहीत्याशंसा वाक्यार्थः । अत्र दिवा पृथिव्या इति सप्तम्यां तृतीया ॥ ३४८ ॥

**सुगं नु पन्थां प्रदिशन्न एहि ज्योतिष्मद्ध्येह्यजरन्न आयुः ।**
**अपैतु मृत्युरमृतं म आगाद्वैवस्वतो नो अभयं कृणोतु स्वाहा ॥३४९**

[ पा गृ १, ५, ११ ]

नु भो ज्योतिष्मत् ज्योतिषां मध्ये सारभूत अग्ने इति यावत् । नः अस्माकं पन्थाम् पन्थानं प्रदिशन् उपदिशन् एहि आगच्छ । किम्भूतं पन्थानम्—सुगम् सुष्ठु गम्यत इति सुगन्तव्यम् । तथा नः अस्माकं आयुः जीवनम् अजरन्

---

१ स—जीवपुत्रा । प—जीववत्सा । २ प—नानावर्णं ।

अहापयन् धेहि[1]। नः अस्माकं मृत्युः अपैतु अपगच्छत्विति यावत्। मन्त्रान्तःस्थं नःपदं मृत्युपदेन योज्यम्। मे मम अमृतं मोक्षः आगात् आगच्छतु। तथा वैवस्वतः यमः नः अस्माकम् अभयं कृणोतु करोतु। हे अग्ने अस्माकमुत्कृष्टं वर्त्मोपदिशन् [2]आयुश्चाहापयन्नागच्छ त्वय्यागतेऽस्माकं मृत्युरपगच्छतु मोक्षो भवतु यमाच्च भयमपगच्छत्वित्याशंसा वाक्यार्थः। पन्थामित्याकारश्छान्दसः ॥ ३४८ ॥

**परं मृत्यो अनु परेहि पन्थां यस्तेऽन्य इतरो देवयानात्।**
**चक्षुष्मते शृण्वते ब्रवीमि मा नः प्रजां रीरिषो मोत वीरान् ॥३५०**

[ ऋ स १०, १८, १- -यस्ते स इतरो। वा स ३५, ७। का स ३५, ४०। पा गृ १, ५, १२ ]

त्रिष्टुप्। मृत्युर्देवता। हे मृत्यो परं पन्थाम् उत्कृष्टं पन्थानमहिंसात्मकम् अन्विहि अनुगच्छ। ते तव यः अन्यः पन्था अहिंसातोऽन्यः लोकहिंसात्मक इत्यर्थः। तं पन्थानं परा इहि परावृत्योपगच्छ[3]। किम्भूतोऽसौ पन्थाः— देवयानात् इतरः देवानां यानाद्गमनोऽन्यः। केनाप्यन्येनाननुगतोऽयं पन्था इत्यर्थः। अथवा एतदेव ते तुभ्यं ब्रवीमि। किम्भूताय ते—चक्षुष्मते शृण्वते सकललोकव्यवहारं [4]दृष्टवते श्रुतवते च[4]। किं ब्रवीमि—नः अस्माकं प्रजां मा रीरिषः। अस्मत्सम्बन्धिनीं प्रजां न हिंसय। उत अपि च नः अस्माकं वीरान् पुत्रान् मा रीरिषः। ममानया आहुत्या तुष्टस्त्वं हिंसातः परावृत्य मम प्रजां पुत्रांश्च न हिंसयेति याच्ञा वाक्यार्थः। अत्र अनु इहि एतयोः पदयोर्व्यवहिताश्च इति ( पा १, ४, ८२ ) वचनात् व्यवहितयोरपि सम्बन्धः। रीरिषः इति रिष हिंसायामित्यस्य धातोर्ण्यन्तस्य लुङ्। तस्य मध्यमपुरुषैकवचने चङि कृते माङ्योगित्वादडागमो न भवति। वीरशब्देन पुत्रोऽभिधीयते। तच्च पुत्रो वै वीरः पुत्रं विदेय इति श्रुतिः ( श ब्रा ३, ३, १, १२ ) प्रमाणम् ॥ ३५० ॥

ततो लाजहोमे पारस्करः—कुमार्या भ्राता शमीपलाशमिश्राँल्लाजानञ्जलिनाञ्जलावावपति ताञ्जुहोति संहतेन तिष्ठत्यर्यमणमिति।

---

1 च—प—एहि। पारस्करगृह्यसूत्रे क्वचित् 'ज्योतिषाध्ये ह्यजरम्' इत्येवं मुद्रापितः पाठो दृश्यते। केषुचिन्मातृकाग्रन्थेषूपलब्धो व्याख्यानप्रकार इत्थं संशयमुत्पादयति स एव पाठो हलायुधेनापि व्याख्यायते न वेति। परं तदा 'ज्योतिषाध्ये हि' इत्यत्र व्यत्ययो व्याख्यातव्यो भवेत्।

2 प—आयुश्चापह्रायन्नागच्छ।

3 ङ—परावृत्यानुगच्छ। च—त—परावृत्यागच्छ प—परावृत्य गच्छ।

4 त—प—दृष्टवतः श्रुतवतश्च।

तत्रार्यमणमन्त्रत्रयम्

**अर्यमणन्देवं कन्या अग्निमयक्षत ।**

**स नो अर्यमा देवः प्रेतो मुञ्चतु मा पतेः स्वाहा ॥३५१**

[ म ब्रा १, २, ३—अर्यमण नु देवं । पा गृ १, ६, २ ]

कन्या इयम् अर्यमणं सूर्यम् अयक्षत पूजयति । किम्भूतम्—देवम् । पुनः किम्भूतम्—अग्निम् अग्निस्वरूपम् । किमर्थम्—सः अर्यमा देव इतः पतेः सकाशात् मा मां नो प्रमुञ्चतु न प्रमोचयत्वित्येतदर्थम् । इयं कन्या पत्या सहावियोगसिद्ध्यर्थमर्यमणं यजत इति वाक्यार्थः । अत्र अयक्षत इति वर्तमाने लुङ् ॥ ३५१ ॥

**इयं नार्युपब्रूते लाजानावपन्तिका ।**

**आयुष्मानस्तु मे पतिरेधन्तां ज्ञातयो मम स्वाहा ॥३५२॥**

[ अ स १४, २, ६३ । म ब्रा १, २, २ द्रः । पा गृ १, ६, २ ]

इयं नारी उपब्रूते वदति । किं कुर्वती—लाजान् आवपन्तिका । आवपन्ती क्षिपन्ती । किं ब्रूते—मे मम पतिः आयुष्मान् अस्तु । तथा मम ज्ञातयः एधन्ताम् वृद्धियुक्ता भवन्तु । पत्युर्दीर्घायुष्ट्वं ज्ञातीनाञ्च वृद्धिमत्त्वं प्रार्थयमाना लाजान् जुहोतीति वाक्यार्थः । आवपन्तिका स्वार्थे कः ॥ ३५२ ॥

**इमाँल्लाजानावपाम्यग्नौ समृद्धिकरणांस्तव ।**

**मम तुभ्यं च संवननं तदग्निरनु मन्यतामियं स्वाहा ॥३५३**

[ पा गृ १, ६, २—समृद्धिकरणं तव । हि गृ १, २०, २—समृद्धिकरणान् मम ]

इयं नार्युपब्रूते इत्यधिकारेऽयं मन्त्रः । इयमहम् इमान् लाजान् अग्नौ आवपामि क्षिपामि । किम्भूतान्—तव पत्युः समृद्धिकरणान् । तव वृद्ध्यर्थमित्यर्थः । अपि च यदेतत् मम तुभ्यं संवननम् वशीकरणं तत् अग्निः अनुमन्यताम् इत्येतदर्थञ्च । तुभ्यमिति षष्ठ्यर्थे चतुर्थी । सुपां सुलुगित्यादिना ( पा ७, १, ३९ ) विभक्तिलोपः । वशक्रिया संवननमित्यमरः ॥ ३५३ ॥

ततः कन्याहस्तग्रहणे पारस्करः—अथास्यै दक्षिणं हस्तं गृह्णाति साङ्गुष्ठं गृभ्णामि त इति ।

**गृभ्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथासः ।**

**भगोऽर्यमा सविता पुरन्धिर्मह्यं त्वाऽदुर्गार्हपत्याय देवाः ॥३५४**

[ ऋ स १०, ८५, ३६ । पा गृ १, ६, ३ ]

अमोऽहमस्मि सा त्वꣳ सा त्वमस्यमोऽहं
सामाहमस्मि ऋक् त्वं द्यौरहं पृथिवी त्वम् ।
तावेहि विवहावहै सह रेतो दधावहै
प्रजां प्रजनयावहै पुत्रान् विन्दावहै बहूंस्ते सन्तु जरदष्टयः ॥३५५

सम्प्रियौ रोचिष्णू सुमनस्यमानौ पश्येम शरदः शतं जीवेम शरदः शतꣳ शृणुयाम शरदः शतम् ॥ ३५६

[पा गृ १, ६, ३ । आ गृ १, ७, ६ ; १९ तथा शा गृ १, १३, ४ द्र: । श स १४, २, ७१ द्र: । वा स १२, ५७ द्र:]

ते तव हस्तं गृभ्णामि । किमर्थम्—सौभगत्वाय सौभाग्याय । न केवलं सौभाग्याय यथा मया पत्या सह जरदष्टिः आसः वृद्धा भवसीत्यर्थः । स्वयमेव किमर्थं गृह्णामीत्याकाङ्क्षायामाह—त्वा त्वां मह्यं देवा अदुः दत्तवन्तः । के ते देवाः—भगः अर्यमा सविता च । देवा इति सर्वैरेव सम्बध्यते । किम्भूतां त्वाम्—पुरन्धिं गार्हस्थ्याधिकारिणीम् । किमर्थमदुः—गार्हपत्याय गृहपतित्वाय ॥

किम्भूतोऽहम् ताञ्च किम्भूताम्—अहम् अमः अस्मि । मा लक्ष्मीरस्य नास्तीत्यमः । सा त्वम् लक्ष्मीस्त्वम् । त्वया विना लक्ष्मीशून्योऽहम् । त्वं मम लक्ष्मीरिति भावः । सा त्वमस्यमोऽहमिति पुनरभिधानमादरातिशयार्थम् । तथा अहं साम अस्मि सामवेदोऽस्मि । ऋक् त्वम् ऋग्वेदस्त्वम् । अहं द्यौः स्वर्गः । त्वं पृथिवी । ततश्च एहि अभिमुखी भव । तौ आवां विवहावहै विवाहं करवाव । तथा सति रेतः शुक्रं सह दधावहै धारयावः । प्रजां सन्ततिं प्रजनयावहै उत्पादयावः । बहून् पुत्रान् विन्दावहै प्राप्नुवः । ते पुत्रा जरदष्टयः सन्तु दीर्घायुषो भवन्तु ॥

किञ्च आवां शरदः शतं पश्येम पश्यावः । किम्भूतौ—सम्प्रियौ अन्योन्यानुरक्तौ रोचिष्णू दीप्तियुक्तौ सुमनस्यमानौ सौमनस्यं कुर्वाणौ । पश्येम शरदः शतं जीवेम शरदः शतं शृणुयाम शरदः शतमिति व्यक्तार्थम् । सवित्रादिभिर्दत्ताया लक्ष्मीभूतायास्तव हस्तं सौभाग्याय दीर्घायुष्ट्वाय पुत्रप्राप्तये अविकलेन्द्रियत्वाय लक्ष्मीप्राप्तये च गृभ्णामीति वाक्यार्थः ।

गृभ्णामीत्यत्र हृग्रहोर्भश्छन्दसीति ( पा वा ३, १, ८४ ) हकारस्य भकारः । पुरन्धिरिति द्वितीयायां प्रथमा । पश्येमेत्यादिषु द्विवचने बहुवचनम् ॥ ३५४-३५६ ॥

ततः कन्याया अश्मारोहणे पारस्करः—अथैनामश्मानमारोहयत्युत्तरतोऽग्ने-दक्षिणपादेनारोहेममश्मानमिति।

**आरोहेममश्मानमश्मेव त्वꣳ स्थिरा भव।**

**अभितिष्ठ पृतन्यतोऽवबाधस्व पृतनायतः॥ ३५७**

[ पा गृ १, ७, १। म ब्रा १, २, १ द्र:। आप म १, ५, १ ]

हे कन्ये त्वम् इमम् अश्मानं शिलाम् आरोह आक्रम। किमर्थम्—अनेनाश्मारोहणेन त्वं स्थिरा भव। क इव अश्मेव। किञ्च पृतन्यतः त्वत्प्रतिपक्षतया आत्मनः पृतनां सेनामिच्छतः पुरुषान् अभितिष्ठ अभिभूय तिष्ठ। किञ्च पृतनायतः तादृशानेव अवबाधस्व खण्डय। त्वं स्थैर्यार्थं प्रतिपक्षाभिभवार्थं प्रतिपक्षबाधनार्थञ्च इमं प्रस्तरमारोहेति वाक्यार्थः। पृतन्यत इति कव्यध्वरपृतनस्यर्चिलोपः (पा ७, ४, ३८) इत्यकारलोपः। पृतनायत इति लोहितादिगणे पठितम्॥ ३५७॥

ततो गाथागाने पारस्करः—अथ गाथां गायति सरस्वति प्रेदमव सुभग इति।

**सरस्वति प्रेदमव सुभगे वाजिनीवति।**

**यां त्वा विश्वस्य भूतस्य प्रगयाम्यस्याग्रतः॥ ३५८**

[ मा गृ १, १०, १५। आप म १, ३, ५। पा गृ १, ७, २—प्रगायामस्यग्रतः, तथा—प्रजायामस्याग्रतः। हि गृ १, २०, १—प्रजायामस्यग्रतः ]

**यस्यां भूतꣳ समभवद् यस्यां विश्वमिदं जगत्।**

**तामद्य गाथां गास्यामि या स्त्रीणामुत्तमं यशः॥ ३५९**

[ पा गृ १, ७, २ ]

हे सरस्वति यां त्वा त्वां प्रगयामि प्रगायामि उत्कीर्तयामि। सा त्वम् इदं विवाहकर्म प्राव प्रकर्षेण अव रक्ष पालय। किम्भूते—सुभगे मनोहरे। तथा वाजिनीवति वाजिनी घोटिका सा यस्या अस्ति। सा यथा शीघ्रं याति तथा त्वमपि कीर्तिरूपा शीघ्रं यासीत्यर्थः। कुत्र [1]गायामीत्याकाङ्क्षायामाह—अस्य भूतस्य प्राणिजातस्य अग्रतः। किम्भूतस्य—विश्वस्य सर्वस्य॥

कीदृशं तद्गानम्—यस्यां सरस्वत्यां भूतं पृथिव्यप्तेजोवाय्वाकाशात्मकं समभवत् सम्बभूव। तथा यस्याम् इदं विश्वं जगत् समभवत्। तां गाथां गाथात्मिकाम् अद्य इदानीं गास्यामि[2]। किम्भूता—या गाथा स्त्रीणाम् यशः।

---

१ क—गायतीत्या०। त—गायस्तीत्याह। २ त—नास्ति।

किम्भूतम्—उत्तमम्। या सरस्वती जगदुत्पत्तिकारणं स्त्रीणां कीर्तिभूता। इत्येवंरूपया गाथया सरस्वती स्तुता[1]। सा ममेदं विवाहकर्म भ्रमप्रमादकृताशुद्ध-मन्त्रपाठतः पालयत्विति वाक्यार्थः।

प्रगयामोति कै गै शब्दे। आतश्चोपसर्गे (पा ३, ३, १०६) इत्यङ्। प्रगां प्रगानं करोतीति णिच्। उत्तमपुरुषैकवचनम्। गास्यामीति वर्तमाने लृट्॥ ३५८-३५९॥

ततो वरवध्वोरग्निपरिक्रमणे पारस्करः—ततः परिक्रामतस्तुभ्यमग्रे पर्यवहन्निति।

**तुभ्यमग्रे पर्यवहन्त्सूर्यां वहतु ना सह।**

**पुनः पतिभ्यो जायां दाग्ने प्रजया सह॥ ३६०**

[ ऋ स १०, ८५, ३८; आप म १, ५, ३—वहतुना; दा अग्ने। पा गृ १, ७, ३। मा गृ १, ११, १२—तुभ्यमग्रे ]

हे अग्ने अग्रे प्रथमं सूर्यां सूर्यवत् कान्तिशालिनीम् एतां कन्यां तुभ्यं [2]पर्यवहन् त्वां विवाहितवन्तः[2]। एतां त्वया सह पुनः ना मनुष्यो वहतु विवाहयतु। त्वञ्च पतिभ्यो मनुष्यपतये एतां जायां दा देहि। प्रजया सह सन्तत्या सहेत्यर्थः। अयं वाक्यार्थः—हे अग्ने त्वया प्रथमं विवाहितत्वात् तवैव जायासौ। तदिदानीं सन्तत्या सह मनुष्याय एतां जायां देहि। दा इति लोट् सिप्॥ ३६०॥

ततश्चतुर्थहोमे पारस्करः—शूर्पकुष्ठया सर्वान् लाजानावपति भगाय स्वाहेति।

**भगाय स्वाहा॥ ३६१**

कामाय सुहुतं भवतु॥ ३६१॥

[ वा स १०, ५। का स ११, १३। पा गृ १, ७, ५ ]

ततः सप्तपदक्रमणे पारस्करः—अथैनामुदीचीं सप्तपदानि प्रक्रामयति।

**एकमिषे विष्णुस्त्वा नयतु। द्वे ऊर्जे विष्णुस्त्वा नयतु। त्रीणि रायस्पोषाय विष्णुस्त्वा नयतु। चत्वारि मायोभवाय विष्णुस्त्वा नयतु। पञ्च पशुभ्यो विष्णुस्त्वा नयतु। षडृतुभ्यो विष्णुस्त्वा नयतु। सखे सप्तपदा भव सा मामनुव्रता भव विष्णुस्त्वा नयतु॥ ३६२—३६८**

[ पा गृ १, ८, १—२ ]

---

१ क—ग—सरस्वतीं स्तुताश्च २ क—ग—पर्यवहत् त्वां विवाहितवान्।

एषु सप्तस्वपि मन्त्रेषु सखे इति वक्ष्यमाणं सम्बोधनपदं सम्बध्यते[1]। हे सखे एकं पदं त्वा त्वां विष्णुर्नयतु। किमर्थम्—इषे ईप्सिताय। जगत्प्रभुर्विष्णुस्त्वामेकं पदमभीष्टार्थलाभाय नयत्वित्याशंसा वाक्यार्थः। हे सखे त्वां द्वे पदे विष्णुर्नयतु। किमर्थम्—ऊर्जे बलाय। हे सखे त्वां त्रीणि पदानि विष्णुर्नयतु। किमर्थम्—रायस्पोषाय धनवृद्धये। हे सखे त्वां चत्वारि पदानि विष्णुर्नयतु। किमर्थम्—मायोभवाय। मायः सौख्यं तस्य भव उत्पत्तिस्तदर्थम्। हे सखे त्वां पञ्च पदानि विष्णुर्नयतु। किमर्थम्—पशुभ्यः गवादिभ्यः। हे सखे त्वां षट् पदानि विष्णुर्नयतु। किमर्थम्—ऋतुभ्यः ऋतुसमयप्राप्तये। हे सखे त्वां सप्त पदानि विष्णुर्नयतु। सा त्वं सप्तपदा भव भूरादिसप्तलोकस्था भव। तथा मामनुव्रता भव मदीयं व्रतमनुपालयन्ती भव। भूरादिसप्तलोकप्राप्तये पतिव्रतात्वाय च सप्तमं पदं विष्णुस्त्वां नयत्विति वाक्यार्थः॥ २६२-२६८॥

[2]ततस्त्रिरत्नकलसस्थजलेन वधूवरयोरभिषेचने पारस्करः—एनां मूर्धन्यभिषिच्यत्याप: शिवाः शिवतमा इति।

**आपः शिवाः शिवतमाः शान्ताः शान्ततमास्तास्ते कृण्वन्तु भेषजम्॥ २६९**

[पा गृ १, ८, ५]

या आपः शिवाः कल्याण्यः शिवतमाः अतिशयेन कल्याण्यः। शान्ताः अनुपद्रवकारिण्यः। शान्ततमाः अतिशयेन शान्ताः ताः आपः ते तव भेषजं रोगनाशं कृण्वन्तु कुर्वन्तु। सकलदोषविमुक्ता आपस्तव रोगनाशं कुर्वन्त्विति वाक्यार्थः। कृण्वन्त्विति कृवि हिंसाकरणयोश्चेत्यत्र धातौ॥ २६९॥

ततः पुनस्तेनैवोदकेनाभिषेके पारस्करः [१, ८, ६]—आपो हि ष्ठेति च तिसृभिरिति।

**आपो हि ष्ठा॥ यो वः शिवतमो रसः॥ तस्मा अरं गमाम॥**

अस्य ऋक्त्रयस्य व्याख्यादिकं प्रातःस्नानेऽनुसन्धेयम् ( २४ पृः )॥

ततः सूर्यावेक्षणे पारस्करः [१, ८, ७]—अथैनां सूर्यमुदीक्षयति तच्चक्षुरिति।

**तच्चक्षुर्देवहितम्॥**

अस्य मन्त्रस्य व्याख्यानादिकमुपनयनेऽनुसन्धेयम् ( ६३, २४० पृः )॥

---

[1] ख—सम्बोध्यते।

[2] क—ङ—च—प—ततो त्रिरत्नकलसस्थ।

ततो वरेण कन्याहृदयालम्भे पारस्करः—अथास्यै दक्षिणांसमधिहृदयमालभते मम व्रते त इति।

**मम व्रते ते हृदयं दधामि मम चित्तमनुचित्तं ते अस्तु।**
**मम वाचमेकमना जुषस्व प्रजापतिष्ट्वा नियुनक्तु मह्यम् ॥[1] २७०**

[ म ब्रा १, २, २१ । पा गृ १, ८, ८ । २, २, १६ ]

हे कन्ये ते तव हृदयं मम व्रते नियमं दधामि मम व्रतं कारयामीत्यर्थः। तथा सति ते तव चित्तं हृदयं मम चित्तम् अनु अस्तु मम चित्तानुकूलं भवतु। तथा मम वाचं वाक्यं त्वम् एकमनाः एकचित्ता सती जुषस्व सेवस्व मदीयवचनकारिणी भवेत्यर्थः। तथा प्रजापतिः त्वा त्वां मह्यं नियुनक्तु नियोजयतु। त्वं प्रजापतिना मह्यं नियुक्ता मयापि पतिव्रताले स्थापितहृदया मच्चित्तानुकूलचित्ता च मम वाचं सेवस्वेत्यनुशासनं वाक्यार्थः ॥ २७० ॥

ततो वरस्य कन्याभिमन्त्रणे पारस्करः—अथैनामभिमन्त्रयेत् सुमङ्गलीरिति।

**सुमङ्गलीरियं वधूरिमाꣳ समेत पश्यत।**
**सौभाग्यमस्यै दत्त्वायाथास्तं विपरेतन ॥ २७१**

[ ऋ स १०, ८५, ३३ । म ब्रा १, २, १४ । पा गृ १, ८, ९ ]

हे सभ्याः इयं वधूः सुमङ्गलीः शोभनमङ्गलयुक्ता इमाम् इत्थम्भूतां समेत समागच्छत। तथेमां पश्यत आलोकयत। अस्यै सौभाग्यं दत्त्वाय दत्त्वा अथ अनन्तरम् अस्तं गृहं स्वस्थानं विपरेतन गच्छत। इमां मङ्गल्यां दृष्ट्वा अस्यै सौभाग्यञ्च दत्त्वा स्वस्थानं यातेति वाक्यार्थः। अत्र दत्त्वायेति छन्दसि क्त्वो यक् (पा ७, १, ४७)। विपरेतनेति वि-परा-पूर्वादिण् गतावित्यतः तप्तनप्तनथनाश्चेति (पा ७, १, ४५) लोण्मध्यमपुरुषस्य बहुवचने तनप् ॥ २७१ ॥

ततो वरः कन्यामुत्तोल्य [2]लोहितवृषचर्मण्युपवेशयेत्[2]।

तत्र पारस्करः—आनडुहे लोहितचर्मण्युपवेशयतीह गावो निषीदन्त्विति।

**इह गावो निषीदन्त्विहाश्वा इह पूरुषाः।**
**इहो सहस्रदक्षिणो यज्ञ इह पूषा निषीदतु ॥ २७२ ॥**

[ पा गृ १, ८, १० । हि गृ १, २२, ९ । अ स २०, १२७, १२; आप म १, ९, १; म ब्रा १, २, १३— इह गावः प्रजायध्वम्, अपि पूषा निषीदतु, म ब्रा-रायस्पोषो निषीदतु ]

---

[1] मन्त्रोऽयमुपनयनप्रकरणे (२४१ पृः) प्रकरणानुगुण्येन व्याख्यातः।

[2] क—प—आसादितवृषचर्मणाप।

इह वृषचर्म्मणि त्वया उपविशन्त्या सह गावः निषीदन्तु उपविशन्तु। तथा इह अश्वा निषीदन्तु। इह पूरुषाः परिजनमनुष्या निषीदन्तु। अत्र स्थानद्वये आदिपदस्थितं क्रियापदमनुषञ्जनीयम्। इह उशब्दोऽप्यर्थः। यज्ञोऽपि निषीदतु। किम्भूतः—सहस्रदक्षिणः बहुदक्षिणः। अत्र मन्त्रान्तःस्थं निषीदत्विति क्रियापदमनुषञ्जनीयम्। तथा इह पूषा पुष्टिकारो आदित्यो निषीदतु। गोऽश्वपरिजनयज्ञादित्यैः सह त्वमिह [1]वृषचर्म्मण्युपविशेति वाक्यार्थः॥ ३७२॥

ततो वरेण कन्याया ध्रुवावेक्षणे[2] पारस्करः—अस्तमिते ध्रुवं दर्शयति ध्रुवमसीति।

**ध्रुवमसि ध्रुवं त्वा पश्यामि॥ ३७३**

**ध्रुवैधि पोष्या मयि मह्यं त्वादाद्बृहस्पतिः।**

**मया पत्या प्रजावती संजीव शरदः शतम्॥ ३७४**

[ ऋग्वेद-खिल १०, ८५, ६। शा गृ १, १७, ३। आप म १, ८, ९। पा गृ १, ८, १०—पोष्ये मयि ]

हे वधु ध्रुवमसि अविनाशिनी तिष्ठसि। त्वा त्वां ध्रुवं तारारूपं पश्यामि दर्शयामि॥

किमर्थम्—त्वं मयि ध्रुवा शाश्वती सती पोष्या एधि पोषणीया भवेत्येतदर्थम्। किञ्च बृहस्पतिः त्वा त्वां मह्यम् अदात् दत्तवान्। तथा सति त्वं प्रजावती पुत्रादिसहिता मया पत्या सह शरदः शतं शतं वर्षाणि जीव। [3]त्वं मयि शाश्वती भवेत्येतदर्थम्। मया दर्शितध्रुवा बृहस्पतिना मह्यं दत्ता शतं वर्षाणि जीवेत्याशंसा[4] वाक्यार्थः।

ध्रुवमिति स्त्रीलिङ्गत्वे प्राप्ते नपुंसकलिङ्गत्वम्। पश्यामीति अन्तर्भावितणिच्॥ ३७३-७४॥

इति विवाहः॥

---

१ क—च—प—बलीवर्दचर्मण्युप°।

२ त—ध्रुवप्रेक्षणे। प—ध्रुवोपदर्शने।

३ त—ध्रुवदर्शने बृहस्पतिदत्ता शाश्वती भवेति याच्ञा।

## अथ चतुर्थीकर्म

तत्र पञ्चाज्याहुतिहोमे पारस्करः—आज्यभागाविष्ट्वाज्याहुतीर्जुहोति अग्ने प्रायश्चित्ते त्वमित्यादि ।

तत्र पञ्च मन्त्राः

**अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्यै पतिघ्नी तनूस्तामस्यै नाशय स्वाहा ॥ ३७५**

[ पा गृ १, ११, २ । म ब्रा १, ४, १ , आप म १, १०, ७ द्र: ]

हे अग्ने । किम्भूत—प्रायश्चित्ते सकलदोषापाकरणस्वरूप[1] त्वम् देवानाम् इन्द्रादीनां प्रायश्चित्तिः दोषापकर्ता असि भवसि । अतः कारणात् ब्राह्मणः अहं त्वा त्वाम् उपधावामि उपसर्पामि । किम्भूतः—नाथकामः याच्ञाकामः । याच्ञार्थमुपसर्पामीत्यर्थः । का सा याच्ञा—अस्यै अस्याः कन्याया या तनूः पतिघ्नी पतिहिंसकं यदङ्गम् अस्यै अस्याः ताम् तनूम् नाशय अपाकुरु । हे अग्ने प्रायश्चित्तदेवरूप देवानामपि दोषापकर्ता[2] त्वमेवेति स्तुतिपूर्वकं ब्राह्मणोऽहन्त्वामुपसर्पामीत्युपसर्प्य अस्यां [3]पतिवधकाङ्क्षलक्षणं नाशयेति याच्ञा वाक्यार्थः । अस्यै षष्ठ्यर्थे चतुर्थी ॥ ३७५ ॥

**वायो प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्यै प्रजाघ्नी तनूस्तामस्यै नाशय स्वाहा ॥ ३७६**

[ म ब्रा १, ४, २ द्र: । पा गृ १, ११, २ ]

हे वायो अस्या या प्रजाघ्नी सन्तानविरोधिनी तनूः । अपरं समानम् ॥३७६॥

**सूर्य प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्यै पशुघ्नी तनूस्तामस्यै नाशय स्वाहा ॥ ३७७**

[ म ब्रा १, ४, ४ द्र: । पा गृ १, ११, २ ]

हे सूर्य यास्याः पशुघ्नी गवादिविरोधिनी तनूः । अपरं समानम् ॥ ३७७ ॥

---

१ त—दोषहरस्वरूपः ।

२ त—प—दोषापहर्ता ।

३ क२—पतिरोधकाङ्क्ष° । घ—पतिवधरोधकाङ्क्ष° । ङ—छ—ट—त—पतिविरोधकाङ्क्ष° ।

**चन्द्र प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै गृहघ्नी तनूस्तामस्यै नाशय स्वाहा ॥ ३७८**

[ म ब्रा १, ४, ३ द्र: । पा गृ १, ११, २ ]

गृहघ्नी गार्हस्थ्यविरोधिनी ॥ ३७८ ॥

**गन्धर्व प्रायश्चित्ते प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै यशोघ्नी तनूस्तामस्यै नाशय स्वाहा ॥ ३७९**

[ पा गृ १, ११, २ ]

हे गन्धर्व यशःप्रकाशकारक अस्या या यशोघ्नी यशोविरोधिनी ॥ ३७९ ॥

तत आहुतिशेषसहिते पूर्वस्थापितजलाभिषेके पारस्करः—अथैनां मूर्धन्यभिषिञ्चति या ते पतिघ्नीति ।

**या ते पतिघ्नी प्रजाघ्नी पशुघ्नी गृहघ्नी यशोघ्नी निन्दिता तनूर्जारघ्नीं तत एनां करोमि सा जीर्य त्वं मया सहाऽसौ ॥ ३८०**

[ पा गृ १, ११, ४ । आ गृ १, १६, ४ ; हि गृ १, २४, ५ द्र: ]

हे असौ अमुकि ते तव या तनूः निन्दिता दोषावहा तामेनां तनूं जारघ्नीं जार उपपतिस्तद्घातिनीं करोमि। का सा तनूः—पतिघ्नी प्रजाघ्नी पशुघ्नी गृहघ्नी यशोघ्नी। अनेनाभिषेककर्मणा मया सह जीर्य जरां प्राप्नुहि। दीर्घायुर्भवेत्यर्थः। अनेनाभिषेककर्मणा त्वं हतशरीरदोषा मया सह दीर्घायुर्भवेति वाक्यार्थः ॥ ३८० ॥

ततः कन्यायाः स्थालीपाकप्राशने पारस्करः—अथैनां स्थालीपाकं प्राशयति प्राणैस्ते प्राणान् सन्दधामीति ।

**प्राणैस्ते प्राणान्त्सन्दधाम्यस्थिभिरस्थीनि मांसैर्मांसानि त्वचा त्वचम् ॥ ३८१**

[ पा गृ १, ११, ५ ]

हे कन्ये ते तव प्राणान् प्राणैः। सन्निहितत्वाद् योग्यत्वाच्च मदीयैरिति बोद्धव्यम्। सन्दधामि संयोजयामि। तथा ते अस्थीनि अस्थिभिः सन्दधामि। तथा ते मांसानि मांसैः सन्दधामि। तथा ते त्वचं त्वचा सन्दधामि। अनेन स्थालीपाकप्राशनकर्मणा मया सह तव एकप्राणत्वैकास्थित्वैकमांसत्वैकचर्मत्वानि करोमीति वाक्यार्थः ॥ ३८१ ॥

इति चतुर्थीकर्म ॥

इत्यावसथिक-महाधर्माधिकृत-हलायुध-कृते ब्राह्मण-सर्वस्वे दशकर्म-मन्त्रव्याख्या समाप्ता ॥

# ब्राह्मण-सर्वस्वे स्मार्ताग्निपद्धतौ

## आवसथ्याधाननिबन्धः

[1]दिव्यं दिशत्याश्रयमाश्रयाशो[1] वर्त्मामलं शंसति कृष्णवर्त्मा ।
तापत्रयं यो दहनश्छिनत्ति स चित्रभानुर्दहनः[2] पुनातु ॥
[3]यो गौड़वसुधाधीश[3]-धर्माध्यक्षो हलायुधः ।
स्मार्ताग्निपद्धतिरेष निबन्धस्तेन निर्मितः ॥
आधानाद्यन्तकालेष्टिपर्यन्तोऽग्निमतां विधिः ।
[4]तावत्पर्यन्तमन्त्राणामर्थोऽप्यत्र प्रकाशितः[5] ॥

तत्राग्निपरिचर्याफलम्

पद्मपुराणम्

त्रीनग्नीनथ चैकं वा योऽहन्यहनि सेवते ।
सर्वभूतदयापन्नो [6]न प्रेतो[6] जायते नरः ॥

वायुपुराणम्[7] [ २१, ६८ ]

दर्शञ्च पौर्णमासञ्च ये यजन्ति द्विजातयः ।
न तेषां पुनरावृत्तिर्ब्रह्मलोकात् कदाचन ॥

यमः नाग्निहोत्रात् परो धर्मो नाग्निहोत्रात् परं तपः ।
नाग्निहोत्रात् परं दानं नाग्निहोत्रात् परो दमः ॥[8]

तथा [9]सुहुतान्यग्निहोत्राणि नयन्ति परमां गतिम् ।
तत्र स्वर्गस्य मोक्षस्य यो यथा गन्तुमिच्छति ॥

जाबालिः सन्तोषामृतमासाद्य तन्मना धर्मविन्नरः ।
अकामेनाग्निहोत्रस्य होता स्वर्ज्योतिराप्नुयात्[10] ॥

---

१ क—च—°त्वाश्रयणाश्रयासौ । घ—व—विश्व श्रयत्याश्रयमाश्रयासो । ङ—ज—झ—पुस्तकेषु श्लोकोऽयं नास्ति ।

२ च—चित्रतात्वर्चहनः ।न—व—चित्रभानुर्भवतः ।

३ ङ—ज—झ—प—स्वधर्मनिरतो विप्रो ।

४ न—व—तात्पर्यं त्वपि मन्त्राणां° ।

५ ङ—ज—झ—प—प्रजल्पितः ।

६ ङ—ज—झ—नाप्रज्ञो ।

७ ङ—ज—झ—व—पद्मपुराणे ।

८ कृत्यकल्पतरौ ( गार्हस्थ्य १२३ ) गृहस्थरत्नाकरे ( ९९ ) स्मृतिमुक्ताफले (२०) च यमवचनमिदमनन्तरवचनसहितं हारीतनाम्नोद्धृतम् ।

९ ज—स्वर्गतान्य° । न—जुह्वतान्य° ।

१० क—घ—च—स्वर्गतिमाप्नुयात् । झ—स्वर्योनिरा° । कृत्यकल्पतरौ ( गार्हस्थ्य १२५ )—'कामिन चाग्निहोत्रस्य होता स्वर्ज्योतिराप्नुयात्' इति श्लोकार्धं दृश्यते । प्रथमार्धेऽपि तत्र 'सन्तोषामृतमास्वाद्ये'ति पाठान्तरमस्ति ।

देवलः नाग्निहोत्रं समादाय जीवितार्थमपि त्यजेत् ।
सर्वे वेदास्तदर्था हि लोके ब्राह्मणजन्म च ॥

## अथाग्न्याधानाकरणे दोषाः

अत्र कूर्मपुराणम् [ उपरि २४, ६, १० ]

त्रयाणामिह वर्णानां गृहस्थाश्रमवासिनाम् ।
नास्तिक्यादथवालस्याद् योऽग्निं नाधातुमिच्छति ।
यजेत वा न यज्ञेन स याति नरकान् बहून् ।
तामिस्रमन्धतामिस्रं महारौरवरौरवौ ।
कुम्भीपाकं वैतरणीमसिपत्रवनं तथा ।
अन्यांश्च नरकान् घोरान् सम्प्राप्यान्ते स दुर्मतिः[१] ।
अन्त्यजानां कुले विप्रः शूद्रयोनौ च जायते ॥
तस्मात् सर्वप्रयत्नेन ब्राह्मणो वै विशेषतः ।
[२]आधायाग्निं विशुद्धात्मा यजेत परमेश्वरम् ॥

भविष्यपुराणम् [ ब्राह्म ४, १०७-१०८ ]

वेदैरुक्तं यथावीर [३]सुरज्येष्ठमुपेत्य[३] वै ।
अस्मान् ये ब्राह्मणा भूमावभ्यस्यन्ति ह्यनग्निकाः ॥
क्लिश्यन्ति ते सदा सर्वे मूढ़ा वै फलकाङ्क्षया ।
अनुष्ठानविहीनानामस्मानभ्यस्यतां भुवि ।
क्लेशो हि केवलो देव नास्मदभ्यसने फलम् ॥
अनुष्ठानं परं देवमस्मत्स्वभ्यसनात् सदा ।
इत्येवं राजशार्दूल वेदा ऊचुर्हि वेधसम् ॥

व्यास-शातातपौ

योऽगृहीत्वा विवाहाग्निं गृहस्थ इति मन्यते ।
अन्नं तस्य न भोक्तव्यं वृथापाको ह्यसौ भवेत् ॥

---

१ क—भा—दुर्गतिम्। प—प्राप्नोति स सुदुर्गतिः ।

२ प-पुस्तके आधायाग्निमित्यादिर्वेदा ऊचुर्हि वेधसमित्यन्तो ग्रन्थभागः पतितः ।

३ १का—सुरज्येष्ठ मपेत । प—सुराज्यं समुपेत्य ।

## अथानाहिताग्निप्रायश्चित्तम्

तत्र मनुः [ ११, ५८, ६५, ६६ ]

गोवधोऽयाज्यसंयाज्यपारदार्यात्मविक्रयाः ॥
अनाहिताग्निता स्तेयमृणानां चानपक्रिया ।
असच्छास्त्राभिगमनं[१] [२]कौशीलव्यस्य च क्रिया[२] ॥
धान्यकुप्यपशुस्तेयं मद्यपस्त्रीनिषेवणम् ।
स्त्रीशूद्रविट्क्षत्रवधो नास्तिक्यञ्चोपपातकम् ॥

गोवधप्रायश्चित्तानन्तरं पुनर्मनुः [ ११, ११७ ]

एतदेव व्रतं कुर्युरुपपातकिनो द्विजाः ।
[३]अवकीर्णिवर्ज्यं शुद्ध्यर्थं[३] चान्द्रायणमथापि वा ॥

ततश्चाग्निग्रहणाधिकारिणा ब्राह्मणेन चिरकालमकृताग्न्याधानेन गोवधोक्तो-पपातकप्रायश्चित्तमल्पकालमकृताग्न्याधाने तु[४] चान्द्रायणं कृत्वावसथ्याधानं करणीयमिति ।

एतत्तु प्रायश्चित्तं सहोदरस्य ज्येष्ठस्याग्निमत्त्वे सति बोद्धव्यम् । ज्येष्ठ-स्यानग्निमत्त्वे यवीयसोऽग्निग्रहण एव दोषः श्रूयते । तथा च यज्ञपार्श्वः

ज्येष्ठे तु सति निर्दोषे यवीयान् योऽग्निमान् भवेत् ।
प्रतिपर्वं भवेत्तस्य ब्रह्महत्या न संशयः ॥

मनुः [ ३, १७१-१७२ ]

दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते ।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः ॥
परिवित्तिः परिवेत्ता यया च परिविद्यते ।
ते सर्वे नरकं यान्ति दातृयाजकपञ्चमाः ॥

---

१ मनुसंहितायां मुद्रापितः पाठः °धिगमनं । झ—अवकीर्णिविशुद्ध्यर्थं ।
२ ज—झ—कौशीलव्यमसत्क्रिया ।
३ क—च—अवकीर्णिरशुद्धात्मा ।
४ ङ—°मकृताग्न्याधानेन ।

## अथाग्न्याधानकालाः

तत्र बह्वृचगृह्यपरिशिष्टम्

जातकर्मणि चेन्न गृहीतोऽथ समावर्तनाग्निं परिगृह्णीयात्। यत्रान्त्यां समिधमभ्यादधाति तं प्रतिगृह्णाति। अथावसथ्यः। तस्मिन् गृह्यकर्माणि कुर्युः। तत्रापि न गृहीतः स्याद् वैवाह्यमग्निमिन्धीत। वैवाह्यो न गृहीतः स्यादथामावस्यायां वैश्यकुलादग्निमाहृत्य शुचौ देशे स्थापयेत्।

गौतमः [ गौ ध ५, ७ ]

भार्यादिरग्निर्दायादिर्वा।

पैठीनसिः

वैवाहिकमग्निमिन्धीत सायं प्रातर्यथाकालं[१] समिधोऽभ्यादध्यात्।

व्यासः

अग्निर्वैवाहिको [२]येन न गृहीतः प्रमादिना[२]।
पितर्युपरते तेन ग्रहीतव्यः प्रयत्नतः ॥[३]

छन्दोगपरिशिष्टे [ १, ६, १३-१४ ] कात्यायनः

यस्य वाचा भवेद्दत्ता कन्या [४]सपदि केनचित्[४]।
सोऽन्त्यां समिधमाधास्यन्नादधीतैव नान्यथा ॥
अनूढैव तु सा कन्या पञ्चत्वं यदि गच्छति।
न तथा [५]व्रतलोपः स्यात्तेनैवान्यां[५] समुद्वहेत् ॥

[६]व्रतपदेनात्र सदावसथ्याधानं मतं तेनैवार्थादाहिताग्निता[६]।

तथा [ छ प १, ६, १५ ]

अथ चेन्न लभेतान्यां याचमानोऽपि कन्यकाम्।
तमग्निमात्मसात् कृत्वा क्षिप्रं स्यादुत्तराश्रमी ॥

---

१ ङ—°र्यथैककालं। कृत्यकल्प (गार्हस्थ्य ११४) सायं प्रति यथाकालं।

२ प—गृहीतः प्रथमे दिने।

३ गदाधरीये पारस्करगृह्यभाष्ये (१, २) वचनमिदम् अपि वैवाहिको येनेत्यादिकं पाठं स्वीकृत्य कारिकेत्येतावन्मात्रं लिखित्वा ग्रन्थकृन्नामरहित-मुद्धृतम्।

४ क—ज—झ—सा यदि केनचित्। ङ—यस्य दत्ता भवेत् कन्या वाचा सत्येन केनचित्।

५ कर्मप्रदीपपाठस्तु—°लोपोऽस्य तेनैवान्यां। कृत्यकल्पतरौ ( गार्हस्थ्य ११४ ) तल्लोपोऽस्य तेनैवान्यामिति पाठो गृहीतः। "तच्छब्देनात्र प्रक्रमादावसथ्याधानानुष्ठानमुपात्तम्। 'तेनैव' अर्थादाहितेनाग्निना" इति व्याख्या च दत्ता।

६ ङ-ज-झ-व-प-पुस्तकेषु ग्रन्थांशोऽयं नोपलभ्यते।

वसिष्ठः [ व ध ११, ४५ द्रः ]

अलमग्न्याधेयाय नानाहिताग्निः स्यादवश्यं ब्राह्मणोऽग्नीनादध्यात् ॥

अग्न्याधेयायाग्न्याधानकर्मार्थं ब्राह्मणोऽलं समर्थ इत्यर्थः। तस्मादाहिताग्निना भाव्यम्।

पारस्करः [ पा गृ १, २, १-२ ]

आवसथ्याधानं दारकाले। दायाद्यकाल एकेषाम् ॥

गोभिलसूत्रम् [ गो गृ १, १, ३ ]

उदगयने पूर्वपक्षे पुण्येऽहनि प्रागावर्तनादह्नः कालं विद्यात् ॥

प्रागावर्तनादह्नः पूर्वाह्न इत्यर्थः।

तथा [ गो गृ १, १, ७-८ ]

ब्रह्मचारी वेदमधीत्यान्त्यां समिधमभ्याधास्यन् जायाया वा पाणिं जिघृक्षन् ॥

अग्निसमाधानं कुर्वीतेति सम्बध्यते।

तथा [ गो गृ १, १, १२ ]

प्रेते वा गृहपतौ परमेष्ठिकरणम् ॥

परमेष्ठी अग्निः।

[ गो गृ १, १, १३-१४ ]

तथा तिथिनक्षत्रपर्वसमवाये। दर्शे वा पौर्णमासे वाऽग्निसमाधानं कुर्वीत ॥

छन्दोगपरिशिष्टे [ २, ८, ५ ] कात्यायनः

वैवाहिकेऽग्नौ जुहुयात् सायं प्रातस्त्वतन्द्रितः।
चतुर्थीहोमं कृत्वैतदेतच्छात्यायनेर्मतम् ॥

यमः— एकं द्वौ त्रीन् वा वेदानधिगम्य गुरुं परितोष्यानुज्ञातो मुञ्जाद्यपनयनं कृत्वा सवर्णां परिणीय ब्राह्मादिना विवाहेनर्तुकालाभिगामी पुत्रमुत्पाद्यावसथ्याधानं कृत्वातिथीन् पूजयेत्।

शुद्धिदीपिकायाम् [ ८, १२६ ]

वह्निग्रहं कुजगुरुज्ञदिनेशवारे माघादिषट्सु च मृदुध्रुववह्निभेषु।
कुम्भाजभांशकविलग्नमशुद्धकालं लग्नस्थशीतगुसितौ च विहाय कुर्यात् ॥

तत्र मृदुनक्षत्राणि अनुराधा चित्रा रेवती मृगशिराः। ध्रुवनक्षत्राणि उत्तरफल्गुन्युत्तराषाढोत्तरभाद्रपदा रोहिणी। वह्निभं कृत्तिका। कुम्भः प्रसिद्धः। अजभांशाः मीनकर्कटमकराः। [1]एतेषां नवांशाश्च निषिद्धाः[1]।

---

१ ज—झ—प—पुस्तकेषु वाक्यमिदं नास्ति।

## अथारण्यादिनिर्माणम्[1]

तत्र छन्दोगपरिशिष्टे [ १, ७, १-१७ ] कात्यायनः

अश्वत्थो यः शमीगर्भः प्रशस्तोर्वीसमुद्भवः ।
तस्य या प्राङ्मुखी शाखा योदीच्या वोर्ध्वगापि वा ॥
अरणिस्तन्मयी प्रोक्ता तन्मयी चोत्तरारणिः ।
सारवद्दारवं चात्रमोविलौ च प्रशस्यते ॥
संसक्तमूलो यः शम्याः शमीगर्भः स उच्यते ।
अलाभे त्वशमीगर्भादाहरेदविलम्बितः ॥
चतुर्विंशतिरङ्गुष्ठा दैर्घ्यं षड़पि पार्थवम् ।
चत्वार उच्छ्रयो मानमरण्योः परिकीर्तितम् ॥
अष्टाङ्गुलः प्रमन्थः स्याच्चात्रं स्याद्द्वादशाङ्गुलम् ।
ओविलो द्वादशैव स्यादेतन्मन्थनयन्त्रकम् ॥
अङ्गुष्ठाङ्गुलिमानन्तु यत्र यत्रोपदिश्यते ।
तत्र तत्र बृहत्पर्वग्रन्थिभिर्मिनुयात् सदा ॥
गोवालैः शणसंमिश्रैस्त्रिवृद्वृत्तमनंशुकम् ।
व्यामप्रमाणं नेत्रं स्यात् प्रमथ्यस्तेन पावकः ॥
मूलादष्टाङ्गुलं त्यक्त्वा अग्राच्च द्वादशाङ्गुलम् ।
अन्तरा देवयोनिः स्यात्तत्र मथ्यो हुताशनः ॥[2]
मूर्धाक्षिकर्णवक्त्राणि कन्धरापि च पञ्चमी ।
अङ्गुष्ठमात्राण्येतानि द्व्यङ्गुष्ठं[3] वक्ष उच्यते ॥
अङ्गुष्ठमात्रं[4] हृदयमङ्गुष्ठमुदरं स्मृतम् ।
एकाङ्गुष्ठा कटिर्ज्ञेया द्वौ वस्तिर्द्वौ च गुह्यकम् ॥
ऊरू जङ्घे च पादौ च चतुस्त्र्येकं यथाक्रमम् ।
अरण्यवयवा ह्येते याज्ञिकैः परिकीर्तिताः ॥
यत्तु गुह्यमिति[5] प्रोक्तं [6]देवयोनिस्तु सोच्यते[6] ।
तस्यां यो जायते वह्निः स कल्याणकृदुच्यते ॥

---

१ च—अथ राश्यादिनिर्णयः ।

२ पारस्करगृह्यभाष्ये ( १, २ ) गदाधरेण धृतो यज्ञपार्श्वीयः श्लोकोऽयं न छन्दोगपरिशिष्टे न वा क-वर्जमन्येष्वादर्श पुस्तकेषूपलभ्यते । गदाधरोद्धृत-यज्ञपार्श्वकारिकायामध्यदृष्टहीतः पाठो दृश्यते । पारस्करे (१,२) हरिहरकृतपद्धतौ तथा कर्मप्रदीपे हृदयं मात्राङ्गुष्ठमित्यादिः पाठो मुद्रापितः । प-पुस्तकेऽपि तथैव पाठः ।

३ छन्दोगपरिशिष्टे द्व्यङ्गुलं ।

४ क-च-ज-झ-पुस्तकेषु तथा पारस्करगृह्य-भाष्ये (१,२)

५ च—कुम्भमिति ।

६ छ—ज—झ—देवयोनिः स उच्यते ।

अन्यत्र[1] ये तु मथ्नन्ति ते रोगभयमाप्नुयुः ।
प्रथमे मन्थने ह्येष नियमो नेतरेषु च ॥
उत्तरारणिनिष्पन्नः प्रमन्थः सर्वदा भवेत् ।
योनिसङ्करदोषेण युज्यते ह्यन्यमन्थकृत् ॥
आर्द्रा सशुषिरा चैव घूर्णाङ्गी स्फुटिता तथा ।
न हिता यजमानानामरणिर्नोत्तरारणिः ॥

तथा [ छ प १, ८, १२ ]

खादिरो वाथ पार्णो वा द्विवितस्तिः स्रुवः स्मृतः ।
स्रुग्बाहुमात्रा विज्ञेया वृत्तस्तु प्रग्रहस्तयोः ॥

तथा [ छ प २, ५, १०-१२ ]

आज्यस्थाली च कर्तव्या तैजसद्रव्यसम्भवा ।
माहेयी वापि कर्तव्या नित्यं सर्वाग्निकर्मसु ॥
आज्यस्थाल्याः प्रमाणं तद्[2] यथाकामं तु कारयेत् ।
सुदृढामव्रणां भद्रामाज्यस्थालीं प्रचक्षते[3] ॥
तिर्यगूर्ध्वं समिन्मात्रा[4] दृढा नातिबृहन्मुखी ।
मृन्मय्यौदुम्बरी वापि चरुस्थाली प्रकीर्तिता ॥

तथा [ छ प २, ५, १४-१६ ]

इध्मजातीयमिध्मार्धप्रमाणं मेक्षणं भवेत् ।
[5]वृत्तं वार्क्षं च[5] पृथ्वग्रमवदातक्रियाक्षमम् ॥
एषैव दर्वी यस्तत्र विशेषस्तमहं ब्रुवे ।
दर्वी [6]द्व्यङ्गुष्ठपृथ्वग्रा तुरीयोनं च मेक्षणम् ॥
मुषलोदूखले वार्क्षे स्वायते सुदृढे तथा ।
इच्छाप्रमाणे भवतः सूर्पं वैणवमेव[7] इष्यते ॥[8]

वेणुमयशूर्पकरणे शतपथश्रुतिः [ श ब्रा १, १, ४, १९ ]

अथ शूर्पमादत्ते वर्षवृद्धमसीति । वर्षं वृद्धं ह्येतद् यदि नडानां यदि वेणूनां यदीषिकाणामिति ॥

---

१ छन्दोगप—अन्येषु । ज—भ—अन्यथा ।

२ आदर्शपुस्तकेषु—तु । पारस्करगृह्यभाष्ये (१, २) गदाधरधृतायां यज्ञपार्श्वकारिकायां तद्दिति । सन्ति यज्ञपार्श्वे बहूनि छन्दोगपरिशिष्टवचनानि ।

३ सुदृढामित्यादिश्लोकार्धं अ-भ-पुस्तकयोर्नास्ति ।

४ ज—भ—समं मात्रा ।

५ छन्दोगप—वृत्तमङ्गुष्ठ ।

६ क—च—घ्यङ्गुष्ठ° । प—द्व्यङ्गुल° ।

७ क—च—°मैषीक । छन्दोगप—शूर्पं वैणवम् ।

८ ङ-पुस्तके इतः परं शूर्पं त्वरत्निमात्रमित्यधिकम् ।

कात्यायनश्रौतसूत्रम् [ १, ३, ३२-३६ ]

वैकङ्कतानि पात्राणि। खादिरः स्रुवः। स्फ्यश्च। पालाशी जुहूः। आश्वत्थी उपभृत्। वारणान्यहोमसंयुक्तानि।

## अथ कुण्डनिर्माणम्

तत्र यज्ञपार्श्वः

चतुर्विंशतिपार्श्वः स्याच्छंस्यो नर्यं लिखेत्तथा।
चतुर्दशाङ्गुलैरन्यं द्व्यधिकैरिति याज्ञिकाः॥
अरत्निश्चतुरस्रस्तु पूर्वस्याग्नेः खरो भवेत्।
रथचक्राकृतिः पश्चाच्चन्द्रार्ध इव दक्षिणः॥
सभ्यावसथ्यमार्गस्तु[1] नर्यहैणः[2] प्रकीर्तितः।
द्वित्रेकपरिमाणं [3]स्यान्मुष्टयो यस्य[3] यथाक्रमम्॥
नर्यङ्गस्य[4] तृतीयेषु तथैवास्रूत्करस्य च।
पञ्चाशच्छर्कराः पश्चात् पूर्वे दद्यात्त्रिसप्ततिम्॥
दक्षिणे तु खरस्थाने दश पञ्च च सप्त च।
आधाने कीर्तिता एव मूषाखूत्करशर्कराः॥
वितस्तिमात्र उत्सङ्गो मेखलात्रयसंयुतः।
अग्नीनां तु खरः कार्यो विस्तारेण च त्र्यङ्गुलः॥
व्याममात्रेण [5]नेत्रेणाविच्छिन्नेन बलीयसा।
त्रिभिरावेष्टकैर्वेष्टश्चात्रमग्नेस्तु मन्थनम्॥
अष्टाङ्गुलः प्रमन्थः स्याच्चात्रं तु द्वादशाङ्गुलम्।
ओविली द्वादशाङ्गुला[6] एष यन्त्रविधिः स्मृतः॥

यज्ञपार्श्वः

शंस्यश्चतुर्विंशतिपार्श्वभागश्चतुर्दशाङ्गैः परिलिख्य नर्यः।
तथैव चाष्टद्विगुणैरथर्यस्त्रिंशद्भिरायस्य हरेत्तृतीयम्[7]॥

शंस्य आहवनीयः। नर्यो गार्हपत्यः। अथर्यो दक्षिणाग्निः।

---

१ ज—भ—°मानस्तु। न-व—सभ्यावसथ्यामार्गस्तु।
२ न—व—°र्यैणोह। प-पुस्तके श्लोकोऽयं नास्ति।
३ क—स्यान्मुष्ट्याग्न्याख्या।
४ प—न—यज्ञस्य।
५ नेत्रेणेति पदं सर्वेष्वादर्शपुस्तकेषु पतितम्।
६ क—अ—°ङ्गुल्य।
७ न-व-पुस्तकयोरिदं चतुर्थपादमात्रं मुद्रादितमशुद्धि-बहुलं शंस्याद्द्विगोयस्य हरेत्तृतीयमिति।

छन्दोगपरिशिष्टे [ १, ६, ११ ] कात्यायनः

> मानक्रियायामुक्तायामनुक्ते मानकर्तरि ।
> मानकृद्यजमानः स्याद्विदुषामिष निश्चयः ॥

तथा [ छ प १, ७, ६ ]

> अङ्गुष्ठाङ्गुलिमानन्तु यत्र यत्र प्रकीर्तितम् ।
> तत्र तत्र बृहत्पर्वग्रन्थिभिर्मिनुयात् सदा ॥

## अथ समिल्लक्षणम्

तत्र वायुपुराणम् [ ७५, ७१-७३ ]

> पलाशफल्गुन्यग्रोधाः प्लक्षाश्वत्थविकङ्कताः ।
> उदुम्बरस्तथा बिल्वश्चन्दनो याज्ञिकाश्च ये ॥
> सरलो देवदारुश्च शालश्च खदिरस्तथा ।
> समिदर्थे प्रशस्ताः स्युरेते वृक्षा विशेषतः ॥
> ग्राह्याः कण्टकिनश्चैव यज्ञिया ये च केचन ।
> पूजिताः समिदर्थे तु पितॄणां वचनं यथा ॥

समिदनुवृत्तौ ब्रह्मपुराणम्[१]

> पलाशश्चाथ[२] न्यग्रोधप्लक्षवैकङ्कतोद्भवाः ।
> अश्वत्थोदुम्बरौ बिल्वश्चन्दनः सरलस्तथा ॥
> शालश्च[३] देवदारुश्च खदिरश्चेति याज्ञिकाः ।

छन्दोगपरिशिष्टे [ १, ८, १६-१८ ] कात्यायनः

> नाङ्गुष्ठादधिका ग्राह्या समित् स्थूलतया क्वचित् ।
> न निर्मुक्ता[४] त्वचा चैव न सकीटा न पाटिता ॥

---

१ ब्रह्मपुराणीयत्वेनोद्ध्रियमाणं वचनमिदं दानसागरे ( ६१ ) आदिपुराणीयतया लिखितम् ।

२ ज—झ—पलाशाश्वत्थ- । दानसागरे (६१ पृः) तमेव पाठं गृहीत्वा व्याख्यातमपि—'अश्वत्थन्यग्रोधः अश्वत्थसंयुक्तो वटः अश्वत्थस्य पुनरुपादानात्' इति । संस्कारगणपतावपि ( ३२ पृः ) अत्र पलाशाश्वत्थेति श्लोकस्य द्वितीयार्धे वैतसौदुम्बराविति पाठः । कृत्यकल्पतरौ ( ब्रह्म ६८ ) वीरमित्रोदये ( परि १०४ ) च पलाशाश्वत्थेति पाठः । तत्र मित्रमिश्रेण लिखितम् 'पलाशेत्याद्यर्धश्लोकेन समिध उक्ताः अश्वत्थेत्यादिश्लोकेन यज्ञिया वृक्षा उक्ताः' इति ।

३ ज—झ—पलाशौ ।

४ छन्दोगप°—विमुक्ता ।

प्रादेशान्नाधिका नोना न तथा स्याद् विशाखिका ।
न सपर्णा न निर्वीर्या होमेषु च विजानता ॥

मैत्रायणीयपरिशिष्टम्

अथेध्मार्थे पलाशाश्वत्थखदिररोहितकौदुम्बराणां तदलाभे सर्ववनस्पतीनां[१] तिल्वकधवनीपनिम्बराजवृक्षशाल्मल्यरत्नकपित्थकोविदारविभीतकश्लेष्मातकसर्वकण्टकिवर्जम्[२] ।

वायुपुराणम् [ ६६, ७५, द्र: ]

निवासा ये च कीटानामयज्ञियाश्च गर्हिताः ।
गुल्मैश्च वेष्टिता ये च वल्लीभिश्च समावृताः ॥
शकुनीनां निवासाश्च वर्जयेत्तान् महीरुहान् ।
अन्यांश्चैवंविधान् सर्वायज्ञियांश्च विवर्जयेत् ॥

ब्रह्मपुराणम्[३]

प्रागग्राः समिधो देयास्ताश्च काम्येष्वपाटिताः ।
[४]शान्त्यर्थेषु च शस्तार्द्रा[४] विपरीता जिघांसतः ॥
विशीर्णा विदला ह्रस्वा वक्राश्च सुषिराः कृशाः ।
दीर्घाः स्थूला घुणैर्दष्टाः कर्मसिद्धेर्विनाशिकाः ॥

## अथ वृद्धिश्राद्धम्

तत्र छन्दोगपरिशिष्टे [ १, ५, २-३ ] कात्यायनः

आधाने होमयोश्चैव वैश्वदेवे तथैव च ।
बलिकर्मणि दर्शे च पूर्णमासे तथैव च ॥
नवयज्ञे च यज्ञज्ञा वदन्त्येवं मनीषिणः ।
एकमेव भवेच्छ्राद्धमेतेषु न पृथक् पृथक् ॥

---

१ क—तिल्लुकधवखनिम्ब° । घ—तिन्दुकधवनीयनिम्ब° । ज—झ—बिल्वकवनीपनिम्ब । कृत्यकल्पतरौ ब्रह्मचारिकाण्डे ( ७० पृ: ) °शाल्मल्यवन्वकपित्थ° । ज—झ—°शाल्मल्यवन्वकपित्थ° ।

२ कर्मप्रदीप-परिशिष्टप्रकाशे (२।३४ पृ:) °श्लेष्मातकारत्नकण्टकिवर्जम् ।

३ अत्र ब्रह्मपुराणीयतयोद्धृताः श्लोका दानसागरे (६१पृ) मरीचिवचनत्वेन धृताः ।

४ सस्कारगणपतौ (२२ पृ:) स मस्कार्द्रा । क क ( ब्रह्म ६८ ) काम्येषु च स शाकार्द्रा । वी मि ( परि १०४ ) शान्त्यर्थे तु समस्कार्द्रा ।

तथा [ छ प १, ५, १० ]

गणश: क्रियमाणेषु मातृभ्य: पूजनं सकृत् ।
सकृदेव भवेच्छ्राद्धमादौ न पृथगादिषु ॥

## अथाग्न्याधानविधि:

तत्र छन्दोगपरिशिष्टे [ १, ८, १-१० ] कात्यायन:

परिधायाहतं वास: प्रावृत्य तु यथाविधि ।
बिभृयात् प्राङ्मुखो यन्त्रमावृता वक्ष्यमाणया ॥
चात्रविधे[1] प्रमन्थाग्रं गाढं कृत्वा विचक्षण: ।
कृत्वोदगग्रामरणिं [2]तदूर्ध्वमुपरि न्यसेत्[2] ॥
चात्रोर्ध्वकीलकाग्रस्थामोविलीमुदगग्रगाम् ।
विष्टभ्य[3] धारयेद्यन्त्रं निष्कम्पं प्रयत: शुचि: ॥
त्रिरुद्वेष्ट्याथ नेत्रेण चात्रं पत्न्यहतांशुका ।
पूर्वं मन्थेदरण्यन्ते [4]प्राच्यग्ने: स्याद्यथा च्युति:[4] ॥
नैकयापि विना कार्यमाधानं भार्यया द्विजै: ।
अकृतं तद्विजानीयात् [5]सर्वानान्वारभन्ति यत्[5] ॥
वर्णज्येष्ठेन बह्वीभि: सवर्णाभिश्च जन्मत: ।
कार्यमग्निच्युतेराभि: साध्वीभिर्मन्थनं पृथक्[6] ॥
नात्र शूद्रां नियुञ्जीत न द्रोहद्वेषकारिणीम् ।
नाशासनस्थां नान्येन पुंसा च सह सङ्गताम् ॥
तत: शक्ततमा पश्चादासामन्यतमैव[7] वा ।
उपेतानामन्यतमा मन्थेदग्निं निकामत: ॥

---

१ चात्रबुध्ने इति कर्मप्रदीपे मुद्रापित: पाठ: । चात्ररन्ध्रे इति परिशिष्टप्रकाशकृतौ व्याख्यानं त्वस्मदीयादर्शपुस्तकेषु लब्धं चात्रविध इत्येव पाठं समर्थयते ।

२ क-ख—तदूर्ध्वं परिविन्यसेत् । अत्र कर्मप्रदीपे श्लोकार्धस्य मुद्रापित: पाठ: कृत्वोत्तरायामरणिं तद्बुध्नमुपरि न्यसेदिति । प्रकाशकृतौ व्याख्या त्वस्मदादर्शोक्तपाठसंवादिनी ।

३ ङ—विष्कभ्य । ज—विष्कत्य । झ—विष्कृत्य ।

४ ज—झ—प्राच्यामग्रे यथा च्युति: ।

५ ज-झ—सर्वानर्थांश्च भन्ति । क—सर्वानर्था भवन्ति ।

६ ङ-ज-झ—क्वचित् ।

७ कर्मप्र— मन्यतमापि वा ।

जातस्य लक्षणं कृत्वा तं प्रणीय समिध्य च ।
आधाय समिधं चैव ब्रह्माणमुपवेशयेत् ॥
ततः पूर्णाहुतिं कृत्वा सर्वतन्त्रसमन्विताम् ।
गां दद्याद् यज्ञवास्त्वन्ते ब्रह्मणे वाससी तथा ॥

## अथ कुण्डसंस्कारादिकर्म

तत्र पारस्करः [ पा गृ १, १, २-५ ]

परिसमुह्योपलिप्योल्लिख्योद्धृत्याभ्युक्ष्याग्निमुपसमाधाय दक्षिणतो ब्रह्मासनमास्तीर्य प्रणीय परिस्तीर्यार्थवदासाद्य पवित्रे कृत्वा प्रोक्षणीः संस्कृत्यार्थवत् प्रोक्ष्य निरूप्याज्यमधिश्रित्य पर्यग्नि कुर्यात् । स्रुवं प्रतप्य संमृज्याभ्युक्ष्य पुनः प्रतप्य निदध्यात् । आज्यमुद्वास्योत्पूयावेक्ष्य प्रोक्षणीश्च पूर्ववदुपयमनकुशानादाय समिधोऽभ्याधाय पर्युक्ष्य जुहुयात् । एष एव विधिर्यत्र क्वचिद्धोमः ॥

पर्यग्निकरणं वारैकं कर्तव्यं सूत्रे वारत्रयस्यानुक्तत्वात् ।

पारस्करः [ पा गृ १, २, ३-१३ ]

वैश्यस्य बहुपशोर्गृहादग्निमाहृत्य । चातुष्प्राश्यपचनवत् सर्वम् । अरणिप्रदानमेके । पञ्च महायज्ञा इति श्रुतेः । अग्न्याधेयदेवताभ्यः स्थालीपाकं श्रपयित्वाज्यभागाविष्ट्वाज्याहुतीर्जुहोति । त्वं नो अग्ने स त्वं नो अग्ने इमं मे वरुण तत्त्वा यामि ये ते शतमयाश्चाग्न उदुत्तमं भवतं न इत्यष्टौ पुरस्तात् । एवमुपरिष्टात् स्थालीपाकस्याग्न्याधेयदेवताभ्यो हुत्वा जुहोति । स्विष्टकृते च । अयास्यग्नेर्वषट्कृतं यत्कर्मणात्यरीरिचं देवा गातुविद इति । बर्हिर्हुत्वा प्राश्नाति । ततो ब्राह्मणभोजनम् ॥

चातुष्प्राश्यपचनं श्रौतप्रसिद्धं कर्म । तद्वत् कर्म कर्तव्यम् । एतत्तु वैश्यकुलादग्न्यानयनपक्षे बोद्धव्यम् ।

स्थालीपाकश्रपणानन्तरमाघाराज्यभागौ हुत्वा त्वन्नो अग्न इत्यादिभिर्मन्त्रैः प्रथममाज्येनाष्टाहुतयो होतव्याः । ततोऽग्नये पवमानायेत्यादिभिः स्थालीपाकान्नेनाहुतिचतुष्टयं होतव्यम् । तदनु पुनरपि त्वन्नो अग्न इत्यादिभिर्मन्त्रैराज्येनाष्टाहुतीर्हुत्वा स्विष्टकृदादिहोमं समाप्य तूष्णीं बर्हिरग्नौ हुत्वाहुतिशेषं प्राश्य विंशतिब्राह्मणान् भोजयेत् ।

अग्न्याधेयदेवता आह कात्यायनः [ का श्रौ ४, १०, ८-१० ]

अग्नये पवमानाय प्रथमा। अग्नये [1]पावकायाग्नये शुचये च द्वितीया[1]। अदित्यै चरुस्तृतीया[2]।

यज्ञपार्श्वः　　गर्भाधानादिसर्वेषु[3] ब्राह्मणान् भोजयेद्दश।
आवसथ्ये [4]तु विंशत्या अग्न्याधेये[4] शतात् परम्॥
आग्रयणे प्रायश्चित्ते ब्राह्मणान् दश पञ्च वा।
सहस्रं भोजयेत् सोमे ब्राह्मणानां शतं पशौ॥
चातुर्मास्ये [5]चत्वारिंशत्तथा[5] पञ्च सुराग्रहे।
अयुतं वाजपेये च अश्वमेधे चतुर्गुणम्॥

छन्दोगपरिशिष्टे [ छ प २, ५, १-२ ] कात्यायनः

ब्रह्मणे दक्षिणा देया यत्र[6] या परिकीर्तिता।
कर्मान्तेऽनुच्यमानायां पूर्णपात्रादिका भवेत्॥
यावता बहुभोक्तुस्तु[7] तृप्तिः पूर्णेन जायते।
नावरार्ध्यमतः[8] कुर्यात् पूर्णपात्रमिति स्थितिः॥

गोभिलः [ गो गृ १, १, १५-२२ ]

वैश्यकुलाद्वाम्बरीषाद्वाग्निमाहृत्याभ्यादध्यात्। अपि वा बहुयाजिन एवागाराद् ब्राह्मणस्य वा राजन्यस्य वा वैश्यस्य वा। अपि वाऽन्यं मथित्वाऽभ्यादध्यात्। पुण्यस्त्वेवानर्धुको भवति। यथा कामयेत तथा कुर्वीत[9]। स यदेवान्त्यां समिधमभ्यादधाति जायाया वा पाणिं जिघृक्षन् जुहोति तमभिसंयच्छेत् स एवास्य गृह्योऽग्निर्भवतीति। तेनैवास्य प्रातराहुतिर्हुता भवतीति॥

छन्दोगपरिशिष्टे [ १, ६, १२ ] कात्यायनः

पुण्यमेवादधीताग्निं स हि सर्वैः प्रशस्यते।
अनर्धुकत्वं यत्तस्य काम्यैस्तन्नीयते शमम्[10]॥

---

१ ज-भा—पावकाय द्वितीया अग्नये च शुचये तृतीया।
२ ज-भा—चरुश्चतुर्थी।
३ पा गृ ( १, २ ) गदाधरभाष्ये संस्कारगणपतौ ( ४१ पृः ) च °धानादिसंस्कारे।
४ क—तु विंशतिमग्न्याधेये। गदाधरभाष्ये तथा संस्कारगणपतौ त्रयस्त्रिंशच्छ्रौताधाने। क्र क ( ब्रह्म ७१ ) त्रयोदशत्यग्न्याधेये दद्यात् परम्।
५ क—चत्वारि तथा। ज-भा—तु द्वाविंशत्तथा। पा गृ ( १, २ ) गदाधरभाष्ये तु चत्वारि शतानि। क्र-क ( ब्रह्म ७१ पृः ) तु चत्वारि तथा।
६ ङ ज-भा—यथा।
७ कर्मप्र—°भोक्तुश्च
८ कर्मप्र—नावरार्ध्यं ततः।
९ गो गृ—कुर्यात्।
१० आदर्शपुस्तकेषु समम्।

## अथ मणिकावधानम्

तत्र पारस्करः [ पा गृ ३, ५, १-५ ]

अथातो मणिकावधानम्[१]। उत्तरपूर्वस्यां दिशि यूपवदवटं खात्वा कुशानास्तीर्याक्षतानरिष्टकांश्चान्यानि चाभिमङ्गलानि ऋद्धिवृद्धियुक्तानि[२] तस्मिन् मिनोति मणिकं समुद्रोऽसीति। अप आसिञ्चति। आपो रेवतीः क्षयथा हि वस्वः क्रतुं च भद्रं बिभृथा मृतं च। रायश्च स्थ स्वपत्यस्य पत्नी सरस्वती तद्गृणते वयोधादिति॥ आपोहिष्ठेति च तिसृभिः। ततो ब्राह्मणभोजनम्॥

## अथ वैश्वदेवविधिः

तत्र पारस्करः [ पा गृ २, ९, १-१६ ]

अथातः पञ्च महायज्ञाः। वैश्वदेवादन्नात् पर्युक्ष्य स्वाहाकारैर्जुहुयात्। ब्रह्मणे प्रजापतये गृह्याभ्यः कश्यपायानुमतय इति। भूतगृह्येभ्यो मणिके त्रीन् पर्जन्यायाद्भ्यः पृथिव्यै। धात्रे विधात्रे च द्वार्ययोः। प्रतिदिशं वायवे दिशां च। मध्ये त्रीन् ब्रह्मणेऽन्तरिक्षाय सूर्याय। विश्वेभ्यो देवेभ्यो विश्वेभ्यश्च भूतेभ्यस्तेषामुत्तरतः। उषसे भूतानां च पतये परम्। पितृभ्यः स्वधा नम इति दक्षिणतः। पात्रं निर्णिज्योत्तरापरस्यां दिशि निनयेद् यक्ष्मैतत्त इति। उद्धृत्याग्र ब्राह्मणायावनिज्य दद्याद्धन्त त इति। यथार्हं भिक्षुकानतिथींश्च संभजेरन्। बालज्येष्ठा गृह्या यथार्हमश्नीयुः। पश्चाद् गृहपतिः पत्नी च। पूर्वो वा गृहपतिः। तस्मादु स्वादिष्टं[३] गृहपतिः पूर्वोऽतिथिभ्योऽश्नीयादिति श्रुतेः। अहरहः स्वाहा कुर्यादन्नाभावे केनचिदा काष्ठाद्देवेभ्यः पितृभ्यो मनुष्येभ्यश्चोदपात्रात्॥

अङ्गिराः शालाग्नौ विपचेदन्नं[४] लौकिके वापि नित्यशः।
यस्मिन्नग्नौ पचेदन्नं तस्मिन् होमो विधीयते॥

---

१ क-ख-ज भा—मणिकाधानम्।

२ पारस्करगृह्ये (३, ५) ऽनुल्लिखितं पदमेतद्-वायुधेन धृतं पारस्कर-व्याख्यायन्थेषु च मुद्रापितं दृश्यते।

३ भा—स्वादिष्टं। संस्कारगणपतौ स्वादिष्ट-मित्यस्य व्याख्या—स्वात् अन्नात् यत् इष्टम् इति।

४ क-ख-ज-भा—वा पचेदन्नं।

छन्दोगपरिशिष्टे [ २, ३, ११-१३ ] कात्यायनः

अमुष्मै नम इत्येवं बलिदानं विधीयते ।
बलिदानं प्रदानार्थं[१] नमस्कारः कृतो यतः ॥
[२]स्वाहाकार-वषट्कार-नमस्कारा[२] दिवौकसाम् ।
स्वधाकारः पितॄणां तु हन्तकारो नृणां कृतः[३] ।
स्वधाकारेण निर्वपेत्[४] पित्र्यं बलिमतः सदा ।
तत्राप्येके[५] नमस्कारं[६] कुर्वते नेति गौतमः ॥

तथा [ छ प २, ४, २-३ ]

न स्यातां काम्यसामान्ये जुहोतिबलिकर्मणी ।
पूर्वं नित्यविशेषोक्तं जुहोतिबलिकर्मणोः ॥
काममन्ते भवेयातां[७] न तु मध्ये कदाचन ।
नैकस्मिन् कर्मणि तते कर्मान्यत्तायते यतः ॥

[ छ प २, ३, १४ ]

न चावराध्यौ[८] बलयो भवन्ति महामार्जारश्रवणप्रमाणात् ।
एकत्र चेदपकृष्टा[९] भवन्तीतरेतरमसंसक्ताश्च[१०] ॥

तथा [ छ प २, ४, १ ]

सर्वेषामुभयतोऽद्भिः[११] परिषेकः पिण्डवच्च पश्चिमा प्रतिपत्तिः ॥

काम्यबलिदानानन्तरं व्यासः

दत्त्वानेन विधानेन बलिं पश्चादुपस्पृशेत् ॥

अनुक्तस्थानानि बलिकर्मादीनि कुत्र करणीयानीत्याकाङ्क्षायां कात्यायनपरिभाषासूत्रम् [ का श्रौ १, ८, २६ ] उत्तरत उपचारो यज्ञः ॥

श्रुतिश्च [ श ब्रा ३, ४, ३-१८ ] उत्तरत उपचारो वै यज्ञ इति ।

अस्यार्थः—अनुक्तस्थानं यत् कर्म तदग्नेरुत्तरतः करणीयम् । क्रियमाणं च तत् पश्चिमादारभ्योत्तरान्तं[१२] वा कर्तव्यम् ।

---

१ कर्मप्र—बलिदानप्रदानार्थं । गौ स्मृ °प्रमाणार्थं । °प्रमाणार्थमिति प्रकाशकृद्धृतं पाठान्तरम् । प्रदीयतेऽनेनेति प्रदानं वाक्यमिति सारमञ्जर्यां श्रीनाथाचार्यकृता प्रदानपदस्य व्याख्या ।
२ कर्मप्र—°वषट्कारहन्तकारा ।
३ छ-ज-भ—ततः । कर्मप्र—मत. ।
४ गौ स्मृ—निनयेत् ।
५ ज—भ—चत्रापि्रके । कर्मप्र—तमपीके ।
६ कर्मप्र—नमस्कारैः ।
७ कर्मप्र—भावयेत ।
८ क—न चापराध्यौ । छ—न चापवार्यौ । ज-भ—न चापि वार्यौ । गोभि स्मृ—नावराध्यौ ।
९ कर्मप्र—चेत् कृत्वा । कात्या स्म—गोभि स्म—चेदविकृष्टा ।
१० ज-भ—कर्मप्र—कात्या स्मृ—गोभि स्म—तरेतरसक्ताश्च ।
११ कर्मप्र—उभयतोऽपि ।
१२ न—पश्चिमादारभ्य पूर्वान्तं दक्षिणादारभ्योत्तरान्तं ।

मरीचिः　　हिरश्मिवत्यां सन्ध्यायां सूर्यनक्षत्ररश्मिभिः।
　　होमकालः स निर्दिष्टो ह्यग्निगर्भा तदा मही॥

छन्दोगपरिशिष्टे [ १, ८, ४ ] कात्यायनः
　　रजोनीहारधूमाभ्रवृक्षाग्रान्तरिते रवौ।
　　सन्ध्यामुद्दिश्य जुहुयाद्व्रतमस्य न लुप्यते॥

दक्षः [ २, २८ ]　　सन्ध्याकर्मावसाने तु स्वयंहोमो विधीयते।
　　स्वयंहोमे फलं यत्तु तदन्येन न लभ्यते॥

तथा [ दक्षः २, २९ ] ऋत्विक् पुत्रो गुरुर्भ्राता भागिनेयोऽथ विट्पतिः।
　　एभिरेव हुतं यत्तु तद्धुतं स्वयमेव तु॥[१]

गोभिलः [ १, ३, १५-१६ ]

अथाप्युदाहरन्ति। कामं गृह्येऽग्नौ पत्नी जुहुयात् सायम्प्रातर्होमौ। गृहाः पत्नी गृह्य एषोऽग्निर्भवतीति॥

आश्वलायनगृह्यम् [ १, ९, १-२ ]

पाणिग्रहणादि गृह्यं परिचरेत्। स्वयं पत्न्यपि वा पुत्रः कुमार्यन्तेवासी वा। नित्यानुगृहीतं स्यात्।

छन्दोगपरिशिष्टे [ ३, १, १ ] कात्यायनः
　　असमक्षं च दम्पत्योर्होतव्यं नर्त्विगादिभिः।
　　द्वयोरप्यसमक्षं हि भवेद्धुतमनर्थकम्॥

आपस्तम्बः—[ आप ध १, १५, १२ ]
　　नाप्रोक्षितमिन्धनमग्नावादध्यात्॥

छन्दोगपरिशिष्टे [ १, ८, १०-१५ ] कात्यायनः
　　हविष्येषु यवा मुख्यास्तदनु व्रीहयः स्मृताः।
　　माषकोद्रवगौरादीन्[२] सर्वालाभेऽपि वर्जयेत्॥
पाण्याहुतिर्द्वादशपर्वपूरिका [३]रसादिना चेत् स्रुवपूरमात्रिका[३]।
दैवेन तीर्थेन च हूयते हविः स्वङ्गारिणि स्वर्चिषि तच्च[४] पावके॥
　　योऽनर्चिषि जुहोत्यग्नौ व्यङ्गारिणि च मानवः।
　　मन्दाग्निरामयावी च दरिद्रश्चोपजायते[५]॥

---

१ ऋत्विक् पुत्र इत्यादिः श्लोकोऽयं क-पुस्तके अनन्तरितोदाहृताभ्यां गोभिलाश्वलायनवचनाभ्यां परं निवेशितो दृश्यते।

२ ङ-ज-झ-प—°कोद्रवधान्यादीन्।

३ ङ-ज-झ—मध्वादिना चेत् स्रुवमात्रपूरिका। परिशिष्टप्रकाशकृता तु कंसादिनेति पठता रसादिनेति पाठो निन्दितो 'रसादिना चेदित्यपपाठो हविराधारपाणिसाहचर्यविरोधादि'ति।

४ ज—चेद्धि। झ—वह्नि°।

५ कर्मप्र—दरिद्रश्च स जायते।

तस्मात् समिद्धे होतव्यं नासमिद्धे कदाचन ।
आरोग्यमिच्छतायुश्च[1] श्रियमात्यन्तिकीं तथा ॥
जुह्वंश्च[2] हुते चैव पाणि-सूर्प-स्फ्य-दारुभिः ।
न कुर्यादग्निधमनं न कुर्याद्व्यजनादिना ॥
मुखेनैव धमेदग्निं मुखाद्ध्येषोऽध्यजायत ।
नाग्निं मुखेनेति च यल्लौकिके योजयन्ति तत् ॥

ब्रह्मपुराणम्[3] क्षुत्तृट्क्रोधत्वरायुक्तो हीनमन्त्रं जुहोति यः ।
अप्रवृद्धे[4] सधूमे वा सोऽन्धः स्यादन्यजन्मनि ॥
स्वल्पे रूक्षे सस्फुलिङ्गे वामावर्ते भयानके ।
[5]आर्द्रकाष्ठैरसम्पूर्णे फुत्कारवति पावके ॥
कृष्णार्चिषि सुदुर्गन्धे तथा लिहति मेदिनीम् ।
आहुतीर्जुहुयाद्यस्तु तस्य नाशो भवेद्ध्रुवम् ॥

छन्दोगपरिशिष्टे [ १, ८, १६ ] कात्यायनः

आज्यं [6]द्रव्यमनादेशे जुहोतिषु विधीयते ।
मन्त्रस्य देवतायाश्च प्रजापतिरिति स्थितिः ॥

मैत्रायणीयपरिशिष्टम्

[7]घृतमाज्यार्थे तैलं प्रतिनिधिः । तदभावे[8] दधि पयो वा । तदलाभे तण्डुलपिष्टानि वाद्भिः सममाज्यार्थान्[9] कुर्वन्ति ॥

तथा

दर्भास्तरणार्थे काशः प्रतिनिधिः । तदलाभे पर्ववतीभिः काण्डवतीभिरोषधीभिस्तरणार्थान् कुर्वन्ति कटोशीरनलवल्वजपलालोलपवर्जम्[10] ॥

---

१ ज-भ—आरोग्यममितायुश्च ।

२ कात्या स्मृ—गोभि स्मृ—होतव्ये च ।

३ ब्रह्मपुराणमेवाद्य पुराणमिति वैश्विदादिपुराणनाम्नेदं वचनजातमुद्धृतमिति प्रतीयते । दानसागरे (६० पृ०) पुनरिदमादित्यपुराणीयतया मुद्रापितम् ।

४ क—अप्रवृत्ते । प—अपविद्धे ।

५ क-प—आर्द्रकाष्ठैश्च सम्पूर्णे ।

६ परिशिष्टप्रकाशे हव्यमिति पाठान्तरं धृतम् । दानसागरादिनिबन्धग्रन्थेषु क्वचिद् (दा सा ६० पृ:) गव्यमित्यपि पाठो दृश्यते ।

७ दानसागरोद्धृतवचने (६७ पृ:) घृतमिति नास्ति ।

८ क—दानसा—तदलाभे ।

९ क—°माज्यार्थानि । ज—°माज्यार्थं । भ-प—°माज्यार्थे । कृत्यकल्पतरौ ( ब्रह्म ७० ) वाद्भिः संसृष्टानि [आज्यार्था]न् । परिशिष्टप्रकाशे ( २५ ) वा संसृज्याज्यार्थान् ।

१० आदर्शपुस्तकेषु—°वल्वजीशुपवर्जम् । कृत्यकल्पतरुः (ब्रह्मचा° ६९पृ:) कृत्यरत्नाकरः ( ७४पृ: ) वीरमित्रोदयस्य परिभाषाप्रकाशश्च ( १०९पृ: ) द्रष्टव्याः ।

तथा — व्रीहियवौ पुरोडाशस्यार्थे तदलाभे [1]तुषवतीभिस्तण्डुलवतीभिः [ओषधीभिः] पुरोडाशान् कुर्वन्ति। अणुचीनकल्माषमसूरकुरबककोद्रवकोरदूषवर्जम्।[2]

छन्दोगपरिशिष्टे [१, ८, ११] कात्यायनः

होमपात्रमनादेशे द्रवद्रव्ये स्रुवः स्मृतः।
पाणिनैवेतरस्मिंश्च स्रुचा चात्र न हूयते॥

वायुपुराणम् [ ७९, ८८-८९ ]

दानं प्रतिग्रहो होमो भोजनं बलिकर्म च।
साङ्गुष्ठेन [3]सदा कार्यमसुरेभ्योऽन्यथा[3] भवेत्॥
एतान्येव च कर्माणि[4] दानादीनि विशेषतः।
[5]अन्तर्जान्वविशेषेण[5] तद्वदाचमनं भवेत्॥

छन्दोगपरिशिष्टे [ २, ७, १६ ] कात्यायनः

[6]नोद्धुर्याद्धोममन्त्राणां पृथगादिषु[7] कुत्रचित्।
अन्येषां चाविकृष्टानां[8] कालेनाचमनादिना॥

तथा [ छ प ३, २, १ ]

स्वयंहोमासमर्थस्य समीपमुपसर्पणम्।
तत्राप्यशक्तस्य सतः शयनाच्चोपवेशनम्॥

पारस्करः [ पा गृ १, ९, १-५ ]

उपयमनप्रभृत्यौपासनस्य परिचरणम्। अस्तमितानुदितयोः दध्ना तण्डुलैरक्षतैर्वा। अग्नये स्वाहा प्रजापतये स्वाहेति प्रातः।

पुमांसौ मित्रावरुणौ पुमांसावश्विनावुभौ।
पुमानिन्द्रश्च सूर्यश्च[9] पुमान् संवर्ततां[10] मयि॥

पुनः स्वाहेति पूर्वां गर्भकामा॥

---

१ न—यववतीभि°।

२ कृत्यकल्पतरौ ( ब्रह्म° ७० ) कृत्यरत्नाकरे वीरमित्रोदय-परिभाषाप्रकाशे (११० पृः) कर्मप्रदीपपरिशिष्टप्रकाशे ( ३५ पृः ) च पाठान्तराणि द्रष्टव्यानि।

३ मुद्रित-वायुपु—तथा कार्यं नासुरेभ्यो यथा।

४ मुद्रित-वायुपु—सर्वाणि।

५ क-प—अन्तर्जानु विशेषेण।

६ क—न कुर्यात्। ज-भ-प—कात्या स्मृ—गोभि स्मृ—नो कुर्यात्।

७ गोभि स्मृ—प्रथमादिषु।

८ क—विशिष्टानां। च-प—निकृष्टानाम्। पारस्करीये (१,९) हरिहरभाष्ये तु अविकृष्टानामनन्तरितानामिति व्याख्यानमुपलभ्यते।

९ क—च—सोमश्च।

१० ङ-च—संचरतां। ज-भ—संचरता।

औपासनो गार्ह्याग्निः। अत्र प्राजापत्याहुतिरुपांशु प्रजापतये स्वाहेति मनसा पठित्वा होतव्या।

यथा निगदितम् [ श ब्रा १, ४, ५, १२ ]

तस्माद् यत्किञ्चित् प्राजापत्यं यज्ञे क्रियत इत्युपांश्वेव तत् क्रियत इति॥

एतच्च सर्वत्रैव प्राजापत्याहुतौ बोद्धव्यम्। अनुदितहोमिनो होमकालात्ययेऽनुदितहोमिना 'आज्यं द्रव्यमनादेशे' इति छन्दोगपरिशिष्ट-[ १, ८, १६ ] वचनादाज्येन व्यस्तसमस्तमहाव्याहृतिहोमः त्वन्नो अग्न इत्यादिपञ्चाहुतिकः सर्वप्रायश्चित्तहोमश्च विधेयः।

तथा चोपनयनकालातिक्रमप्रस्तावे पारस्करः [ २, ५, ४१ ]

कालातिक्रमे नियतवत्॥

अस्यार्थः पारस्करभाष्यकृता व्याख्यातः[१]।—

कालव्यतिक्रमे सति यन्नियतेषु श्रौतेषु निमित्तोपनिपातविहितं स्मार्तेषु तदेव भवति। तच्च प्रतिमहाव्याहृति सर्वाभिश्चतुर्थं सर्वप्रायश्चित्तमिति कात्यायनसूत्रात् [ का श्रौ सू २५, १, १२ ] कालव्यतिक्रमादन्यत्राप्यश्रूयमाणप्रायश्चित्ते दोष उत्पन्ने एतदेव भवति नैमित्तिकान्तराभावात्।

गोभिलः [ गो गृ १, ३, ६-११ ]

अहविष्यान्नस्याग्नौ जुहुयात्। कृतस्य वाऽकृतस्य वा। अकृतं चेत् प्रक्षाल्य जुहुयात् प्रोदकं[२] कृत्वा। अथ यदि दधिपयोयवागूं वा कंसेन वा चरुस्थाल्या वा स्रुवेण वैव[३]। अग्नये स्वाहेति पूर्वां तूष्णीमुत्तरां मध्ये चापराजितायां च दिशीति सायम्। अथ प्रातः सूर्याय स्वाहेति पूर्वां तूष्णीमेवोत्तरां मध्ये चैवापराजितायां चैव दिशि॥

तूष्णीमिति प्रजापतये स्वाहेति बोद्धव्यम्। अथवा ज्वलदग्निभागे होतव्यम्।

---

१ अत्र पारस्करभाष्यकृत्पदेन पारस्करगृह्यसूत्रभाष्यकारः कर्को निर्दिश्यते। तस्य व्याख्यायां तु [ पा गृ २, ५, ४१ ] ग्रन्थांशोऽयं किञ्चिदन्यथा पठितो लभ्यते यथा—"कालव्यतिक्रमे सति यन्नियतेषु विहितं श्रौतेष्व नाम्नातं नैमित्तिकेषु यद् विहितं स्मार्तं तदेव भवति। तच्च प्रतिमहाव्याहृति सर्वाभिश्चतुर्थं सर्वप्रायश्चित्तमिति। कालव्यतिक्रमादन्यत्रापि दोष उत्पन्ने एतदेव भवति नैमित्तिकान्तराभिधानात्।

२ क—हीपादकं। ज-झ-प—प्रोक्षणोदकं।

३ आसियाटिक्सोसाइटितः प्रकाशिते गोभिलगृह्यसूत्रे—वै वा। भट्टभाष्यगृहीतः पाठस्तु—देव।

तथाच श्रुतिः [ श ब्रा १, ५, ३, ७ ; १, ६, ३, १८ ]

यतो एव समिद्धतमं मन्येत तदाहुतीर्जुहुयात्। समिद्धहोमेन ह्येव समृद्धा आहुतय इति।

छन्दोगपरिशिष्टे [ ३, ५, ३ ] कात्यायनः

कृतमोदनसक्त्वादि तण्डुलादि कृताकृतम्।
व्रीह्यादि चाकृतं प्रोक्तमिति हव्यं त्रिधा बुधैः॥

गोभिलः [ गो गृ १, ९, १२-१७, १८ ]

अथ यदि गृह्येऽग्नौ सायम्प्रातर्होमयोर्वा[1] हव्यं वा होतारं वा नाधिगच्छेत् कथं कुर्यादिति। आ सायमाहुतेः प्रातराहुतिर्नात्येत्या प्रातराहुतेः सायमाहुतिरमावास्यायाः पौर्णमासं नात्येत्या पौर्णमास्या वामावास्यम्[2]। एतेनैवावकाशेन हव्यं वा होतारं वा लिप्सेत। अपि वा यज्ञियानामेवौषधिवनस्पतीनां फलानि वा पलाशानि वा श्रपयित्वा जुहुयात्। [3]अप्स्वप एवान्ततो[3] जुहुयादिति ह स्माह पाकयज्ञ ऐडो[4] हुतं ह्येव। अहुतस्य प्रायश्चित्तं भवतीति॥ अथाप्युदाहरन्ति यावन्न हूयेताभोजनेनैव तावत् सन्तनुयात्। अथ यदाधिगच्छेत् प्रतिजुहुयात्। एवमस्य व्रतं सन्ततं भवतीति॥

छन्दोगपरिशिष्टे [ २, ८, ९-१८ ] कात्यायनः

पौर्णमास्यात्यये हव्यं होता वा यदहर्भवेत्।
तदहर्जुहुयादेवममावास्यात्ययेऽपि च॥
अहूयमानेऽनश्नंश्चेन्नयेत् कालं समाहितः।
सम्पन्ने तु यथा तत्र हूयते तदिहोच्यते॥
अहुताः परिसंख्याय पात्रे कृत्वाहुतीः सकृत्।
मन्त्रेण विधिवद्धुत्वा एवमेवापरा अपि॥

## अथ पिण्डपितृयज्ञः

तत्र कात्यायनः [ का श्रौ ४, १, १-६ ]

अपराह्णे पिण्डपितृयज्ञश्चन्द्रादर्शनेऽमावास्यायाम्। दक्षिणाग्नौ श्रपणं होमश्च परिस्तीर्य तं पूर्ववत् पात्रासादनमेकशः। अपरेण गार्हपत्यं चरुमपूर्णस्रुचं वा तूष्णीं गृहीत्वोत्तरेण दक्षिणाग्निमावहन्ति तिष्ठन्। सकृत्फली-

१ गोभिलगृह्यसूत्रेऽतः परं दर्शपूर्णमासयोर्वेत्यधिकम्। ३ आदर्शपुस्तकेषु—आज्यस्येवान्ततो।
२ गो गृ—आमावास्यम्। ४ क—ऐनो। ज भा—औलो।

करोति। सारतण्डुलमपूर्णं श्रपयित्वाऽभिघार्योद्वास्य मेक्षणेन जुहोत्यग्नय इति सोमायेति च प्रास्य ॥

प्रास्येति मेक्षणं हुत्वेत्यर्थः।

[ का श्री ४, १, ७-३१ ]

तद्दक्षिणेनोल्लिखत्यपहता इत्यपरेण वा। उल्मुकं परस्तात्[१] करोति ये रूपाणीति। उदपात्रेणाऽवनेजयत्यपसव्यं सव्येन वोद्धरणसामर्थ्यात्। असाववनेनिक्ष्वेति यजमानस्य पितृप्रभृति त्रीन्। उपमूलं सकृदाच्छिन्नानि लेखायां कृत्वा यथावनिक्तं पिण्डान् ददात्यसावेतत्त इति। ये च त्वामन्विति चैके। अत्र पितर इत्युक्त्वोदङ्ङास्त आतमनात्। आवृत्याऽमीमदन्तेति जपति। अवनेज्य पूर्ववन्नीविं विस्रंस्य नमो व इत्यञ्जलिं करोति। एतद इत्युपास्यति सूत्राणि प्रतिपिण्डम्। ऊर्णां दशा वा। वयस्युत्तरे यजमानलोमानि वा। ऊर्जमित्यपो निषिञ्चति। अवधायावजिघ्रति यजमानः। उल्मुकसकृदाच्छिन्नान्यग्नौ। आधत्तेति मध्यमपिण्डं पत्नी प्राश्नाति पुत्रकामा। प्रेतेभ्यो ददाति जीवत्पितृकोऽपि जीवान्तर्हितेऽपि। जीवत्पितृकस्य होमान्तम्। अनारम्भो वा। न व्यवेते जातूकर्ण्यः। न जीवन्तमतीत्य ददातीति श्रुतेः। पूर्वो वाऽङ्गत्वात् पिण्डपितृयज्ञः। प्रकरणकाललिङ्गानुग्रहवचनानाहिताग्निश्रुतिभ्योऽनङ्गम्। अङ्गं वा समभिव्याहारात्। अनाहिताग्नेरप्येषः।

छन्दोगपरिशिष्टे [ २, ५, १२ ] कात्यायनः

[२]स्वशाखोक्तस्वरः स्निग्धो[२] ह्यदग्धोऽकठिनः शुभः।
न चातिशिथिलः पाच्यो न च वीतरसो भवेत् ॥

## अथ पत्न्यादिकालः

तत्र छन्दोगपरिशिष्टे [ २, ६, ११ ] कात्यायनः

पत्न्यादावेव कुर्वीत सदा पत्न्यादिकं चरुम्।
पूर्वाह्ण एव कुर्वन्ति[३] [४]विदेऽप्यन्ये मनीषिणः[४] ॥

लघुहारीतः पर्वणोऽन्ते तुरीये तु कार्या इष्टिर्द्विजातिभिः।
द्वितीयासहितं यस्माद् प्रयन्त्याश्वलायनाः ॥

---

१ आदर्शपुस्तकेषु पुरस्तात्।
२ कर्मप्र—स्वशाखोक्तश्च सुखिन्नो ।
३ कर्मप्र—प—कुर्वीत।
४ प—वदन्त्यन्ये महर्षयः।

## अथ पक्षादिकर्म

तत्र पारस्करः [ पा गृ १, १२, १-५ ]

पक्षादिषु स्थालीपाकं श्रपयित्वा दर्शपौर्णमासदेवताभ्यो हुत्वा जुहोति ब्रह्मणे प्रजापतये विश्वेभ्यो देवेभ्यो द्यावापृथिवीभ्यामिति विश्वेभ्यो देवेभ्यो बलिहरणं भूतगृह्येभ्य आकाशाय च। वैश्वदेवस्याग्नौ जुहोत्यग्नये स्वाहा प्रजापतये स्वाहा विश्वेभ्यो देवेभ्यः स्वाहाऽग्नये स्विष्टकृते स्वाहेति बाह्यतः स्त्रीबलिं हरति।

नमः स्त्रियै नमः[१] पुंसे वयसेऽवयसे नमः।
नमः शुक्लाय कृष्णदन्ताय पापीनां पतये नमः॥
ये मे प्रजामुपलोभयन्ति ग्रामे वसन्त उत वाऽरण्ये।
तेभ्यो नमोऽस्तु बलिमेभ्यो हरामि स्वस्ति मेऽस्तु प्रजां मे ददत्विति॥
शेषमद्भिः प्रप्लाव्य। ततो ब्राह्मणभोजनम्॥

अथ दर्शानन्तरं प्रतिपदि दर्शदेवताभ्यः स्थालीपाकं हुत्वा पौर्णमास्यानन्तरं प्रतिपदि पूर्णमासदेवताभ्यः स्थालीपाकं हुत्वा ब्राह्मणादीनां स्थालीपाकेन होमो विधेयः। तत्र दर्शदेवता अग्निर्विष्णुरिन्द्राग्नी च। पौर्णमास्यदेवता अग्निरग्नीषोमौ च।

छन्दोगपरिशिष्टे [ ३, ७, ४ ] कात्यायनः

यावता होमनिर्वृत्तिर्भवेद् या यत्र कीर्तिता।
शेषं चैव भवेत् किञ्चित्तावन्तं निर्वपेच्चरुम्॥

अथ स्रुवादिपात्रनिर्माणान्तरं सामान्यधर्मं छन्दोगपरिशिष्टे [ १, ८, १४ ] कात्यायनः

तेषां प्राक्शः कुशैः कार्यः सम्प्रमार्जो[२] जुह्वता।
प्रतापनं च लिप्तानां प्रक्षाल्योष्णेन वारिणा॥

पात्रासादने कात्यायनः ( का श्रौ २, ३, ८ ]

अपवास्य पश्चादुत्तरतो वेति॥

अत्र च प्राञ्चुदञ्चि कर्माणीति [ का श्रौ १, ७, २४ ] सामान्यपरिभाषाबलात्[३] प्रागग्राण्येव यजुर्वेदिना पात्राण्यासादनीयानि।

---

१ पा गृ—( Kashi Sanskrit Series ) प्राशनान्ते इत्यधिकम्।

२ क—सम्प्रमार्ज्यं। प—सम्प्रमार्गो।

३ ङ-ज-भ—°परिभाषावचनात्।

यज्ञपार्श्वः[१]

दृष्टोऽग्निर्यत्र नश्येत्तु मथ्यमाने हुताशने ।
यन्त्रन्तु न चलेद् यत्र पुनस्तत्रैव निर्मथेत् ॥
ग्रामात् सीमान्तरं गच्छेत् प्रत्यक्षो हव्यवाहनः ।
अहुतो वत्सरं तिष्ठेदुदकेन[२] समं गतः ॥
चतुर्भिः कारणैरेतैर्नष्टेऽग्नौ पुनराहरेत् ।

[३]मन्थने क्रियमाणे[३] सति दृष्टोऽग्निर्यदि ज्वालयितुं न पारितो यन्त्रं च यदि न चालितं तदा तस्मिन्नेव स्थाने पुनर्मथित्वा ज्वालयितव्यः। यदा तु यन्त्रं चालितं तदा तस्मिन्नेव समये पुनर्मथित्वाऽग्निं प्रज्वाल्याग्न्याधेयदेवताहोमादि पुनराधानकर्म कर्तव्यम्। तथा प्रत्यक्षोऽरण्यामनारोपितः[४] श्रौतोऽग्निः सीमान्तरं यदि नीयते तदापि पुनराधानम्। तथा पत्न्यधिष्ठितेनर्त्विजा होमे क्रियमाणेऽपि वत्सरमेकं यजमानेन होमाकरणे पुनराधानम्। तथा कुत्रापि नीयमानेऽग्नौ यद्येकोऽग्निं वहंस्ताम्रघटिकादिना जलमपि वहति तदापि पुनराधानम्। तदेवं चतुर्भिः कारणैः पुनराधानं करणीयमिति सार्धश्लोकद्वयार्थः।

पितृमेधे च दीक्षायां [५]यथैवावभृथेषु च ।
एतैरेव वहेदग्निं प्रत्यक्षमनसादिना ॥
अनो विना समारूढः [६]शम्याप्रासात् परं यदि ।
लौकिकेन समो ज्ञेयो नदीसत्रादिदर्शनात्[७] ॥
दीपैस्तु धूपाङ्गारैश्च पावकः प्रशमेद् यदि ।
उत्सन्नाग्निः स विज्ञेयः पुनराधानमर्हति ॥
पर्वणां चैव होमानां विच्छित्तिरुभयोर्यदि ।
प्राप्तयोः पर्वकाले[८] तु पुनराधानमर्हति ॥
यजमानश्च पत्नी च उभौ प्रवसतो यदि ।
आ होमाद् यदि नागच्छेत् पुनराधानमर्हति ॥
अचोदितेन पाकेन कर्तनोद्धरणेन[९] वा ।
लौकिकोऽग्निः स विज्ञेयः पुनराधानमर्हति ॥

---

१ वीरमित्रोदयः (संस्कार १०-१२ पृः) पारस्करीयं गदाधरभाष्यं (पा गृ १, २) च द्रष्टव्यम्।

२ न—गच्छेद्दाहकेन।

३ ङ—ज—झ—इन्धने दीयमाने।

४ ङ—ऽरण्यां समारोपितः। प—अरण्या समारोपितः।

५ क—जाग्रावरप्रभृतिषु। ज—झ—यथात्रवभृतीषु। प—नास्ति।

६ क—शस्या प्रासात्। ज—झ—शम्या पाशात्।

७ ङ—ज—झ—नदीगर्तादि। प—नदीगर्तनिदर्शनात्।

८ क—सर्वकाले। प—पूर्वकाले।

९ ज—कर्तन्योद्धरणेन। झ—कर्तोद्धरणेन।

अरण्योर्दग्धयोर्वापि नष्टयोः क्षीणयोस्तथा ।
आहृत्यान्ये समारोप्य पुनस्तत्रैव निर्मथेत् ॥
दाहो नाशः क्षयो वापि द्वयोरपि यदा भवेत् ।
समारोपे कृते चाग्नेः पुनराधानमर्हति ॥
मथ्यमाने तयोरग्नौ यदि पूर्वस्तु दृश्यते ।
मथ्यमानं समारोप्य पूर्वौ होमो विधीयते ॥

याज्ञवल्क्यः [ १, ८९ ]

दाहयित्वाऽग्निहोत्रेण स्त्रियं वृत्तवतीं पतिः ।
आहरेद्विधिवद्दारानग्नींश्चैवाविलम्बयन् ॥

मनुः [५, १६८] भार्यायै पूर्वमारिण्यै दत्त्वाग्नीनन्त्यकर्मणि ।
पुनर्दारक्रियां कुर्यात् पुनराधानमेव च ॥

छन्दोगपरिशिष्टे [ ३, १, ५ ] कात्यायनः

दाहयित्वाग्निभिर्भार्यां सदृशीं पूर्वसंस्थिताम् ।
पात्रैश्चाथाग्निमादध्यात् कृतदारोऽविलम्बितः ॥

यक्षपार्श्वः[1] भार्यालाभे विपत्तौ[2] च पुनराधानमिष्यते ।

छन्दोगपरिशिष्टे कात्यायनः[3]

वैताने पुनराधानं यस्याग्नीनां विधीयते ।
अकुर्वंस्तदवाप्नोति प्रायश्चित्तमृतावृतौ ॥

एवं सति भार्गवास्तादिकालाशौचेऽपि स्वकीयाशौचव्यपगमानन्तरमेवाविलम्बितः पुनराधानं कुर्यात् ।

तथा दक्षोऽपि [ २, ५४ ]

नैमित्तिकानि काम्यानि निपतन्ति यथा यथा ।
तथा तथैव कार्याणि न कालस्तु विधीयते ॥

तथा [ छः पः ३, १, १८ ]

अरण्योरल्पमप्यङ्गं[4] यावत्तिष्ठति पूर्वयोः ।
न तावत् पुनराधानमन्यारण्योर्विधीयते ॥

---

१ ङ—ज—झ—प—बृहद्यज्ञपार्श्वः ।
२ क—विपत्तौ ।
३ वचनमिदं छन्दोगपरिशिष्टे नोपलब्धम् ।
४ ज—झ—°मप्यंशं ।

छन्दोगपरिशिष्टे [ ३, १, १४ ] कात्यायनः

पूर्वैव योनिः पूर्वावृत् पुनराधानकर्मणि ।
विशेषोऽत्राग्न्युपस्थानमाज्याहुत्यष्टकं तथा ॥

## अथ प्रोषितधर्मः

तत्र छन्दोगपरिशिष्टे [ २, ८, १-२ ] कात्यायनः

निक्षिप्याग्निं स्वदारेषु परिकल्प्यर्त्विजं तथा ।
प्रवसेत् कार्यवान् विप्रो वृथैव न चिरात् क्वचित् ॥
मनसा नैत्यकं कर्म प्रवसन्नप्यतन्द्रितः ।
उपविश्य शुचिः सर्वं यथाकालमुपाचरेत् ॥

हारीतः

नाग्निवेलायां प्रवसेत् । पर्वस्वापत्सु[1] प्रोषितोऽग्निवेलायां[2] वाग्यतः प्रतिदिशं मनसा ध्यात्वोपस्थाय मन्त्रतो हुतं हुत्वाऽग्ने व्रतपत इत्युपस्थायाभिभाषेत ॥

पैठीनसिः

प्रवसितस्य प्राशितमग्नाविव जुहुयात् । न चेद्धामिवमौपासनस्य ॥ औपासनस्येत्यावसथ्याग्नेः ।

मैत्रायणीयपरिशिष्टम्

ऋषयो ह स्म प्रायासुका आसंस्तेऽग्निहोत्रेणातप्यंस्तस्मात् समस्तहोमान- पास्यन्नथोर्ध्वरात्रायापररात्राय च त्रिरात्राय षड्रात्रायाष्टरात्रायार्धमासायाग्नि- होत्रमजुहवुः । तस्मात् प्रायास्यन् व्याध्यार्तो वाऽर्धमासायाग्निहोत्रं जुहुयात् । चतुर्दश चतुर्गृहीतानि सकृदुन्नयनमेका समित् सकृद्धोमः सकृत् पाणिनि- मार्जनमित्येवं प्रातः ॥[3]

---

१ क—कर्मस्वापत्सु । ग—सर्वास्वापत्सु ।

२ क—प्रोषिताग्नि° ।

३ आदर्शपुस्तकेषु मैत्रायणीयवचनमिदमशुद्धि- बहुलमुपलब्धम् । चतुर्वर्गचिन्तामणौ कालनिर्णय- प्रकरणे (८१६ पृः) ऽप्यत्यन्ताशुद्धमेव मुद्रा- पितम् । स्वल्पाधुनोद्धृतमिदं याज्ञवल्क्यटीकायाम् (१, ९७) अपरार्कोद्धृतवचनात् स्मृति- चन्द्रिकायामाह्निककाण्ड (४२९ पृः) उद्धृत वचनाच्च किञ्चिद्भिद्यते । Caland-महोदयेन (ZDMG, LIII, p. 228) तावदिदमेव वचनं किञ्चिदन्यथापठितमनुपङ्क्तिकसूचीयतया प्रकाशितम् । मूलसूत्रं तु सदद्यता विलुप्तम् ।

मरीचि:— पश्चादौ पर्वणोऽन्ते च सायं च प्रातरेव च।
पञ्चहोमानथो दत्त्वा गत्वा कस्मान्निवर्तितः।
होमं पुनः प्रकुर्वीत न च तेन स दोषभाक्[1]॥

इति पुनराधाननिमित्तानि

## अथ सामान्यपरिभाषा

तत्र छन्दोगपरिशिष्टे [ २, ८, १६-१८ ] कात्यायनः

न स्वेऽग्नावन्यहोमः स्यान्मुक्त्वैकां समिदाहुतिम्।
स्वगर्भसंस्क्रियार्थं च यावन्नासौ प्रजायते॥
अग्निश्च नामधेयादौ होमे सर्वत्र लौकिकः।
न हि पित्रा समानीतः पुत्रस्य भवति क्वचित्॥
यस्याग्नावन्यहोमः स्यात् स वैश्वानरदैवतम्।
चरुं निर्वर्त्य[2] जुहुयात् [3]प्रायश्चित्तं तु तस्य तत्[3]॥

तथा [ छः पः २, ८, १३-१४ ]

सदारोऽपि पुनर्दारान् कुतश्चित् कारणान्तरात्।
य इच्छेदग्निमान् कर्तुं क्व होमोऽस्य विधीयते॥
स्वेऽग्नावेव भवेद्धोमो लौकिके न कदाचन।
न ह्याहिताग्नेः स्वं कर्म लौकिकेऽग्नौ विधीयते॥

अथाग्निपरिचर्यायाम् [ छः पः २, ८, ३-७ ]

पत्न्या चाप्यवियोगिन्या शुश्रूष्योऽग्निर्विनीतया।
सौभाग्यवित्तावैधव्यकामया भर्तृभक्तया॥
[ अग्निशिष्टांशशुश्रूषां बहुभार्यः सवर्णया।
कारयेत्तद्बहुत्वं चेज्ज्येष्ठयागर्हितं भवेत् ]॥[4]

---

[1] ङ—ञ—झ—यशभाक्।

[2] झ—चतुर्निर्वत्य। कात्या सृ, गोभि सृ—चरु निरूप्य। प—चतुर्भिर्निर्वपे।

[3] प—स वै तस्य प्रायश्चित्ति.। इतरादर्शपुस्तकेषु—सैव तस्य प्रायश्चित्तिः।

[4] क—गर्हितं न चेत्। ञ—झ—गर्हिता न चेत्। पङ्क्तिद्वयमिदं कात्यायनस्मृतावनुपलब्धमपि परिशिष्टप्रकाशकृता व्याख्यातामिति तदीयाप्रकाशितग्रन्थालोचनया विज्ञायते। एतदुत्तरवर्ति पङ्क्तिद्वयन्तु प्रकाशकृता न स्वीकृतम्।

या वा स्वाद्वोरसूरासामाज्ञासम्पादिनी प्रिया ।
दक्षा प्रियंवदा शुद्धा तामत्र विनियोजयेत् ॥

दिनक्रमेण वा कर्म यथाज्येष्ठं स्वशक्तितः ।
विभज्य सह वा कुर्युर्यथाज्ञानमशक्त्यावत् ॥

स्त्रीणां सौभाग्यतो ज्यैष्ठ्यं विद्यया च द्विजन्मनाम् ।
न हि स्वल्पेन पुण्येन भर्ता तुष्यति योषिताम् ॥

भर्तुरादेशवर्तिन्या यया होमाहुतिव्रतैः ।
भर्ता च तोषितोऽमुत्र सा स्त्री सौभाग्यमर्हति ॥

छन्दोगपरिशिष्टे ( ३, १, १८ ) कात्यायनः

विनष्टं स्रुक्स्रुवं न्युब्जं प्रत्यक्स्थानमुदर्चिषि ।
प्रत्यङ्मुखं च मुसलं प्रहरेज्जातवेदसि ॥

यज्ञपार्श्वः आवसथ्यात्तु कर्मार्थं योऽग्निरुद्ध्रियते क्वचित् ।
कर्मणः कर्मणः काले तं तमाहुरुपासनम् ॥

छन्दोगपरिशिष्टे ( २, ८, १५ ) कात्यायनः

द्विर्भूतो यदि संसृज्येत् संसृष्टमुपशामयेत् ।
असंसृष्टं जागरयेद् गिरिशर्मैवमुक्तवान् ॥

अस्यार्थः—वैश्वदेवान्नादिपाकनिमित्तार्थमुद्धृतेऽग्नौ द्वित्वे सति यद्यन्तराग्निर्लौकिकाग्न्यादिभिः संसृष्टो भवति तदा तमग्निं परित्यज्यासंसृष्टमग्निं जागरयेत् धुक्षेत् । एतेनोद्धृतस्यावशिष्टस्य चाग्नेरदुष्टस्यालौकिकत्वं प्रतिपादयतीति ।

तथा अपराह्णे पिण्डपितृयज्ञ इत्यध्याये कर्मकाण्डिकायां कात्यायनसूत्रम् ( का श्रौ ४, ३, ७ ) विशये लौकिकमयुक्तत्वात् ॥
अस्यार्थः कर्केण व्याख्यातः । विशये सन्देहे लौकिकाग्निं गृह्णीयात् । कुतः—अयुक्तत्वाद् विधिना गार्हपत्यादेरयुक्तत्वादप्रतिपादितत्वादिति यावत् । यथा ज्योतिष्टोमे वसतीवरीनामकसोमाभिषवार्थजलग्रहणप्रस्तावे उल्मुको हिरण्यं वोपर्युपरि धारयन्नित्यत्र ( का श्रौ ८, ९, ८ ) गार्हपत्यादेरग्निविशेषस्याप्रतिपादितत्वाल्लौकिकाग्निज्वालितैवोल्कोपरि धारणीया । एवमन्यत्रापि यत्राग्नेर्विशेषो न श्रुतस्तत्र लौकिकाग्निमेव गृह्णीयादिति कर्कव्याख्या ।

पिण्डपितृयज्ञ-कर्कभाष्ये 'सारतण्डुलमपूर्ण'मित्यत्र ( का श्रौ ४, १, ६ )

शाखान्तरश्रुतिः[1]—पूर्णं वै देवानामर्धंपूर्णं मनुष्याणामुपर्यर्धं पितॄणाम् ॥ उपर्यर्धमपूर्णं पादोनमित्यर्थः ।

इति सामान्यपरिभाषा

## अथाशौचम्

तत्र देवलः जनने मरणे नित्यमाशुच्यमनुधावति ।
सपिण्डान् मातृबन्धूंश्च यत्र क्वचन गच्छति ॥
योनिज्ञातिद्विजेष्विष्टमाशुच्यं सहवासिषु ।
भर्तृगुर्वोरशौचं स्यान्म त्युप्रसवकारणम् ॥
कारणाद् गच्छति प्रेत्य तदाशुच्यं न तान् व्रजेत् ।

दक्षः [ ६, २ ]
सद्यः शौचं तथैकाहस्त्र्यहश्चतुरहस्तथा ।
षड्हो द्वादशाहश्च पक्षो मासस्तथैव च
मरणान्तं तथा चान्यद्दश पक्षास्तु सूतके ॥

मनुः [५, ८३] शुध्येद्विप्रो दशाहेन द्वादशाहेन भूमिपः ।
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुध्यति ॥

पराशरः [३, ५] एकाहाद् ब्राह्मणः शुध्येदग्निवेदसमन्वितः ।
त्र्यहात् केवलवेदस्तु निर्गुणो दशभिर्दिनैः ॥

दक्षः [ ६, ६ ] एकाहाद् ब्राह्मणः शुध्येदग्निवेदसमन्वितः ।
हीने हीनतरे चैव त्र्यहश्चतुरहस्तथा ॥[2]

अत्र हीने श्रौताग्निरहिते [3]वेदाध्ययनस्मार्ताग्नियुक्ते त्र्यहः । हीनतरे श्रौताग्निवेदाध्ययनरहिते केवलस्मार्ताग्नियुक्ते चतुरहः ।

अथाशौचे निषेधविधौ जाबालिः
सन्ध्यां पञ्च महायज्ञान्नैत्यकं स्मृतिकर्म च ।
तन्मध्ये हापयेत्तेषां दशाहान्ते पुनः क्रिया ॥

---

१ तैत्तिरीयब्राह्मणगता ( १, ६, ८, ४ ) श्रुतिस्तु —यत् पूर्णं तन्मनुष्याणामुपर्यर्धो देवानामर्धः पितॄणामिति ।

२ आनन्दाश्रमतः प्रकाशितायां दक्षस्मृतौ ( ६, ६ ) तु पाठान्तरं दृश्यते—
एकाहाच्छुध्यते विप्रो योऽग्निवेदसमन्वितः ।
त्र्यहात् केवलवेदस्तु विहीनो दशभिर्दिनैः ॥

३ क—ग—भ—वेदाध्यापन° ।

छन्दोगपरिशिष्टे ( ३, ५, १-४ ) कात्यायनः

सूतके कर्मणां त्यागः सन्ध्यादीनां विधीयते ।
होमः श्रौते तु कर्तव्यः शुष्कान्नेनाथवा फलैः ॥
अकृतं हावयेत् स्मार्ते तदभावे कृताकृतम् ।
[1]हावयेदिति किं तस्मादनारम्भविधानतः[1] ॥
कृतमोदनसक्त्वादि तण्डुलादि कृताकृतम् ।
व्रीह्यादि चाकृतं प्रोक्तमिति हव्यं त्रिधा बुधैः ॥
सूतके च प्रवासे च अशक्तौ श्राद्धभोजने ।
एवमादिनिमित्तेषु हावयेदिति[2] योजयेत् ॥

जाबालिः जन्महान्योर्वितानस्य कर्मत्यागो विधीयते ।
शालाग्नौ केवलो होमः कार्य एवान्यगोत्रजैः ॥

मनुः[3] उभयत्र दशाहानि कुलस्यान्नं न भुज्यते ।
दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्तते ॥

यमः सूतके च कुलस्यान्नमदोषं मनुरब्रवीत् ।
एकादशे त्वह्नि कुर्याद्दानमध्ययनं तपः ॥[4]

इत्यशौचम्

## अथान्त्येष्टिः

तत्र कात्यायनः [ का: श्रौ: २५, ७, १-४१ ]

सायमाहुत्यां हुतायाञ्चेद्दुर्बलः स्यात्तदेव प्रातराहुतिस्तत्संस्थास्तुतिरग्निहोत्रस्य। जीवेञ्चेत् पुनः काले। न वा कृतत्वात्। पौर्णमास्यान्ते चामावास्यमग्निहोत्रवत्। हविष्येषु चेदाक्रियमाणेषु मरणं दक्षिणाग्नावेनान् सन्दहेत्। न वायुक्तत्वात्। गार्हपत्ये ग्रहणादि प्रागासादनात्। आसादनाद्याहवनीयो मरणान्तं भवति। संस्थाप्यं वा प्रकृतत्वात्। हविष्यवद्धौम्यम्। सन्दीपनवतीः प्रत्यग्नग्राधिश्रयन्त्युखाः। सन्तापजानग्नीनादाय सशरीरा दक्षिणा गच्छन्ति।

---

1 गोभिलस्मृतेः पाठस्तु—कृतं वा हावयेदन्नमनारम्भविधानत इति।

2 गोभि स्मृ—हावयेद्देति।

3 कृत्यकल्पतरौ (शुद्धि, २३ पृः) पराशरवीथे (१ खः, ११ पृः) स्मृतिमुक्ताफले (४७८ पृः) च मनुनाम्नोद्धृतं वचनमिदं मनुसंहितायां नोपलभ्यम्।

4 इतः परमेतदन्तस्य क-पुस्तकस्य पुष्पिका—इत्यावसथिक-महाधर्माधिकृत-श्रीहलायुधकृतौ ब्राह्मणसर्वस्वं समाप्तम्।

अनसा। वितानं साधयित्वा समे बहुलतृणेऽन्तराग्नी चितिं चिनोति। उद्धृत्य च्छिरिणोः पुरुषाद्धनीः। विशाखशराश्मगन्धपृश्निपर्णाख्याख्डाश्च। केश-श्मश्रुनखलोमनिकृन्तनानि कृत्वा विपुरीषं चेच्छन्। केशादि निखाय सर्पिषाऽन्त-रक्ता चितावेनमादधाति कृष्णाजिनमास्तीर्य प्राक्शिरसम्। सप्तसु प्राणायतनेषु सप्त हिरण्यशकलान् प्रास्यति मुखे प्रथमम्। दक्षिणहस्ते जुहूं सादयति घृतपूर्णाम्। स्फ्यञ्च। उपभृतं सव्ये। उरसि ध्रुवाम्। मुखेऽग्निहोत्रहवणीम्। नासिकयोः स्रुवौ। कर्णयोः प्राशित्रहरणे। शिरसि चमसं प्रणीताप्रणयनम्। कपालानि चैके। पार्श्वयोः शूर्पे। उदरे पात्रीं समवत्तधानीं पृषदाज्यवतीम्। शिश्ने शम्याम्। अरणी वृषणयोः। अन्तरोरू यज्ञपात्राण्यन्यानि। अप्स्ववहरणं मृन्मयाश्ममयानाम्। अयस्मयानि वा ब्राह्मणाय दद्यात्। अनुस्तरणी चेत् पश्चात् कर्णमाहृत्य हस्तयोर्वृक्कावङ्गेष्वङ्गानीति जातुकर्ण्यः। न वास्थिसन्देहात्। वपया मुखमवच्छाद्याग्निभिरादीपयन्ति। आहुतिं जुहोति पुत्रो भ्रातान्यो वा ब्राह्मणोऽस्मात्त्वमधि जातोऽसि त्वदयं जायतां पुनः। असौ स्वर्गाय लोकाय स्वाहे'ति [ वा स ३५, २१ ]। अनपेक्षमेत्योपस्पृशन्त्यपः।

अत्र अस्मात्त्वमधिजातोऽसीति मन्त्रस्यार्थो यथा—हे अग्ने अस्माद् यजमानादाधानकाले त्वमधिजातोऽसि समुत्पन्नोऽसि। अतोऽहं ब्रवीमि—अयं यजमानः पुनरपि त्वत्सकाशाज्जायतामुत्पद्यताम्। किमर्थम्—स्वर्गाय लोकाय स्वर्गलोकप्राप्त्यर्थम्। असाविति विशेषनाम विशेषणार्थम्[१]। स्वाहेति सम्प्रदानमन्त्रः। छन्दोगपरिशिष्टे [ ३, २, २-१२ ] कात्यायनः

हुतायां सायमाहुत्यां दुर्बलश्चेद् गृही भवेत्।
प्रातर्होमस्तदैव स्याज्जीवेच्चेच्छ्वः पुनर्न वा॥
दुर्बलं स्नापयित्वा तु शुद्धचैलाभिसंवृतम्।
दक्षिणाशिरसं भूमौ बर्हिष्मत्यां निवेशयेत्॥
घृतेनाभ्यक्तमाप्लाव्य सवस्त्रमुपवीतिनम्।
चन्दनोक्षितसर्वाङ्गं सुमनोभिर्विभूषितम्॥
हिरण्यशकलान्यस्य क्षिप्त्वा छिद्रेषु सप्तसु।
मुख्येष्वथापिधायैनं निर्हरेयुः सुतादयः॥
आमपात्रेऽन्नमादाय प्रेतमग्निपुरःसरम्।
एकोऽनुगच्छेत्तस्यार्धमन्नं[२] पथ्युत्सृजेद्भुवि॥

---

१ च—विशेषणविशेषणार्थम्।

२ नर्धमिति गोभिलस्मृतौ॰ कात्यायनस्मृतौ च मुद्रापितः पाठः। जन्क—'मन्नमभ्युत्-सृजेद्भुवि।

अथ श्मादहनं प्राप्त[1] आसीनो दक्षिणामुखः ।
सव्यं जान्वाच्य शनकैः सतिलं पिण्डदानवत् ॥
अथ पुत्रादिराप्लुत्य कृत्वा[2] दारुचयं महत् ।
भूप्रदेशे शुचौ युक्ते[3] पश्चाच्चित्यादिलक्षणे ॥
तत्रोत्तानं निपात्यैनं दक्षिणाशिरसं मुखे ।
आज्यपूर्णां स्रुचं दत्त्वा[4] दक्षिणाग्रां नसि स्रुवम् ॥
पादयोरधरां प्राचीमरणीमुरसीतराम् ।
पार्श्वयोः शूर्पचमसे सव्यदक्षिणयोः क्रमात् ॥
मुसलेन सह न्युब्जमन्तरूर्वोरुदूखलम् ।
चात्रीविलोकमत्रैवमनश्नुनयनो विभोः ॥
अपसव्येन कृत्वैतद्वाग्यतः पितृदिङ्मुखः ।
अथाग्निं सव्यजान्वक्तो दद्याद्दक्षिणतः शनैः ॥

सव्यजान्वक्त इति पातितवामजानुः ।

[ छ प ३, २, १३-१६ ]

अस्मात्त्वमधिजातोऽसि त्वदयं जायतां पुनः ।
असौ स्वर्गाय लोकाय स्वाहेति यजुरीरयन् ॥
एवं गृहपतिर्दग्धः सर्वं तरति दुष्कृतम् ।
यश्चैनं दाहयेत् सोऽपि प्रजां प्राप्नोत्यनिन्दिताम् ॥
यथा [5]स्वायुधधृक् पान्थो ह्यरण्यान्यपि[5] निर्भयः ।
एवमेवाग्निमान् यज्ञपात्रायुधविभूषितः ।
लोकानन्याननतिक्रम्य परं ब्रह्मैव विन्दति ॥

[ छ प ३, २, १-१० ]

अथानवेक्षमित्यापः सर्वं एव शवस्पृशः ।
स्नात्वा सचेलमाचम्य दद्युरस्योदकं जले[6] ॥

---

१ ङ-च-ज-झ—प्राप्तम् ।

२ कुर्यादिति मुद्रापितः पाठः ।

३ देशे इति मुद्रापितः पाठः । अस्मद्दृष्टेषु छन्दोगपरिशिष्टस्य हस्तलिखितग्रन्थेषु तु युक्त इत्येव ।

४ दद्यादिति मुद्रापितः पाठः ।

५ ङ—स्वायुधभृत्याढ्यो भयस्थानेऽपि । च—भयब्रह्मभृत्यार्थो भयस्थानेऽपि । ज-झ—स्वायुधभृत्यार्थो ।

६ स्थले इति मुद्रापितः ( गोभि स्मृ कात्या स्मृ ) पाठः ।

[1]गोत्रनामपदान्तेन तर्पयामीत्यहं वचः[1] ।
दक्षिणाग्रान् कुशान् कृत्वा सतिलांस्तु पृथक् पृथक् ॥
एवं कृतोदकान् सम्यक् सर्वान् शाद्वलसंस्थितान् ।
आप्लुत्य पुनराचान्तान् वदेयुस्तेऽनुयायिनः ॥
मा शोकं कुरुतानित्ये सर्वस्मिन् प्राणिधर्मिणि ।
धर्मं कुरुत यत्नेन यो वः सह गमिष्यति ॥
मानुष्ये कदलीस्तम्भनिःसारे सारमार्गणम् ।
यः करोति स संमूढो जलबुद्बुदसन्निभे ॥
गन्त्री वसुमती नाशमुदधिर्दैवतानि च ।
केन प्रख्यः कथं नाशं मर्त्यलोको न यास्यति ॥
पञ्चधा सम्भृतः कायो यदि पञ्चत्वमागतः ।
कर्मभिः स्वशरीरोत्थैस्तत्र का परिदेवना ॥
सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।
संयोगाश्च वियोगान्ता मरणान्तं च जीवितम् ॥
श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः ।
अतो न रोदितव्यं हि क्रिया कार्या [2]तु शक्तितः[2] ॥
एवमुक्त्वा व्रजेयुस्ते गृहं [3]बालपुरःसराः ।
स्नानाग्निस्पर्शनाज्याशैः[4] शुध्येयुरितरे कृतैः[5] ॥

[ छ प ३, ३, ७-८ ]

अनयैवावृता नारी दग्धव्या या व्यवस्थिता ।
अग्निप्रदानमन्त्रोऽस्यां न प्रयोज्य इति स्थितिः ॥
अग्निनैव दहेद्भार्यां स्वतन्त्रा पतिता न चेत् ।
तदुत्तरेण पात्राणि दाहयेत् पृथगग्निके ॥

---

१ गोत्रनामानुवादान्ते ( गोभि स्मृ - नु वाक्यं ते ) तर्पयामीत्यनन्तरमिति मुद्रापितः ( कात्या स्मृ ) पाठः ।

२ च—नु शक्तितः । च—विधानतः ।

३ लघुपुरःसरा इति मुद्रापितः पाठः ।

४ च— नाद्यैश्च । ल— नाद्यार्थैः । प—स्नानाग्निस्पर्शनाद्यैः । रघुनन्दनस्तु शुद्धितत्त्वे स्नानाग्निस्पर्शनाभ्यासैरिति पठित्वा कारिकामिमां व्याख्यातवान्—'एवं शोकापनोदनान्ते सपिण्डसगोत्राभ्यामितरे सर्वे सम्बन्धरहितास्त्रिनिमज्ज्य वारत्रयमग्निं स्पृष्ट्वा शुद्धा भवन्ति' इति ।

५ च—जनाः ।

## अथास्थिसञ्चयनम्

[ क प ३, ४, ८-१४ ]

अपरेद्युस्तृतीये वा अस्थिसञ्चयनं भवेत् ।
यत्तत्र विधिरादिष्ट ऋषिभिः सोऽधुनोच्यते ॥
स्नानान्तं पूर्ववत् कृत्वा गव्येन पयसा तथा ।
सिञ्चेदस्थीनि सर्वाणि प्राचीनावीत्यभाषयन् ॥
शमीपलाशशाखाभ्यामुद्वृत्योद्धृत्य भस्मनः ।
आज्येनाभुग्नया[1] गव्येन सेचयेद्गन्धवारिणा ॥
मृत्पात्रसम्पुटे कृत्वा सूत्रेण परिवेष्ट्य च ।
अभ्रं शिन्यां[2] शुचौ देशे निखनेद्दक्षिणामुखः ॥
पूरयित्वावटं पङ्कपिण्डशैवालसंयुतम् ।
दत्त्वोपरि समं शेषं कृत्वा पूर्वाह्णकर्मणा[3] ॥
एष एवाग्निहोताग्नेः प्रेतस्य विधिरिष्यते ।
स्त्रीवदग्निप्रदानं स्यादयातोऽनुक्तमुच्यते ॥

तथा [ क प ३, ४, २-३ ]

विदेशमरणेऽस्थीनि ह्याहृत्याभ्युच्य सर्पिषा ।
दाहयेदूर्णयाच्छाद्य[4] पात्रन्यासादिपूर्ववत् ॥
अस्थ्नामलाभे पर्णानि सकलान्युक्तयावृता[5] ।
[6]दाहयेदस्थिसंख्यानि ततः प्रभृति सूतकम् ॥

[ क प ३, ४, १ ]

एवमेवाहिताग्नेस्तु पात्रन्यासादिकं भवेत् ।
कृष्णाजिनादिकस्यात्र[7] विशेषोऽध्वर्युचोदितः[8] ॥

पारस्करः [ ३, १०, १०-२३ ]

यद्युपेतो भूमिजोषणादिसमानमाहिताग्नेरोदकान्तस्य गमनात् । शालाग्निना दहन्त्येनमाहितश्चेत् । तूष्णीं ग्रामाग्निनेतरम् । संयुक्तं मैथुनं

---

१ भ्यन्येति मुद्रापितो गोभिलस्मृतिपाठः ।
२ अभ्रं खात्वेति मुद्रापितो गोभिलस्मृतिपाठः ।
३ क-ज-भ—पूर्वाह्णकर्मणि ।
४ क-ज-भ—°र्णमावाद्य । न-प- सूर्णमाच्छाद्य ।
५ ज-भ—सकलान्यथयावृतान् ।
६ भर्जयेदिति मुद्रापितो गोभिलस्मृतिपाठः ।
७ ज—भ— °कं चात्र ।
८ गोभि स्म— °चोदितः ।

वोदकं याचेरन्नुदकं करिष्यामह इति। कुरुध्वं मा चैवं पुनरित्यशतवर्षे प्रेते। कुरुध्वमित्येवेतरस्मिन्। सर्वे ज्ञातयोऽपोऽभ्यवयन्त्यासप्तमात् पुरुषाद्दश-माद्वा। समानग्रामवासे यावत्सम्बन्धमनुस्मरेयुः। एकवस्त्राः प्राचीनावीतिनः। सव्यस्यानामिकयाऽपनोद्यापनः शोशुचदघमिति। दक्षिणामुखा निमज्जन्ति। प्रेतायोदकं सकृत् प्रसिञ्चन्त्यञ्जलिनाऽसावेतत्त उदकमिति। उत्तीर्णाञ्छुची देशे शाद्वलवत्युपविष्टांस्तत्रैतानपवदेयुः। अनवेक्षमाणा ग्राममायान्ति रीतीभूताः कनिष्ठपूर्वाः।

छन्दोगपरिशिष्टे [ २, ८, ४-६ ] कात्यायनः

महापातकसंयुक्तो दैवात् स्यादग्निमान् यदि।
पुत्रादिः [१]पालयेदग्निं युक्तं वा दोषसंक्षयात्[१] ॥
प्रायश्चित्तं [२]न कुर्याच्चेत्[२] कुर्वन् वा म्रियते यदि।
गृह्यं निर्वापयेच्छ्रौतमुदस्येत्[३] सपरिच्छदम् ॥
सादयेदुभयं वाप्सु अग्नोऽग्निरभवद्यतः।
पात्राणि दद्याद्विप्राय दहेदप्स्वेव वा क्षिपेत् ॥

इत्यावसथिकमहाधर्माधिकृत-श्रीहलायुधकृतौ ब्राह्मण-सर्वस्वे आवसथ्याधानाद्यन्त्येष्ट्यन्तकर्मणां निबन्धः ॥

## अथावसथ्याधानाद्यन्त्येष्टिकर्मणां मन्त्रव्याख्या

तत्रावसथ्याधानेऽग्निस्थापनाद्याज्यभागहोमानन्तरम्

पारस्करः [ पा गृ १, २, ७-८ ]

आज्यभागाविष्ट्वाऽज्याहुतीर्जुहोति॥ त्वन्नो अग्ने सत्वन्नो अग्न इमं मे वरुण तत्त्वा यामि ये ते शतमयाश्चाग्न उदुत्तमं भवतं न इत्यष्टौ पुरस्तात्। एवमुपरिष्टादिति।

तत्राज्याहुतिमन्त्राः

**त्वं नो अग्ने वरुणस्य ॥** [ पूर्वं सीमन्तोन्नयने ( १८३ ) व्याख्यातम् ]

**स त्वं नो अग्नेऽवमो ॥** [ पूर्वं सीमन्तोन्नयने ( १८४ ) व्याख्यातम् ]

ङ-ज-झ-पुस्तकेषु सीमन्तोन्नयनप्रकरणे पठिता मन्त्रा अत्रापि सव्याख्यानं प्रदत्ताः।

१ गोभि स्मृ— 'दग्नीन् युक्त आदोषसंचयम्।
२ ततः कुर्यादिति गोभिलस्मृतौ कात्यायनस्मृतौ च पाठः।
३ च्छ्रौतमत्यर्थे दिति गोभिलस्मृतौ च्छ्रौतमप्स्वसे-दिति च कात्यायनस्मृतौ मुद्रापितौ पाठौ।

**इमं मे वरुण श्रुधी हवमद्या च मृडय।**

**त्वामवस्युरा चके ॥ ३५५**

[ ऋ स १, २५, १९ । वा स २१, १ । का स २३, १ ]

हे वरुण मे मम इमं हवम् आह्वानं श्रुधि शृणु। श्रुत्वा अद्य अस्मिन् दिवसे मृडय सुखी भव। त्वाम् आचके अहं कामये। किम्भूतोऽहम्—अवस्युः अवनं पालनमिच्छुरित्यर्थः। अहमात्मनः पालनमिच्छन् त्वां पालकं कामये इत्यर्थः। ममाह्वानं श्रुत्वा आगत्य च वरुणो ममाहुत्या सुखी भूत्वा मां पालयत्विति याच्ञा वाक्यार्थः। मृडयेति मृड सुखने इत्यस्य धातो रूपम्। आचके चक तृप्तावित्यस्याङ्पूर्वस्य रूपम् ॥ ३५५ ॥

**तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः।**

**अहेडमानो वरुणेह बोध्युरुशंस मा न आयुः प्रमोषीः ॥ ३५६**

[ ऋ स १, २४ ११ । वा स १८, ४९ ; २१, २ । का स २०, १९ , २३, २ ]

तच्छब्दोऽयं यच्छब्दार्थः। तदाशास्ते इति पुनस्तच्छब्ददर्शनात्तदो यत्त्वा इति सम्बन्धः। यत् त्वा त्वां यामि याचामि। किम्भूतः—वन्दमानः। केन—ब्रह्मणा त्रयीलक्षणेन वेदेन। ततो यजमानो यागकारो आशास्ते प्रार्थयते। कैः—हविर्भिः होतव्यैर्घृतैः। यदहं नित्यं याचामि तदिदानीं हविर्दानपूर्वकमाशंसामीत्यर्थः। हे वरुण उरुशंस सुबहुस्तव[1] इह कर्मणि अहेडमानः अक्रुध्यमानः त्वं बोधि जानीहि। ज्ञात्वा च नः अस्माकम् आयुर्जीवनं मा प्रमोषीः मा खण्डय। हे वरुण यदायुषोऽखण्डनं मम नित्यं प्रार्थनीयं तदहं हविर्दानेन त्वामाराध्य प्रार्थये। तत्त्वं जानीहि। ज्ञात्वा च ममायुर्मा खण्डयेति याच्ञा वाक्यार्थः। अत्र यामीत्यस्य वर्णागमन्यायेन चकारलोपः[2] ॥ ३५६ ॥

**ये ते शतं वरुण ॥** [ पूर्वं सीमन्तोन्नयने ( १८६ ) व्याख्यातम् ]

**अयाश्चाग्नेऽस्यनभिशस्तिपाश्च सत्यमित्त्वमया असि।**

**अया नो यज्ञं वहास्यया नो धेहि भेषजम् ॥ ३५७**

[ पा गृ १, २, ११ ]

---

१ त—बहुविभव। न—प—बहुविस्तर।

२ "अथापि वर्णलोपो भवति तत्त्वा यामीति" यास्कीयं निरुक्तम् ( २।१ )। तत्र च दुर्गाचार्य-टीका—"अत्र चकारलोपः। याचामीत्येवमेतद् द्रष्टव्यम्। अयं च छान्दस एव। अत एव च छान्दसत्वादेवमेव याच्ञाकर्मस्वयं पठितः-'यामि मन्महे' इति। भाषायां याचे इति भवति।"

हे अग्ने त्वम् अयाश्च असि प्राणिनां शुभावहविधिरपि असि। अपरम्—अनभिशस्तिपाश्चासि अविद्यमाना अभिशस्तिर्याच्ञा यस्य पुरुषस्य सः अनभिशस्तिः तमपि[1] पासि रक्षसि इत्यनभिशस्तिपाश्च त्वम्। अयमर्थः—यस्त्वां रक्षणार्थं न याचते तस्यापि त्वं माहात्म्याद्रक्षको भवसीति। तदित्थम्भूतस्त्वम् अया आगच्छ। आगत्य नः अस्माकं यज्ञं वह यज्ञविरेतद्धुतं तद्देवान् प्रापय। किञ्च त्वं सत्यमित् सत्यमेव अया असि ज्ञाता असि जगतः संसारनिस्तारोपायं जानासीत्यर्थः। अतः कारणादपि त्वम् अया आगच्छ आगत्य च नः अस्माकं भेषजं धेहि अस्मन्निस्तारोपायमौषधं परिकल्पय। अत्र यद्यपि लोके शुभावहविधिवाचो [2]अयशब्दोऽकारान्तस्तथापि छन्दसि सकारान्तः। सत्यमिदिति इच्छब्दोऽव्ययमवधारणार्थः। अया नो यज्ञं वहास्यया नो धेहि भेषजमित्यया अया इति क्रियापदद्वयमत्यन्तार्थद्योतनार्थम्। अया इति इण् गतावित्यस्य लेण्मध्यमपुरुषस्यैकवचने सिप्। इतश्च लोपः परस्मैपदेष्वितीकारलोपः [ पा ३, ४, ९७ ]। धातोर्गुणः। लेटोऽडाटावित्यडागमः [ पा ३, ४, ९४ ]। आङ्पूर्वस्य गुणस्याकारेणैकादेशे सति वर्णव्यत्ययेन ह्रस्वत्वम्। अया इति सर्वे गत्यर्था ज्ञानार्था इति कृत्वा एति जानातीत्यसुन्प्रत्यये रूपम् ॥ ३५७ ॥

उदुत्तमं वरुण ॥ [सौमन्त्रोन्नयने १८७][3]

भवतं नः समनसौ सचेतसा अरेपसौ ।
मा यज्ञꣳ हिꣳसिष्टं मा यज्ञपतिं जातवेदसौ शिवौ
भवतमद्य नः ॥ ३५८

[ वा स ५, ३ ; १२, ६०—सचेतसावरेपसौ । का स ५, ३ ; १३, ६१ ]

हे जातवेदसौ अग्नी। अत्राहितो मूर्त एकोऽग्निः सम्बोध्यश्चापरश्चामूर्तो मन्त्रप्रकाश्यः। युवां नः अस्माकम् अरेपसौ रेपः पापं तदनयोर्नास्तीति अरेपसौ भवतम्। किम्भूतौ युवाम्—समनसौ समानमनस्कौ एकहृदयाविति यावत्। पुनः किम्भूतौ—सचेतसौ समानज्ञानौ। किञ्च यज्ञं दर्शपौर्णमासादि मा हिंसिष्टं मा विनाशयतम्। तथा यज्ञपतिम्। मा हिंसिष्टमित्यनेनैव सम्बन्धः। तथा अद्य अस्मिन्नेव दिवसे नः अस्माकं शिवौ शान्तौ भवतम्। हे अग्नी युवामेकचित्तावपापौ भूत्वास्माकं यज्ञस्य शरीरस्य चाहिंसकौ शान्तौ

---

१ ङ—ज—छ—त—तमपि।

२ अयः शुभावहो विधिरित्यमरः [ १, ४, २७ ]।

३ ङ-ज-झ—पुस्तकेषु मन्त्रोऽयमुपनयनप्रकरण एव व्याख्यातः।

भवतमिति याच्ञा वाक्यार्थः। अत्र सचेतसौ इति पदे पठ्यते संहितायां तु सचेतसा इति पाठः ॥ ३५८ ॥

अग्न्याधेयदेवताभ्यः स्थालीपाकहोमानन्तरं पारस्करः ( १, २, ९-११ )— स्थालीपाकस्याग्न्याधेयदेवताभ्यो हुत्वा जुहोति स्विष्टकृतं च अयाश्चाग्न इति ।

**अयाश्चाग्ने वषट्कृतं यत्कर्मणात्यरीरिचम् ।**

**देवा गातुविदः स्वाहा ॥ ३५९**

[ काठक स ५, ४ । पा गृ १ २, ८ ]

हे अग्ने अयाः आगच्छ। चकार उत्तरत्र सम्बन्धनीयः। त्वय्यागते यत् च वषट्कृतं यज्ञं कर्मणा होमादिना अत्यरीरिचम् अतिरिक्तं कृतवानस्मि तत् देवा ब्रह्मादयः[१]। शमयन्तु इत्यध्याहार्यम्। किम्भूताः—गातुविदः गातुं यज्ञं विदन्ति जानन्तीति गातुविदः। अत्यरीरिचमित्युपलक्षणम्। न्यूनञ्च यत् कृतवानस्मि इत्यपि बोद्धव्यम्। हे अग्ने अया आहितस्त्वमत्र सन्निहितो भव। अस्मिन् कर्मणि न्यूनातिरिक्तकर्मजनितदोषं यज्ञवेदिनो देवास्त्वदीयोपस्थानेन शमयन्त्विति वाक्यार्थः। गातुर्यज्ञ इति निर्घण्टः[२] ॥ ३५९ ॥

समारोपणपूर्वकपुनराधाने अरणिप्रतपने

**अयं ते योनिः ॥** [ मन्त्रव्याख्या निरग्निवैश्वदेवप्रकरणे ( ९३ ) ऽनुसन्धेया ।

इत्याधानमन्त्रव्याख्या

## अथ मणिकाधानमन्त्राः

मणिकाधाने पारस्करः [ पा गृ ३, ५, २ ]

उत्तरपूर्वस्यां दिशि यूपवदवटं खात्वा इत्यतिदेशत्वात् 'देवस्य त्वा' इत्यभ्र्यादानम्। 'इदमहम्' इत्यवटपरिलेखनमिति[३]।

अत्राभिग्रहणे अभ्र्या भूमिपरिलेखने च

**देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे नार्यसि ॥[४] ३६०**

[ वा स ५, २२ । का स ५, १८ ]

---

१ ङ-ज भ—ब्राह्मणादयः।

२ निघण्टौ गातुशब्दो यज्ञार्थे न पठ्यते।

३ कात्यायनश्रौतसूत्रम् [६, २, ८] द्रष्टव्यम्।

४ हलायुधकृतो मन्त्रांशविभागोऽत्र कात्यायनश्रौतसूत्रपठितमन्त्रांशविभागेन सम्वदति। मुद्रापितसंहितादिग्रन्थेषु मन्त्रोऽयमन्यथा विभक्तो दृश्यते।

हे अभ्रे[1] त्वामाददे गृह्णामि। कस्मिन् सति—देवस्य सवितुः प्रसवे अभ्यनुज्ञाने सम्मताविति यावत्। केन गृह्णामि—अश्विनोः अश्विनी-कुमारयोः बाहुभ्याम्। तथा पूष्णः आदित्यस्य हस्ताभ्याम्। त्वं नारी असि मनुष्यस्त्री भवसि इत्यनुवादः। नार्यसीत्यभ्रिमुक्तोऽयं[2] सवितुः सम्मतावश्विनी-कुमाराभ्यां बाहुदानेन पूष्णा च हस्तदानेनानुगृहीतोऽहं त्वां गृह्णामीति क्रिया वाक्यार्थः॥ ३६०॥

**इदमहं रक्षसो ग्रीवा अपि कृन्तामि॥ ३६१॥**

[ वा स ५, २२। का स ५, २८ ]

अहमिदं यन्मणिकावधानार्थं गर्तं खनामि तत्र[3] रक्षसः रक्षसां यज्ञविरोधिनां ग्रीवा अपि कृन्तामि छिनद्मि। निर्विघ्नयज्ञसम्पत्तयेऽहं यज्ञविरोधिनां राक्षसानां शिरांसि छिनद्मीति वाक्यार्थः। रक्षस इति बहुवचनस्थान एकवचनम्॥ ३६१॥

अवटे मणिकारोपणे[4] पारस्करः [ पा गृ ३, ५, २ ]—तस्मिन् मणिकं मिनोति

**समुद्रोऽसि नभस्वानार्द्रदानुः शं भूः॥ ३६२॥**

[ वा स १८, ४५। का स २०, १५। पा गृ ३, ५, २ ]

हे मणिक त्वं समुद्रोऽसि जलाधाररूपोऽसि। किञ्च नभस्वान् वात-रूपोऽसीति पूर्ववत् सम्बन्धनीयम्। समुद्रवातयोः सारूप्यप्रतिपादकं विशेषण-माह—आर्द्रदानुः आर्द्रं जलं शीतादिकं ददातीति आर्द्रदानुः। एवम्भूतस्त्वं शं भूः कल्याणो भव। यस्त्वं समुद्रवातयोः सदृशः सोऽस्माकं कल्याणो भवेति याच्ञा वाक्यार्थः। आर्द्रदानुरिति डु दाञ् दान इत्यस्य धातोर्दाभाभ्यां नुरित्युणादिसूत्रेण ( उ ३, ३२ ) नुप्रत्ययः॥ ३६२॥

मणिक उदकासेके पारस्करः [ पा गृ ३, ५, ३-४ ]

अप आसिञ्चत्यापो रेवतीरिति। आपो हि ष्ठेति चेति तिसृभिरिति।

**आपो रेवतीः क्षयथा हि वस्वः क्रतुञ्च भद्रं बिभृथामृतञ्च।**
**रायश्च स्थ स्वपत्यस्य पत्नीः सरस्वती तद्गृणते वयो धात्॥ ३६३**

[ ऋ स १०, ३०, १२। पा गृ ३, ५, ३ ]

१ त—न—पुस्तकयोर्नास्ति।

२ न—°त्यभ्रिमूर्तेः।

३ न—कुम्भ इत्यधिकम्।

४ मणिकशब्देनालिञ्जरोऽभिधीयत इति कर्कः। मणिकः शरावाकृतिरुदपात्रमिति च पारस्कर-गृह्यसूत्रभाष्ये विश्वनाथः। अत्र मणिकावधान-खण्डस्य प्रारम्भे (३२० पृः) मणिकाधानमन्त्रा इति मुद्रापितम्।

हे आपः। किम्भूताः—रेवतीः शब्दं कुर्वन्त्यः। यूयं क्रतुं च अमृतं च बिभृथ धारयथ। किम्भूतम्—भद्रं कल्याणकरम्। न केवलमित्थम्। रायः च स्थ धनानि च भवथ। पुनः किम्भूता यूयम्—अपामपत्यस्य वह्नेः सु सुष्ठु पत्नीः पालयित्र्यः। हि यस्मात् यूयं वस्वः मधुराः। मधुरं हि सर्वस्य प्रियं भवति। तस्मात् चयथ अस्मिन् मणिके निवसथ। किञ्च भवत्यो वयो धात् वयः आयुः तत् दधतीत्यर्थः। सकलप्राणिनामायुर्दात्र्य एवम्भूता यूयम्। सरस्वती नदी यथा गृणाति स्तुवते तद्वदित्यर्थः। रेवतीरिति रेव शब्द इत्यस्मात् शत्रन्तात् स्त्रीप्रत्यये आगमशासनस्यानित्यात् नुम् न भवति। वस्व [स्मृतं] स्यान्मधुरेऽन्यवच्चेत्यभिधानम्॥ ३६३॥

आपो हि ष्ठेतिमन्त्रव्याख्या प्रातःस्नानेऽनुसन्धेया (२४ पृः)॥

इति मणिकावधानमन्त्रव्याख्या

तत्र पारस्करः [पा गृ २, ६, ३१]—वैणवं दण्डमादत्ते

**विश्वाभ्यो मा नाष्ट्राभ्यस्परिपाहि सर्वतः॥ ३६४॥**

[वा स, का स ३७, १२। पा गृ २, ६, ३१]

हे वैणवदण्ड सर्वाभ्यः नाष्ट्राभ्यः नाशकारिणीभ्यः मा मां सर्वतः परिपाहि सर्वप्रकारेण रक्षेति याच्ञा वाक्यार्थः॥ ३६४॥

इति वैणवदण्डमन्त्रव्याख्या

वैश्वदेवे सायम्प्रातर्होमयोश्च सप्त त इत्यग्निपूजामन्त्रार्थो निरग्निवैश्वदेव-प्रकरण (१०४ पृः) एवानुसन्धेयः। पश्चादिकर्मणि[१] प्रायश्चित्तहोमे पञ्च वारुणमन्त्रार्था आधानप्रकरणेऽनुसन्धेयाः (३१७ पृः)। पिण्डपितृयज्ञमन्त्रार्थाश्च श्राद्धप्रकरणेऽनुसन्धेयाः।

---

१ क-ज-भ—पश्चादिहोमकर्मणि।

## नवान्नप्राशनम्

व्रीहियवान्नप्राशने आज्यहोमानन्तरं पारस्करः [ पा गृ ३, १, २ ]

आज्यभागाविष्ट्वाज्याहुती जुहोति

**शतायुधाय शतवीर्याय शतोतयेऽभिमातिषाहे ।**
**शतं यो नः शरदो जिजीयात्[1] इन्द्रो नेषदति दुरितानि**
**विश्वा स्वाहा ॥ ३६५ ॥**

[ तै स ५, ७, २, ७ । पा गृ ३, १, २ । म ब्रा २, १, ९ ]

य इन्द्रः नः अस्माकं शरदः शतं जिजीयाः वर्षशतं सुखेन अतिशयीयाः अतियापयतीत्यर्थः। य इन्द्रो नोऽस्माकं दुरितानि व्यसनानि विश्वानि अतिनेषत् नयति अपगमयतीत्यर्थः। तस्मै इन्द्राय एतद्धविः स्वाहा। किम्भूताय—शतायुधाय अनेकप्रकारवज्राय शतवीर्याय शतसंख्यबलाय शतोतये शतधा रक्षणकराय अभिमातिषाहे अभिमातयः प्रतिपक्षाः तान् सहते अभिभवतीत्यभिमातिषाट् तस्मै अभिमातिषाहे। शतोतय इति ऊतिः रक्षणम्। अव रक्षण इत्यस्य धातोः प्रयोगः। अभिमातिषाह इति छन्दसि सह (पा ३, २, ६३) इति ण्विप्रत्ययः। नेषदिति णीञ् प्रापण इत्यस्माद्धातोर्लेट् तिप्। इतश्च लोपः परस्मैपदेषु (पा ३, ४, ९७) इति सिप्। लेटोऽडाटौ (पा ३, ४, ९४) इत्यडागमः ॥ ३६५ ॥

**ये चत्वारः पथयो देवयाना अन्तरा द्यावापृथिवी वियन्ति ।**
**तेषां यो अज्यानिमजीजिमावहास्तस्मै नो देवाः**
**परिदत्तेह सर्वे[2] ॥ ३६६ ॥**

[ तै स ५, ७, २, ३ । पा गृ ३, १, २ । म ब्रा २, १, १० ]

---

१ अजीजानिति पारस्करगृह्यसूत्रे ( ३, १, २ ) अजीजादिति मन्त्रब्राह्मणे (२, १, ९) अजीया-दिति च तत्रैव सायणभाष्ये अजीतानिति तैत्तिरीयसंहितायां (५, ७, २७) अनयदिति काठकसंहितायां ( १३, १५ ) नयदिति च मानवश्रौतसूत्रे ( १, ६, ४, २१ ) पठ्यते ।

२ मन्त्रेऽस्मिन् अजीजिमित्यत्र तैत्तिरीयसंहितायाम् (५, ७, २, ८) अजीतिमिति पाठो दृश्यते । पारस्करगृह्यसूत्रे ( ३, १, २ ) तथा मन्त्रब्राह्मणे ( २, १, १० ) "अस्मदीय-ड-पुस्तकसंवादी अजीजिमित्येव पाठः। मन्त्रब्राह्मणभाष्ये सायण-गृहीतः पाठस्तु अजीतिमावहात् ( कलि-काता संस्कृतमहाविद्यालयगवेषणाग्रन्थमालायां प्रकाशितं छान्दोग्यब्राह्मणं पृः ११६ द्रष्टव्यम् )। आवहा इत्यत्र छान्दोग्य-मन्त्रभाष्य वर्जमितरत्रावहादिति पाठः। ये पन्थानो बहवो देवयाना अन्तरा द्यावापृथिवी सञ्चरन्ति। तेषामज्यानिं यतमो वहाति तस्मै मा देवाः परि धत्तेह सर्वे ॥ इत्याथर्वणो मन्त्रः (अ स ६, ५५, १ ) प्रायेण तन्मन्त्राशयेन तुल्यार्थः।

हे सर्वे देवाः नः अस्मान् इह प्रकृते कर्मणि परिदत्त समर्पयत। कस्मै—तस्मै इति। कस्मै—यः पन्थाः तेषां पथां मध्ये आवहात् प्रापयति। किञ्च अज्यानिम् अहानिम् न विद्यते हानिर्यस्मिन् प्रदेशे तं प्रदेशम्। अजीजिम् अनभिभवम्। न विद्यते अभिभवो यस्मिन् देशे तं प्रापयतीत्यर्थः। तेषामिति केषाम्—ये चत्वारः पथयः पन्थानः। किम्भूताः—अन्तरा द्यावापृथिवी वियन्ति द्यावापृथिव्योर्मध्ये विविधप्रकारेण गच्छन्ति। पुनः किम्भूताः—देवयानाः देवानामिन्द्रादीनां गमनं यैः पथिभिर्भवतीत्यर्थः ॥ २६६ ॥

स्थालीपाकेनाग्रयणहोमानन्तरं पारस्करः [ पा गृ ३, १, ३ ]

स्थालीपाकस्याग्रयणदेवताभ्यो हुत्वा जुहोति स्विष्टकृते च

**स्विष्टमग्ने अभि तत् पृणीहि विश्वाश्च देवपृतना हविश्च।**

**सुगन्नु पन्थां प्रदिशन्न एहि ज्योतिष्मध्येह्यजरं न**

**आयुः[1] ॥ २६७ ॥**

[ काठकस २, १५। तै ब्रा २, ४, १, ४। पा गृ ३, १, २ ]

नु हे अग्ने ज्योतिष्मन् ज्योतिषामन्तरात्मन् सारभूत इति यावत्। नः अस्माकं पन्थां पन्थानं प्रदिशन् प्रकाशयन् एहि आगच्छ। किम्भूतं पन्थानम्—सुगम् सुखेन गम्यम्। किञ्च नः अस्माकम् अजरं जराशून्यं नित्ययौवनशालि आयुः। धेहि प्रतीहि चिन्तय देहीत्यर्थः। न केवलमेवम्। तत् स्विष्टं शोभनमीप्सितं नवान्नप्राशनजनितमारोग्यं हविश्च देवेभ्योऽस्मद्दत्तनवान्नरूपहविषा विश्वा देवपृतनाः सकलं देवसैन्यम् अभिपृणीहि सर्वतस्तर्पय ॥ २६७ ॥

संस्रवप्राशने पारस्करः [ पा गृ ३, १, ४ ]—अथ प्राश्नाति। अग्निः प्रथमः प्राश्नात्विति।

**अग्निः प्रथमः प्राश्नातु स हि वेद यथा हविः।**

**शिवा अस्मभ्यमोषधीः कृणोतु विश्वचर्षणिः ॥ २६८ ॥**

[ काठक सं १३, १५। तै ब्रा २, ४, ८, ७। गो गृ ३, ८, २९। पा गृ ३, १, ४ ]

---

१ मन्त्रस्यास्य द्वितीयचतुर्थचरणयोः पाठा यथाक्रम पारस्करगृह्यसूत्रे विश्वांश्च देवः पृतना अभिष्यत्' तथा 'ज्योतिष्मद्धेह्यजरं न आयुः' इति। तैत्तिरीयब्राह्मणे पुनस्तयोरेव चरणयोः पाठाः 'विश्वा देव पृतना अभिष्य' तथा 'ज्योतिष्मद्धेह्यजरं न आयुः' इति। पृणीहीत्यत्र काठकसंहितायां गृणीहीति तैत्तिरीयब्राह्मणे च पृणाहीति पाठौ।

जाठरोऽग्निर्देवता। अनुष्टुप् छन्दः। श्यामाकचरुप्राशने विनियोगः।

अग्निः जाठरो वह्निः प्राश्नातु प्रकर्षेण भुङ्क्ताम्। हि यस्मात् सः प्रथमः अग्रः वेद जानाति। यथा हविः यादृशं हविस्तज्जानातीति सम्बन्धः। किञ्च शिवाः सुखकरीः। अस्मभ्यम् अस्मदर्थम्। ओषधीः ग्राम्या आरण्याश्च। कृणोतु करोतु। किम्भूतो जाठरोऽग्निः—विश्वचर्षणिः विश्वस्य जगतो द्रष्टेत्यर्थः॥ ३६८॥

**भद्रान्नः श्रेयः समनैष्ट देवास्त्वयावसेन समशीमहि त्वा।**
**स नो मयोभूः पितेवा विशस्व शं तोकाय तन्वै**
**स्योनम्[1] ॥ ३६९॥**

[ तै स ५, ७, २, ११। पा गृ ३, १, ४ ]

त्रिष्टुप् छन्दो व्रीहयो देवताः हविःशेषप्राशने विनियोगः।

हे व्रीहे त्वा त्वां वयं समशीमहि सम्यक् विधिदृष्टेन कर्मणा संस्कृत्य भुञ्जीमहि। किम्भूतेन—त्वया अवसेन सम्बलेन त्वयैव पाथेयभूतेन। त्वामेव नवं नवं वर्षशतं यावद्वयमश्नीमेत्यर्थः। स त्वम् अस्माभिः प्राशितः सन् नः अस्मान् आविशस्व प्रविश। किम्भूतस्त्वम्—मयोभूः सुखरूपः। क इव—पितेव। यथा पिता पुत्रं सुखरूपेण प्रविशति तथा त्वमप्यस्मानित्यर्थः। किञ्च हे देवा इन्द्रादयः यूयं नः अस्मान् श्रेयः एतन्नवान्नप्राशनभवमारोग्यं समनैष्ट सम्यक् प्रापयत। किम्भूतान् नः—भद्रान् नवान्नप्राशनार्हान्। तोकाय अपत्याय। शम् कल्याणम्। तन्वै शरीराय। स्योनं सुखं समनैष्ट प्रापयतेत्यभिसम्बन्धः। अत्र समनैष्टेति णीञ् प्रापण इत्यस्माल्लुङ्। छान्दसत्वादपरस्मैपदेऽपि वृद्धिः। तोकाय तन्वै इति चतुर्थी चाशिष्यायुष्य° (पा २, ३, ७३) इति चतुर्थी। समशीमहीति अश भोजन इत्यस्माल्लुङ्। आत्मनेपदोत्तमपुरुषबहुवचनम्। बहुलं छन्दस्यमाङ्योगेऽपीति (पा ६, ४, ७५) बहुलवचनान्नाड़ागमः॥ ३६९॥

---

१ तैत्तिरीयसंहितायां (५, ७, २, ११) तैत्तिरीयब्राह्मणे (२, ४, ८, ७) च 'स नो मयोभूः पितो वा विशस्व शं तोकाय तनवे स्योनः' इति तथा काठकसंहितायां (१३, १५) 'स नः पितो मधुमाँ आविशेह तन्वे न एधि' इति पाठः। मन्त्रब्राह्मणस्य (२, १, १२) कुत्रचित् पुस्तके (सामश्रमिसंस्करणे) हलायुधव्याख्याताः पाठाः कुत्रचिद्वा (Jorgensen p. 6) 'पितवा विशस्व' इति 'स्योनः' इति च पाठा दृश्यन्ते। मत्परिशोधितं संस्कृतमहाविद्यालय प्रकाशितं छान्दोग्यब्राह्मणं (११९ पृः) द्रष्टव्यम्।

अन्नपत इत्यनेन मन्त्रेण प्राशने पारस्करः [ पा गृ ३, १, ५ ] अन्नपतीयया वेति

अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः ।
प्र प्र दातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे
विश्वकर्मणे स्वाहा ॥ ३७० ॥

[ वा स ११, ८३ । का स १२, ८४ । पा गृ ३, १, ५ ]

हे अन्नपते अग्ने अन्नस्य भागं नः अस्मभ्यं देहि। किम्भूतस्य—अनमीवस्य—अमीवः व्याधिः सोऽस्मिन्नास्तीत्यनमीवः—अव्याधिकारिण इत्यर्थः। पुनः किम्भूतस्य—शुष्मिणः शुष्म बलं तदस्मिन्नस्तीति तस्य बलयुक्तस्येत्यर्थः। तथा हे अन्नपते प्र प्रदातारं तारिषः अन्नस्य प्रकर्षेण दातारं तारय वर्धय। प्रप्रेति द्वितीयः प्रशब्दो दानस्यातिशयख्यापनार्थः। तथा हे अन्नपते नः अस्माकं द्विपदे भार्यापुत्रादिपरिजनाय चतुष्पदे गवादिपशवे च ऊर्जम् अन्नं धेहि देहि। अस्मदीयभार्यादिपरिजनायारोग्यकारि बलकारि चान्नं देह्यन्नदातारं च वर्धयेत्यग्नौ याच्ञा वाक्यार्थः। अत्र किं देहीति कर्मपदस्याश्रवणादन्नस्येति षष्ठीमात्रश्रवणाच्च भागमिति कर्मपदमध्याहार्यम् ॥ ३७० ॥

ततो यवप्राशने पारस्करः [ पा गृ ३, १, ६ ] अथ यवानामेतमु त्यमिति ।

एतमु त्यं मधुना संयुतं यवं सरस्वत्या अधिवनाव चर्कृधि[1] ।
इन्द्र आसीत् सीरपतिः शतक्रतुः कीनाशा आसन् मरुतः
सुदानवः ॥ ३७१ ॥

[ काठक सं १३, १६ । तै ब्रा २, ४, ८, ७ । पा गृ ३, १, ६ ]

शतक्रतुः देवराजः सीरपतिः आसीत् कर्षणस्य कारयिता अभवत्। कीनाशा आसन् मरुतः वायवः कर्षका अभवन्। किम्भूताः—सुदानवः शोभनस्य भोगस्य दातारः। कस्मिन् देशे—सरस्वत्या अधिवना सरस्वत्या नद्या उपरिवनेषु यवोत्पादनमभूत् यस्मात्तस्मात्। हे इन्द्र एतम् उ त्यं यवम् मधुना मधुरेण रसेन संयुतं संमिश्रम् अवचर्कृधि अत्यर्थं पुनः पुनः कुरु। तदनेन यवप्रशंसा कृता। अत्राधिवनेति अधिवनमित्येतस्मिन्नर्थे

१ काठकसंहितायाम् ( १३, १५ ) अधि मानावचक्रुः, अथर्ववेदे (६, ३०, १) सरस्वत्यामधि मणावचर्कृषुः, तैत्तिरीयब्राह्मणे (२, ४, ८, ७) अधिमनावचर्कृषुः, मन्त्रब्राह्मणे ( २, १, १६) सायणीयभाष्ये अधिमनावचक्रुः, पारस्करगृह्यसूत्रे (३, १, ६) अधिवनाय चक्रुः इति पाठा दृश्यन्ते। मन्त्रब्राह्मणे गुणविष्णु-भाष्ये पुनरधिवनाव चर्कृधि इत्येव पाठः। छान्दोग्यब्राह्मणे (१२३ पृः) द्रष्टव्यम्।

सुपां सुलुगिति (पा ७, १, ३९) सप्तम्येकवचने आकारः। अवचक्षीति क्षधातोर्यङ्लुगन्ताल्लोट् सिप् ॥ ३७१ ॥

इति नवान्नप्राशनमन्त्रव्याख्या

## गृहोपस्थानम्

प्रोष्य गृहोपस्थाने पारस्करः [पा गृ १, १८, १]

प्रोष्येत्य गृहानुपतिष्ठते गृहा मा बिभीतेति।[1]

**गृहा मा बिभीत मा वेपध्वमूर्जं बिभ्रत एमसि।**
**ऊर्जं बिभ्रद्वः सुमनाः सुमेधा गृहानैमि मनसा मोदमानः ॥ ३७२ ॥**

[वा स ३, ४१। का स ३, ४८। पा गृ १, १८, १]

हे गृहा मा बिभीत मा भयं कुरुत। मा वेपध्वम् मा कम्पं कुरुत। गृहाधिकारिणोऽभावाद् य उद्वेग आसीत् तं मा कुरुतेत्यर्थः। यतः कारणात् गृहपतिरहं गृहान् वः युष्मान् गृहान् एमि आगच्छामि। किम्भूतान् युष्मान्—ऊर्जं बिभ्रतः अन्नं धारयतः। अन्नादिसंयुक्तान् युष्मान् गृहान् समागच्छामीत्यर्थः। किम्भूतोऽहम्—ऊर्जं बिभ्रत् अन्नं धारयन्। न केवलमन्नमात्र धारयन्नहमागच्छाम्यपि तु सुमनाः अनुद्विग्नमनाः सुमेधाः शोभनबुद्धिः मनसा मोदमानः प्रमोदयुक्तश्चाहमागच्छामि। अयं वाक्यार्थः।—हे गृहा धनधान्यादियुक्तानां युष्माकं मदीयानवस्थानाद् यद्भयमासीत्तत्त्यजत। अयमहमधिकधनधान्यादिकं लब्ध्वातिस्फीतहृदयः पुनरपि समागत्य स्थितोऽस्मि। अनेन धनधान्येन यूयं सुपूर्णाः कर्तव्या इत्यभिप्रायः ॥ ३७२ ॥

**येषामध्येति प्रवसन् येषु सौमनसो बहुः।**
**गृहानुप ह्वयामहे ते नो जानन्तु जानतः ॥ ३७३ ॥**

[वा स ३, ४२। का स ३, ४९। मा गृ २, ४, ५, द्रः]

येषां गृहाणाम् प्रवसन् प्रवासी [2]अध्येति स्मरति[2] यान् गृहान् सुखहेतुतया प्रवासो स्मरति। येषु गृहेषु सौमनसो बहुः बहुप्रकारं सौमनस्यं मनोनिर्वृतं भवति तान् गृहान् उपह्वयामहे वयमाह्वयामः। ते च गृहा

---

१ पारस्करगृह्यसूत्रे तु प्रोष्येत्य गृहानुपतिष्ठते पूर्ववदिति पाठः। तत्र पूर्ववदित्यनेन गृहा मा बिभीतेति गृहानुपैतीति कात्यायनश्रौतसूत्रोक्तिः (२, १२, २०-२१) उपलक्ष्यत इति पारस्करगृह्यभाष्यकर्तां कर्काचार्याणामभिप्रायः।

२ त—मध्येऽभिस्मरति।

आहूताः सन्तो नः अस्मान् जानन्तु प्रवासात् समागतान् जानन्त्वित्यर्थः। किञ्च तानस्मान्—जानतः अस्मिन् गृहविषये प्रत्यभिज्ञाविषयानस्मानित्यर्थः ॥ ३७३ ॥

अजगोस्पर्शमन्त्रः—

**उपहूता इह गाव उपहूता अजावयः ।**

**अथो अन्नस्य कीलाल उपहूतो गृहेषु नः ॥ ३७४ ॥**

[ वा स ३, ४३ । का स ३, ५० ]

इह नः अस्माकं गृहेषु गाव उपहूताः। तथा अजावयः छागमेषाश्च उपहूता आहूताः। प्रवासं कृत्वा समागतैरस्माभिर्गोवत्साजप्रभृतयः कुशलप्रतिसन्धानार्थमाहूता इत्यर्थः। अथो अनन्तरम् अन्नस्य कीलालो रस उपहूत आहूतः। गोवत्साजावीनामाह्वानानन्तरं गृहावस्थितमिष्टान्नरसपानादिकमुपभोगायास्माभिराहूतमिति यावत् ॥ ३७४ ॥

गृहप्रवेशने पारस्करः[१]—क्षेमाय व इति प्रविशति ।

**क्षेमाय वः शान्त्यै प्रपद्ये शिवं शग्मं शं योः शं योः ॥ ३७५ ॥**

हे गृहा वः युष्मान् क्षेमाय अविनाशाय प्रपद्ये प्रविशामि। न केवलं क्षेमाय अपि तु शान्त्यै सर्वापच्छान्त्यर्थञ्च। तथा शंयोः सुखकामस्य शिवं शग्मं प्रयच्छथेत्यध्याहार्यम्। शग्मं शिवं च सुखनामनी[२] शंयोरिति वारद्वयोदाहरणमादरातिशयार्थम् ॥ ३७५ ॥[३]

पुत्रदर्शने पारस्करः [ पा गृ १, १८, २ ] पुत्रं दृष्ट्वा जपत्यङ्गादङ्गात् सम्भवसीति।

**अङ्गादङ्गात् सम्भवसि हृदयादधि जायसे ।**

**आत्मा वै पुत्रनामासि स जीव शरदः शतम् ॥ ३७६ ॥**

[ पा गृ १, १८, २ । आप म २, ११, ३३ । म ब्रा १, ५, १७—वेदो वै पुत्रनामासि ]

हे पुत्र यस्त्वम् अङ्गात् अङ्गात् शिरोग्रीवादिभ्यः सम्भवसि समुत्पन्नो भवसि। हृदयात् सर्वगात्रेभ्यः श्रेष्ठात् अधिजायसे उत्पन्नो भवसि। यस्त्वम् आत्मैव पुत्रनामा असि। स त्वमेवम्भूतः शरदः शतं वर्षशतं जीव ॥ ३७६ ॥[४]

---

१ पारस्करनाम्नोद्धृतं गृहप्रवेशनविधायकं वचनमिदं कात्यायनश्रौतसूत्रे ( ४, १२, २२ ) दृश्यते—क्षेमाय व इति प्रविशतीति।

२ निघण्टुः ३, ६, १२।१८।

३ अ-क-प-पुस्तकेषु व्याख्यानमिदं न दृष्टं लिखितञ्च—सर्वं सुगममिति।

४ इदमपि मन्त्रव्याख्यानं अ-क-प-पुस्तकेषु न दृष्टं लिखितञ्च अस्य व्याख्या पूर्वमेव कृतेति।

पुत्रमूर्धाभिघ्राणे पारस्करः [ पा गृ १, १८, ३ ]

अथास्य मूर्धानमवजिघ्रति प्रजापतेष्ट्वा हिंकारेण गवां त्वा हिंकारेण चेति।

**प्रजापतेष्ट्वा हिंकारेणाव जिघ्रामि सहस्रायुषासौ जीव शरदः शतम् ॥ ३७७ ॥**

असौ हे अमुकनामक पुत्र त्वा त्वां प्रजापतेः ब्रह्मणः हिंकारेण मङ्गलविधायकहिंकारमन्त्रेण अवजिघ्रामि चुम्बामि। स त्वं मया चुम्बितः सन् सहस्रायुषा अनेकसंख्यायुषा शरदः शतं जीवेत्याशंसा वाक्यार्थः॥ ३७७ ॥

**गवां त्वा हिंकारेणाव जिघ्रामि सहस्रायुषासौ जीव शरदः शतम् ॥ ३७८ ॥**

[ कौषी ब्रा उप २, ११। पा गृ १, १८, ३ ]

असौ हे अमुकनामक पुत्र त्वा त्वाम् अवजिघ्रामि मूर्ध्नि चुम्बामि। अहं पितेत्यर्थात्। केन—गवां हिंकारेण। यथा गावो वनादागताः स्वपुत्रकानाभिमुख्येनावजिघ्रन्त्येवमहमपि पिता त्वामवजिघ्रामि। किञ्च सहस्रायुषा विस्तारेण शरदः शतं जीवेति[1] ॥ ३७८ ॥

पुत्रदक्षिणकर्णे जपे पारस्करः [ पा गृ १, १८, ५ ] दक्षिणेऽस्य कर्णे जपति अस्मे प्रयन्धीति।

**अस्मे प्र यन्धि मघवन्नृजीषिन्निन्द्र रायो विश्ववारस्य भूरेः।**
**अस्मे शतं शरदो विश्ववेदा अस्मे वीरान्छश्वत इन्द्र शिप्रिन् ॥ ३७९ ॥**

[ ऋ ३, ३६, १० ]

हे मघवन् इन्द्र। किम्भूत—ऋजीषिन् यज्ञोपयुक्तसोमशेषभागिन्। अस्मे अस्मै पुत्राय। रायः द्रव्यम्। तथा भूरेः भूरि सुवर्णम्। प्रयन्धि प्रयच्छ। किम्भूतस्य भूरेः—विश्ववारस्य विश्वैराकाङ्क्षितस्य। अस्मे अस्मै पुत्राय शरदः शतं प्रयन्धि शतवर्षाण्यायुः प्रयच्छ। तथा विश्ववेदाः[2] सर्ववेदान् प्रयच्छ।

---

१ क-ज-भ-पुस्तकेष्वत्र सुबोधोऽयमिति लिखित्वा मन्त्रस्य व्याख्यानं न दत्तम्।

२ ऋग्वेदे ( ३, ३६, १० ) तथा पारस्करगृह्ये ( १, १८, ४ ) विश्ववेदा इत्यत्र जीवसे धा इति पाठः।

यावदेव वेदज्ञानं परिकल्पयेत्यर्थः। तथा हे इन्द्र। किम्भूत—शिप्रिन् जलयुक्त। अस्मै पुत्राय वीरान् वीर्ययुक्तसन्ततीः प्रयच्छ। किम्भूतान्—शश्वतः शाश्वतान् दीर्घायुष इति यावत्। हे मघवन् हे इन्द्रेति सम्बोधनद्वयमादरातिशय-प्रतिपादनार्थम्। अस्मै इति प्राप्ते अस्मे इति छान्दसत्वात्। प्रयन्धीति यमु उपरमे लेट् सिप्। बहुलं छन्दसीति सिपो (पा ७, ३, ९७) लुक्। ऋजीषिन्निति ऋजीषं सोमशेषकल्कं 'समुद्रे त' इत्यृजीषकुम्भं प्लावयतीति कात्यायनवचनात्[1]। राय इति द्वितीयार्थे षष्ठी। विश्वैर्वि॑यत इति विश्ववारः छान्दसोऽकारः। भूरेरिति द्वितीयार्थे षष्ठी। वेदानिति प्राप्ते वेदा इति सुपां सुपो भवन्तीति वचनात्। 'निदाघसलिले शिप्रं शिप्रा स्यात् सरिदन्तरे' इत्यभिधानम् ॥ ३७९ ॥

पुत्रस्य वामकर्णे जपे पारस्करः [ पा गृ १, १८, ५ ] सव्ये कर्णे जपति इन्द्र श्रेष्ठानीति।

**इन्द्र श्रेष्ठानि द्रविणानि धेहि चित्तिं दक्षस्य सुभगत्वमस्मे। पोषं रयीणामरिष्टिं तनूनां स्वाद्मानं वाचः सुदिनत्व-मह्नाम् ॥ ३८० ॥**

हे इन्द्र श्रेष्ठानि उत्तमानि द्रविणानि धनानि। चित्तिं चैतन्यम्। दक्षस्य दक्षत्वम्। सुभगत्वं सकलजनप्रियत्वम्। एतत् सर्वम् अस्मे अस्मै पुत्राय धेहि धारय। किञ्च पोषं रयीणाम् धनानां पुष्टिम्। अरिष्टिं तनूनाम् अङ्गानामारोग्यम्। स्वाद्मानं वाचः वचनस्य स्वादिमानं माधुर्यम्। अह्नाम् सुदिनत्वम् दिवसानां शुभत्वम्। अस्मै पुत्राय धेहीति पूर्वक्रियासम्बन्धः। दक्षस्येति कर्मणि षष्ठी। विनापि भावप्रत्ययेन दक्षशब्दे दक्षत्वमभिधीयते ॥ ३८० ॥

इत्यावसथिक-धर्माधिकृत-श्रीहलायुधकृतौ ब्राह्मणसर्वस्वे [2]आवसथ्याद्यन्त्येष्टि-कर्मणां निबन्धो मन्त्रव्याख्या च[2] ॥

---

१ का श्रौतसूत्रम् १०, ९, १।

२ न—व—ऽवसथ्याधानादि समाप्तम्। एतयोः पुस्तकयोरत्रैव समाप्तिः। त-पुस्तके त्वितः परं पारस्करीयावसथ्याधानादिपद्धतिर्मुद्रापिता। एतदनन्तरवर्तिनः 'समाप्तिश्चीकास्तु तत्र वाऽन्यत्र वा नाऽद्यापि मुद्रापिताः उपलभ्यन्ते।

## समाप्तिश्लोकाः

सत्याननेऽपि शशिविभ्रमभाति येन
हव्यं मुखे मखभुजः परिशीलयन्ति ।
अर्के स्थितेऽपि दुरितच्छिदि पावकं यं
विश्वे गृणन्ति दहनः स दहत्वघं वः ॥
एषा महेन्द्रसमगौड़नरेन्द्रदत्त-
धर्मद्वयद्विगुणपौरुषसम्भृतेन ।
धर्माधिकारिकधनञ्जयनन्दनेन
स्मार्ताग्निपद्धतिरकारि हलायुधेन ॥
आधानाद्यन्तकालेष्टिपर्यन्तोऽग्निमतां विधिः ।
कृत्स्नस्य विषयस्याग्नेः पद्धताविह दर्शितः ॥

॥ इत्यावसथिक-धर्माधिकृत-श्रीहलायुधेन कृतं
**ब्राह्मण-सर्वस्वं समाप्तम् ॥**

---

क-ज भा— धीऽभिमती ।

# अथावसथ्याधानादिपद्धतिः[1]

अथेदानीं वाजसनेयिनां पारस्करोक्तावसथ्याधानादिपद्धतिर्लिख्यते। तत्र प्रथमं कृतनित्यक्रियो यजमानो गृह्योक्तकालाकृताग्न्याधानो निबन्धनानुसारेण प्रायश्चित्तं विधाय गणाधिपगौर्यादिमातृकापूजां वसोर्धाराश्च दत्त्वाग्न्याधानमङ्गिकावधानसायम्प्रातर्होम-निमित्ततन्त्रेणैव श्राद्धं कृत्वाहतं वासोयुगं परिदध्यात्। सर्वाश्च यजमानपत्न्योऽहतं वासोयुगं परिदध्युः। ततो यजमानश्चतुर्दशाङ्गुलमूलभ्रमणेन वर्तुलं स्थण्डिलं चतुरङ्गुल-विस्तारं प्रादेशोच्छ्रायं त्रिमेखलावलयेन वेष्टयित्वा तन्मध्ये परिसमूहनादिपञ्चपदार्थान् कृत्वा कुण्डपश्चिमे प्रागग्रकुशोपर्युदगग्रामरणिं तदुत्तरे तथैवोत्तरारणिञ्च संस्थाप्यो-त्तरारणितोऽष्टाङ्गुलं प्रमन्थं छेदयित्वा चात्रमूले संयोज्याधरारणेर्मूलादष्टाङ्गुलं परित्यज्य द्व्यङ्गुलेऽरणिगुल्फपूर्वभागे गर्तं कृत्वा तत्र प्रमन्थं संयोज्य तदुपरि यजमानेनोदगग्र ओविलीयन्त्रे धूयमाने यथाज्येष्ठं सर्वा एव पत्न्यः पत्नीषु खिन्नास्वन्ये विशुद्धब्राह्मणा गोवालशणमिश्रेण व्याममात्रेण त्रिवृत्तेन नेत्रेण चात्रं त्रेधा वेष्टयित्वा प्रदक्षिणक्रमेण यथा प्राच्यामग्नेर्जातिर्भवेत्तथा मन्थयेयुः। एवं सञ्जातमग्निं संस्कृतदेशे कुण्डमध्ये संस्थाप्य ब्रह्मवरणं ब्रह्मोपवेशनं प्रणीताप्रणयनं सकृदाच्छिन्नकुशैरीशानादितः कुण्डास्तरणं कृत्वा अग्नेरुत्तरे चरोरन्तरमर्थवत् पात्रासादनं कुर्यात्। तद्यथा—पवित्रच्छेदनकुशाः प्रोक्षणी-पात्रमाज्यस्थाली चरुस्थाली सम्मार्जनकुशा उपयमनकुशाः समिधस्तिस्रः प्रादेशमात्राः स्रुव आज्यन्तण्डुलाश्चरुश्च। तदनु पवित्रे कृत्वा प्रोक्षणीपात्रे जलं दद्यात्। ततः पवित्राभ्यां प्रोक्षण्युत्पवनम्। पुनस्तत्रैव पवित्रस्थापनं सव्यहस्तकरणं तदुद्दीक्षणम्। तज्जलेन तस्यैव प्रोक्षणम्। आज्यमधिश्रित्य तदुत्तरे चरुमधिश्रयेत्। तदनु पर्यग्निकरणम्। अधिश्रिते स्रुवप्रतपनं सम्मार्जनं प्रणीतोदकेनाभ्युक्षणम्। पुनः प्रतपनम्। प्रोक्षण्युत्तरे भूमौ स्थापनम्। तदनु शृते चरावाज्यमुद्वास्य तदुत्तरे चरुमुद्वासयेत्। ततः पवित्राभ्यामाज्य-मुत्पूयावेक्ष्य प्रोक्षणीश्चोत्पूयोपयमनकुशान् वामहस्ते कृत्वा तिष्ठन् समिधमग्नौ चाधाय पवित्रहस्तेन प्रोक्षणीजलेनेशानादितः सकृदग्निं पर्युक्ष्य स्रुवमादाय ब्राह्मणोऽन्वारब्धे सत्याघाराज्यभागौ जुहुयात्।

ततः परिष्कृतबर्हिरग्नौ हुत्वा तूष्णीं प्रोक्षणीपात्रस्थशेषप्राशनं ब्रह्मणे वरदानं ब्राह्मणभोजनमच्छिद्रावधारणञ्च। इत्यावसथ्याधानादिपद्धतिः॥

॥ इति श्रीहलायुधकृत ब्राह्मण-सर्वस्वं समाप्तम् ॥

---

1 पद्धतिरियं ङ-ज-झ-प-पुस्तकेषूपलभ्यमाना ग्रन्थ-परिशिष्टरूपेण लिखितेत्यनुमीयते।

# ब्राह्मण-सर्वस्व-गतानां वैदिक मन्त्राणां प्रतीकानि

# उद्धृतवचनानामनुक्रमणिका

अत्रानुक्रमणिकायां ब्राह्मणसर्वस्वोद्धृतानां वचनानामाकरभूताः केचन ग्रन्था ग्रन्थकृतस्तत्र तत्र सङ्केताक्षर-सूचिता इति तेषां नामानि वर्णानुक्रमेण पुरतोऽवस्थाप्यन्ते —

अग्निपुराणम्, अङ्गिराः, अत्रिस्मृतिः, अनुक्रमणिका, अभिधानम्, अमरकोशः आपस्तम्बधर्मसूत्रम्, आपस्तम्बस्मृतिः, आश्वलायनः, उवटभाष्यम्, उशनःस्मृतिः, ऋग्विधानम्, ऋष्यशृङ्गः, कठशाखा, कर्कभाष्यम्, कात्यायनपरिभाषासूत्रम्, कात्यायनश्राद्धसूत्रम्, कात्यायनश्रौतसूत्रम्, कात्यायनस्मृतिः, कूर्मपुराणम्, गदव्यासः, गुणविष्णुः, गौतमधर्मसूत्रम्, गोभिलगृह्यसूत्रम्, गोभिलसुतसंहिता, छन्दोगपरिशिष्टम्, छन्दोगब्राह्मणम्, जातूकर्ण्यः, जाबालस्मृतिः, दक्षस्मृतिः, देवलस्मृतिः, नरसिंहपुराणम्, नारद, निघण्टुः, निरुक्तम्, पद्मपुराणम्, पराशरस्मृतिः, पाणिनिः, पारस्करगृह्यसूत्रम्, पारस्करभाष्यकृत, पैठीनसिस्मृतिः, बह्वृचपरिशिष्टम्, बृहद्यमस्मृतिः, बृहद्विष्णुः, बृहल्लिङ्गपुराणम्, बृहस्पतिस्मृतिः, बौधायनधर्मसूत्रम्, ब्रह्मपुराणम्, ब्राह्मणम्, भविष्यपुराणम्, मत्स्यपुराणम्, मनुसंहिता, मरीचिः, महाभारतम्, मार्कण्डेयपुराणम्, मैत्रायणीयपरिशिष्टम्, यजुर्वेदभाष्यम्, यज्ञपार्श्वः, यतिधर्मः, यमः, याज्ञवल्क्यसंहिता, योगियाज्ञवल्क्यः, रहस्यम्, रहस्यप्रायश्चित्तम्, लघुयमः, लघुविष्णुः, लघुहारीतः, लिङ्गपुराणम्, वराहपुराणम्, वसिष्ठः, वायुपुराणम्, विश्वामित्रः, वासुदेवः, विष्णुधर्मोत्तरम्, विष्णुपुराणम्, विष्णुस्मृतिः, वृद्धशातातपः वृद्धापस्तम्ब, वेदव्यासः, व्यासः, व्याससंहिता, शङ्खः, शङ्खलिखितौ, शतपथब्राह्मणम्, शाट्यायनः, शातातपः, शाम्बपुराणम्, शारीरब्राह्मणम्, शुद्धिदीपिका, शौनक, श्रुतिः, संवर्तः, संहिता, सुमन्तुः, स्कन्दपुराणम्, स्नानसूत्रम्, हारीतः।

# अशुद्धिशोधनम्

[ कतिचनात्यन्तमुद्रेजिका अशुद्धयोऽत्र प्रदर्श्यन्ते ]

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १७ | ६ | तत्र नारदः | छन्दोगपरिशिष्टम् (१, १०, ३) |
| २२ | १८ | गार्ग्यिकीये | वार्ङ्गिकीये |
| २४ | ९ | ऊर्जें | ऊर्जं |
| २५ | ११ | आपोः | आपो |
| ६२ | २९ | दशे | दृशे |
| १०३ | २० | घस्रयोः | धस्रयोः |
| १२७ | ९ | ज्यैष्ठाथ | ज्यैष्ठ्याय |
| २२९ | १ | आयुन्तस्ते | आयुष्मन्तस्ते |
| २४३ | ९ | अग्नये | अग्ने |
| २५६ टिप्पण्याम् | २९ | मेवामनुसरति | मेवानुसरति |
| २६५ | १ | सुषुभ्नः | सुषुम्णः |
| २७६ | २३ | रमः | रसः |
| २८८ | २ | स्फारश्च | स्फारश्च |
| ३१० | १ | स्वाद्वीरस् | स्याद्वीरस् |